❀ श्रीराधाकृष्णाभ्यान्नमः ❀

# -: वेदान्ततत्त्वसमीक्षाख्यम् :-

# श्रीगोपालतापिन्युपनिषद्भाष्यम्



यच्चेदं मिथिलामहीमण्डलान्तर्गतढंगाहरिपुरग्रामवास्तव्य-
न्यायवेदान्ताचार्य्यमैथिलझोपाख्यश्रीभगीरथ-
शर्मणा विरचितं श्रीकृष्णाय समर्पितं चेति ।

तच्चेदं वृन्दावनवास्तव्यैः श्रीविहारिदासमहोदयैः
स्वद्रव्यव्ययेन मुद्राप्य प्रकाशितम् ।

---



---

( प्रति ५०० सं० २००६ ] खिष्टाब्दा: १६४६ [ मूल्यम् ३) रूप्यकत्रयम् ।
प्राप्तिस्थान— पं० विहारीदासजी त्यागी । गौतमऋषि आश्रम'
वराहघाट, वृन्दावन, जि० मथुरा यु० पी०

॥ श्रीराधाकृष्णाभ्यान्नमः ॥

## — वेदान्ततत्त्वसमीक्षाख्यम् —

# गोपालतापिन्युपनिषद्भाष्यम्।

तच्चेदं मिथिलामहीमण्डलान्तर्गतढंगाहरिपुरग्रामवास्तव्य-न्यायवेदान्ताचार्य्यमैथिलझोपाख्यश्रीभगीरथ-शर्मणा विरचितं श्रीकृष्णाय समर्पितं चेति।



( प्रति ५०० ) सं. २००६ ] खिष्टाब्दाः। १९४९ [ मूल्यं ३) रुप्यकत्रयम्।
प्राप्तिस्थान—पं० बिहारीदासजी त्यागी। गौतमऋषि आश्रम,
वराहघाट, वृन्दावन, जि० मथुरा; यू. पी.

श्रीसर्वेश्वरो विजयते ।

॥ श्री १०८ भगवन्निम्बार्कमहामुनीन्द्राय नमः ॥

## ॥ समर्पणम् ॥

अनादिवैदिकसत्सम्प्रदायप्रवर्तकश्रीभगवन्निम्बार्क—
महामुनीन्द्रचरणाचरणाश्रिताश्रितश्री १०८
श्रीचतुरचिन्तामणिदेवाचार्य्य
उपनाम ( श्रीनागाजी महाराज )
चरणाचरणाश्रितपरमविरक्त—
पं. श्रीविहारिदासजी महोदयानां
करकमलयोरिदं—

# श्रीगोपालतापिन्युपनिषद्भाष्यम्,

तदीयसकलद्रव्यव्ययेनैव
मुद्रणद्वारा
लोकलोचनगोचरतामुपगतं
सादरं सप्रेम च
समर्प्यते

—*—

| शुभतिथिः<br>विजया दशमी<br>सं. २००६ वै. | समर्पकः—<br>श्रीभगीरथझा मैथिलः |
|---|---|

(मू० ३)

प्राप्तिस्थानम्
पं, विहारीदासजी "त्यागी"
गौतमऋषि आश्रम, वराहघाट, वृन्दाबन, मथुरा ।

# गोपालतापिन्युपनिषत् ।

(१) गोपालतापिन्युपनिषच्छब्देन निरतिशयपरिपूर्णस्य परमात्मनस्तादृशनिरतिशयस्वरूपगुणमाहात्म्यप्रकाशिका परा विद्यैवोच्यते। तथाहि "यो गोपाञ्जीवानासृष्टिपर्य्यन्तमालाति ह्यांतत्सद्गोपालो भवति" इति गोपालोत्तरतापिन्यामेव गोपालशब्दव्युत्पत्तेः । सोऽयं गोपालः परिपूर्णतम एव परमात्मा नांशकलादिरूपः । 'कः परमो देवः, कृष्णो वै परमं दैवतम्' तस्मात्कृष्ण एव परमो देवः, इत्यविशेषप्रश्नप्रतिवचनाभ्यामुपक्रमोपसंहाराभ्यां च पूर्वतापिन्याम्, उत्तरतापिन्यांच "योऽसौ जाग्रत्स्वप्नसुषुप्तिमतीत्य तुर्य्यातीतो गोपालः" इत्यादिना तथैव निर्णयात् ।। एवं तापिनीशब्दघटकतपधातुरपि—तादृशज्ञानविशेषार्थक एव । यथा–तैत्तरीये 'स तपोऽतप्यत ।। स तपस्तप्त्वा ।। इदꣳसर्वमसृजत ।। यदिदं किंच ।।" इत्यत्र प्रकरणानुकूलज्ञानविशेषार्थकः ।' तथाच तादृशज्ञानविशेषपरतपधातोस्ताच्छिल्ये णिनिप्रत्ययान्ङिब्व्यन्तस्तापिनीशब्दः, साक्षात्परब्रह्मवाचकगोपालशब्दसंयोगात् साक्षात्परब्रह्मस्वरूपगुणमाहात्म्यविषयकनिगूढज्ञानप्रकाशिका विद्यैव गोपालतापिन्युपनिषत्पदवाच्येति विज्ञायते ।' अत एव—

"कृषिर्भूवाचकःशब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परंब्रह्म कृष्ण इत्यभिधीयते ।। १ ।।
सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमोवेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ।।"

इति तत्स्वरूपगुणलक्षणाभ्यां विचारप्रस्तावः ।

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ।।' इति विचारपरिसमाप्तिश्चेति । अधिकं तु भाष्यमुखेनैव ज्ञातव्यमिति ।—

(२) सेयं गोपालतापिन्युपनिषत्, अथर्ववेदे पिप्पलादशाखायां ब्राह्मणभागे पठ्यते, इति सर्वोपनिदां टीकाकृतः प्रसिद्धतमा अद्वैतवेदान्तानुसारिणो नारायणभट्टाः । अन्ये च सर्वे तापिनीव्याख्यातारो विभिन्नसंप्रदायगता विद्वांसः'। नच प्रश्नोपनिषत्सत्त्वात्प्रतिषेध आशंकनीयः । एकस्यामपि शाखायामनेकोपनिषत्सद्भावे विरोधाभावात् । दृश्यंते हि परमप्रसिद्धायां तैत्तरीयशाखायां (१) चित्ति (२) शिक्षा (३) ऽऽनन्दवल्ली (४) भृगुवल्ली (५) नारायणोपनिषद्भेदात्पञ्चोपनिषदः । वाजसनेयशाखायां च (१) ईशावास्या (२) ग्निरहस्यबृहदारण्यकभेदाच्च विविधोपनिषद इति ।

(३) यच्चास्यामुपनिषदि परमपुरुषोपासनमुपदिष्टं तस्य नानाशाखोपसंहारेण सांगोपांगोपासनस्वरूपप्रकाशका अनेके कल्पग्रन्थाः ।, तत्र महर्षये गौतमाय परमर्षिणा नारदेनोपदिष्टं गौतमीयतन्त्रं बृहद्गौतमीयतंत्रं च प्रसिद्धतमे ।' तथा जगद्गुरुणा सनत्कुमारेणोपदिष्टं सनत्कुमारतंत्रं, सनत्कुमाराय सर्वगुरुणा शिवेनोपदिष्टा सनत्कुमारसंहिता, ज्ञानामृतसंहिताचेति, तेऽपि प्रसिद्धतमा एव कल्पग्रन्थाः । ते चैते आर्षग्रन्थाः सर्वशिष्टपरिगृहीताः प्रमाणमूर्धन्याश्चेति तंत्रसम्प्रदायविदां सुगोचर एवेतिबोद्धव्यम् ।

(४) तत्र हि प्रतीकग्रहणपूर्वकं गोपालतापिनीवाक्यं विचार्यते । यथा गोपालपूर्वतापिन्यां पठितम्—

"तदिह कादापो लात्पृथिवी ईतोऽग्निबिन्दोरिन्दुस्तत्संपातादर्क इति क्लींकारादसृजम्" इति वाक्यप्रतीकमादाय गौतमीयतन्त्रे द्वितीयाध्याये श्रीगोपालदशार्णमंत्रव्याख्यायां क्लींकारव्याख्याने—

क्लींकारादसृजद्विश्वमिति प्राह श्रुतेः शिरः ।
लकारात्पृथिवी जाता ककाराज्जलसंभवः ॥ १५ ॥
ईकाराद्वह्निरुत्पन्नो नादाद्वायुरजायत ।
बिन्दोराकाशसंभूतिरिति भूतात्मको मनुः ॥ १६ ॥

स्वशब्देन च क्षेत्रज्ञो हेति चित्प्रकृतिः परा ।
तयोरैक्यसमुद्भूतिर्मुखवेष्टेन वर्णकः ॥ १७ ॥
अत एव हि विश्वस्य लयः स्वाहार्णके भवेत् ।
गोपीति प्रकृतिं विद्याज्जनस्तत्त्वसमूहकः ॥ १८ ॥
अनयोराश्रयो व्याप्त्या कारणत्वेन चेश्वरः ।
सान्द्रानन्दं परंज्योतिर्वल्लभेन च कथ्यते ॥ १९ ॥
त्रिपादूर्ध्व उदैत्पुरुष इत्याहुः प्रथमा गिरः ।
बीजोच्चारणमात्रेण चित्स्वभावः प्रजायते ॥ २० ॥
वल्लभेन तु तद्दार्ढ्यं स्वाहयाऽज्ञानदाहनम् ।
इत्येवं कथितं तत्त्वं मुने वै ब्रह्मसम्मतम् ॥ इति ॥

अत्रहि स्फुटम् "क्लींकारादसृजम्" इति तापिनीवाक्यप्रतीकग्रहणपूर्वकं व्याख्यानम् "क्लींकारादसृजद्विश्वमिति प्राह श्रुतेःशिरः" इत्यादिना दृश्यते । "श्रुतेःशिरः" इत्यस्य वेदशिरः इति स्पष्टमर्थः । तच्चात्र गोपालतापिनीरूपमेव, तत्रैव तद्वाक्यपाठादिति । अत्र "त्रिपादूर्ध्व उदैत्पुरुष इत्याहुःप्रथमा गिरः।" इति पुरुषसूक्तप्रतीकग्रहणात्, प्रकृतमूलमंत्रस्य पुरुषसूक्तपरमार्थगर्भितत्वमप्युक्तम् । प्रणवार्थगर्भितत्वं तु "क्लींमोंकारयोरेकत्वं पठ्यते ब्रह्मवादिभिः" इति तापिन्यामेवोक्तम् ।

(५) एतेन श्रीशंकराचार्यैरव्याख्याततत्वादनतिप्राचीनत्वं स्यादितिकुकल्पनाऽवसरः पराहतः । श्रीशंकराचार्यतोऽपि प्राचीनतमे आर्षनिबन्धे गौतमीयतन्त्रादौ प्रतीकग्रहणपूर्वकं विस्तरेण व्याख्याततत्वादिति । किंच नहि श्रीशंकराचार्यैर्यावन्तो वेदा उपनिषदो वा व्याख्याताः । किन्तु यावदंशस्तेषां स्वसिद्धान्त उपयुक्ततमस्तावदंश एव व्याख्यातः । गोपालतापिन्यादीनां तन्मते उपासनाविषयकत्वेन ज्ञेयस्वरूपानिर्णायकत्वान्न व्याख्यातेति । नृसिंहतापिन्युपनिषदस्तु शेषे जगन्मिथ्यात्वप्रतिपादनेऽनुकूलतमत्वात्तद्व्याख्यानविषयत्वमिति वेदितव्यम् ।

(६) अत्र प्रामाणिकपाठभेदस्तु शाखाभेदात्समाधेयः। प्रसिद्धतमा एव बृहदारण्यके काण्वमाध्यन्दिनशाखाभेदात् बहुशो पाठभेदाः, तैत्तरीयके नारायणोपनिषदि, कौषीतकि-नृसिंहतापिन्यादौ चेति।

(७) तदस्यास्तापिन्याः श्रीसुन्दरभट्टनारायणभट्टजीवगोस्वाम्यादिकृताः प्राचीना अर्वाचीनाश्च बह्व्यष्टीकाः सन्त्येव, तथापि स्वमनःपरिशुद्धये मयाऽपि यथाबुद्धि टीकैका लिखिता, येयं भगवत्कृपया प्रकाशमागता। तदत्र यत्सुष्ठु लिखितं तदपि श्रीभगवत एव यदप्यसुष्ठु तदपि श्रीभगवत एव, अहन्तु कुलालचक्रवन्निमित्तमात्रम्।

चक्रस्य चक्रभ्रम्यादेः कुलालः कारणं यतः।
अतो न लिप्यते दोषैश्चक्रं घटगतैः किल। इति॥

— कृतज्ञता —

(८) परमुपकारभारं वहामः परमविरक्तानां परमभागवतानां श्रीविहारिदासमहोदयानां येषां सकलद्रव्यसाहाय्येनेदं पुस्तकं मुद्रणद्वारा लोकलोचनगोचरतामुपगतमिति।

ग्रन्थस्यास्य प्रणेता विदुषां वशंवदः

**श्रीभगीरथझा मैथिलः**

श्रीवृन्दावनधाम (विजया दशमी) सं २००६ वै०।

---

❀ श्रीसर्वेश्वरो जयति ❀

॥ श्रीनिम्बार्कमहामुनीन्द्राय नमः ॥

# संशोधकानामवधेयवचनम् ।

—o❀o—

अनन्तकोटिब्रह्माण्डाधिपतेः समस्तचराचरनियन्तुर्निखिलनिगमागमवेद्यस्य सकलसद्गुणगणार्णवश्रीसर्वेश्वरप्रभोः प्रसादाय कर्म ज्ञानं भक्तिश्चेति त्रीण्येव वेदप्रतिपादितानि साधनानीति प्रसिद्धम् । यद्यपि वेदशिरोभागीयोपनिषत्सु क्वचिदधिकारिविशेषानुसारेण ज्ञानस्य क्वचिच्च भक्तेर्भगवत्प्राप्तौ प्रधानसाधनत्वेन प्रतिपादनं समुपलभ्यते, तथापि 'भक्तिरेवैनं प्रापयती"ति श्रुतिकदम्बेन भक्तेरेव सर्वसाधनेषु गरीयस्त्वं संसूच्यते ॥

तासु भगवतः स्वरूपगुणधामतत्प्राप्तिसाधनादिवर्णनपराऽथर्ववेदीया प्रसिद्धेयमुपनिषत् साधकजनेभ्यः कल्पवल्लीस्वरूपा सुगमविधया परमतत्त्वरहस्यं विशदीकरोति, येन साधारणमतिसाधकोऽपि तत्त्वबुभुत्सां सुखेन शमयितुमलंभवेत् । अत एव विविधैरेव विद्वद्भिः संस्कृतहिन्दीभाषादिविभिन्नासु भाषासूपनिषदेषाऽनूदिता । परञ्च ताः सर्वाः प्रायः शब्दार्थमात्रवर्णनपराःसूक्ष्मकलेवरा अत एव विशिष्टजिज्ञासूनां तत्तद्विशिष्टजिज्ञासात्मकपिपासां निवर्तयितुमपर्याप्ता इति विभावयन्ति सर्वे हि वेदान्तशास्त्रनिपुणा विचक्षणाः ।

तस्माद्विशिष्टजिज्ञासूनामस्यामेकस्यामेव ब्रह्मसलिलात्मिकायां सुरसरितायां निमज्जनात् परमतत्त्वरहस्यरसरसिकानां परमोत्कटपिपासाशान्त्यै तस्यैव परब्रह्मपरमेश्वरान्तर्यामिणः श्रीसर्वेश्वरप्रभोः प्रेरणया, अथ चानन्तकोटिप्रभाकरादितेजोनिकरस्य मूलभूततेजःस्वरूपश्रीसुदर्शनावतारभगवच्छ्रीनिम्बार्कस्यानुग्रहेण समुपलब्धमेधाविकासेन न्यायवेदान्ता-

चार्यझोपाह्वमैथिलविद्वद्वर्यपरमवैष्णवश्रीभगीरथशर्मणा वेदान्ततत्त्वसमीक्षाभिधं श्रीगोपालतापिन्या विशदं भाष्यं विरचितम्।

भाष्येऽस्मिन् श्रीराधाकृष्णयोः परात्परपरमेश्वरत्वं, रामनारायणनृसिंहशिवशक्त्यादीनांचानयोरेव प्रकाशान्तरत्वम्, वेदस्मृतिपुराणसूत्रकल्पतन्त्रादिसर्वशास्त्रकदम्बस्यैतत्परकत्वं, तैःसर्वैरेतदुपनिषत्प्रतिपादितार्थसमर्थकत्वं च, श्रीराधाकृष्णयोर्नित्यदाम्पत्यभावः, भगवद्विग्रहतद्धामगुणस्वरूपादीनाञ्च विशदविवेचनं, साकेतवैकुंठकैलासादिनामाऽसिधानां धाम्नामस्यैव श्रीसर्वेश्वरस्य गोलोकधाम्नि संगतत्वं, भगवद्धामविग्रहतत्परापरात्मकशक्तिस्वरूपजीवप्रकृत्यादीनांचानेन सह भेदाभेदसम्बन्धः। सर्वेश्वरश्रीकृष्णचन्द्रस्य चराचराधिपतित्वं, क्लीं ॐ आदिबीजमंत्राणां विशदार्थः, श्रीराधाकृष्णयोः परमदेवत्वे श्रुतियुक्तिप्रमाणादीनामुपपन्नता, चेत्यादि बहवो हि विषयाः समीचीनतया संनिबद्धाः।

अथ चैतद्भाष्यस्य विशेषता चेयं यदस्मिन्नन्याऽन्यसाम्प्रदायिकविद्वद्भिरिवैकस्यैव स्वोपास्यदेवस्य माहात्म्याभिधानं। तदतिरिक्तानाञ्च निन्दाकल्पवचनं तस्य गन्धलेशोऽपि नैव दृश्यते, अपितु सर्वेषामेव विष्णुशिवशक्त्यादितत्तदुपास्यदेवानां परमतत्त्वतोऽभिन्नत्वं प्रतिपाद्य तेषां गौरवमेव सुरक्षितं, तद्विषयकश्रद्धा च समर्थिता।

यद्यपि प्रसंगोपात्तस्थले तद्विधानां केषांचिल्लेखकानां मतान्यालोचितानि यैः पूर्वाचार्याणां शास्त्रस्य च सत्पद्धतिं विहाय श्रीराधायाः परकीयात्वादि समर्थितं, तथापि तदालोचनमपि, तेषामेव पूर्वपूर्वपुरुषाणामुक्तिभिस्तदुक्तग्रन्थादिप्रमाणैश्च विनम्रभावेन मधुरशब्दैरेव कृतं नतु श्रुतिविरुद्धेन रवेण।

अपि च भाषाऽपि सरला शैलीश्च सरला भाष्यस्याऽस्य चमत्कारात्मकं भूषणमेवैतत्, यत् सुमनसां मनांसि प्रबोधयत् सत् परमतत्त्वरहस्यरसमास्वादयित्वा विनोदयिष्यतीति मे मतम्।

किं बहुना यथेयमुपनिषत्, जिज्ञासूनां कृते कल्पवल्लीभूता तथैव भाष्यमिदं कल्पवल्लीफलस्वरूपमेवास्तीति नेह काप्यतिशयोक्तिः, यतोहि एतद्रसाऽऽस्वादनावसरे विद्वांसः स्वयमेव तदनुभविष्यन्ति भाष्यकर्तुर्वैदुष्यं सर्वशास्त्रावगाहित्वं लेखनकलाकुशलत्वं च, सभाष्यमस्या उपनिषदः पठनमननाऽनन्तरं निपुणमनुमोदयिष्यन्ति। भाष्यकारस्य परिश्रमञ्च संस्तावयिष्यन्ति। याश्च कचिद् दृष्टिदोषादत्तराशुद्धय आपतितास्तत्क्षन्तव्यं सुधीभिर्नेत्रशक्तिदौर्बल्यादेव तदापतितमिति।

किंच एककालावच्छेदेनैवानेकनिबन्धसंशोधनकार्य्यसंपातात्, सहायकान्तराभावात्, प्रतिदिनं मुद्रणसम्पातान्निशायामेव संशोधनसमयाऽवकाशाच्च, बहूनां वकारादीनां रूपपदे ह्रस्वोकारस्य च व्यत्ययोऽत्रावशिष्टः, विशेषत आदिभागे। कचिच्च पूर्वं सन्त्योऽपि ओकाररेफाद्या मात्राः कण्टकदौर्बल्यान्मुद्रणासरे निपतिता इति। वाक्याशुद्धयस्तु प्रायो न सन्त्येवेति संशोधनकार्य्यकाठिन्यमनुभवद्भिर्विद्वद्भिः क्षन्तव्यमिति।

विजया दशमी<br>श्रीनिम्बार्काब्दाः<br>५०४४<br>विक्रमाब्दाः २००६

पं. श्रीव्रजवल्लभशरण-वेदान्ताचार्य्यः.<br>विद्याभूषणसांख्यसाहित्यवेदान्ततीर्थः<br>श्रीनिकुञ्ज वृन्दावनधाम।

श्रीगोपालतापिन्युपनिषद्भाष्यस्य संक्षिप्तं

# विषयसूचीपत्रम्-

---

दिग्मात्रमिह सूचिकामुखेन ग्रन्थविषयो दर्शितः। साकल्येन दर्शनं तु समग्रग्रन्थपर्य्यालोचनेनैव जिज्ञासुभिः कर्तव्यमिति।



# अथाथर्ववेदीयपिप्पलादशाखीया-

## ❀ गोपालतापिन्युपनिषत्प्रारभ्यते ।

ओं भद्रं कर्णेभिः०, इति शान्तिः॥ × ओंकृषिर्भूवाचकः शब्दोनश्च निर्वृतिवाचकः तयोरैक्यंपरंब्रह्म कृष्णइत्यभिधीयते ॐ सच्चिदानंदरूपाय कृष्णायाक्लिष्टकारिणे नमोवेदांतवेद्यायगुरवेबुद्धिसाक्षिणे A २ ॐमुनयोह-वैब्राह्मणमूचुः कःपरमोदेवः कुतोमृत्युर्बिभेति कस्यविज्ञानेनाखिलंविज्ञातं-भवतिकेनेदंविश्वंसंसरतीति तदुहोवाचब्राह्मणः कृष्णोवैपरमंदैवतंगोविंदा-न्मृत्युर्बिभेति गोपीजनवल्लभज्ञानेन तज्ज्ञातंभवतिस्वाहेत्येतेनेदंसंसर-तीति तेहोचुःकःकृष्णो गोविन्दश्चकोऽसाविति गोपीजनवल्लभः कःकःस्वाहेति तानुवाचब्राह्मणः पापकर्षणोगोभूमिवेदविदितोवेदिता-गोपीजनविद्याकलाप्रेरकस्तन्मायाचेतिसकलंपरंब्रह्मैतद्योध्यायतिरसति -

---

❀ अस्माभिः संगृहीतेषु दृष्टेषु च हस्तलिखितेषु मुद्रितेषु चोपनिषत्संग्रहेषु सर्वतः प्राचीनं पुस्तकं यन्मया दृष्टं यत्रैव च सर्वतः प्राचीनतमोऽतितरां परिशोधितश्च पाठो मया निर्धारितः स एव पाठोऽत्र मया निवेशितः। अयमेव च पाठो विशेषतः पुण्यपत्तनमुद्रितोपनिषत्समुच्चये प्रायःसर्वोपनिषट्टीकाकृन्नारायणकृतटीकासहितमुद्रितेऽपि दृश्यते चेति। किंचात्र वाक्यानां संहितापाठो महान्विशेषः। संहितापाठ एव ब्राह्मणग्रन्थेषु शतपथादिषु वैदिकानां पारायणपरम्परासिद्धः। भाष्येतु-मया पाठान्तरंधृतम्, इत्यपि बोध्यम्।

× अयं श्लोकः, हस्तलिखितसर्वेषु प्राचीनपुस्तकेषु दृश्यते। व्याख्यातश्च सर्वैः सुन्दरभट्टनारायणभट्टादिभिरपि टीकाकृद्भिरिति।

A अयं श्लोकांकः। एवमुत्तरत्र।

भजतिसोऽमृतोभवतिसोऽमृतोभवतीति ॥ १ B ॥ तेहोचुः किंतद्रू-पंकिंरसनंकथंचाहोतद्भजनंतत्सर्वंविविदिषतामाख्याहीति तदुहोवाच हैरण्योगोपवेषमभ्राभंतरुणंकल्पद्रुमाश्रितंतदिहश्लोकाभवंति सत्पुंडरीक-नयनंमेघाभंवैद्युतांबरंद्विभुजंमौन C मुद्राढ्यं वनमालिनमीश्वरं गोपीगोप-गवावीतंसुरद्रुमतलाश्रयं दिव्यालंकरणोपेतंरत्नपंकजमध्यगं कालिंदीज लकल्लोलसंगिमारुतसेवितं चिंतयंश्चेतसाकृष्णंमुक्तोभवतिसंसृतेरिति तस्यपुनारसनं जलभूमींदुसंपातःकामादिकृष्णायेत्येकंपदंगोविंदायेति-द्वितोयंगोपीजनेतितृतीयंवल्लभायेतितुरीयं स्वाहेतिपंचममिति पंचपदीं-प्रजपन्पंचांगंद्यावाभूमीसूर्याचंद्रमसौसाग्नीतद्रूपतयाब्रह्मसंपद्यतेब्रह्मसंपद्य-तइति ॥ २ ॥ तदेषश्लोकः क्लीमित्येवादावादायकृष्णायगोविंदायेत-गोपीजनवल्लभायबृहद्भानव्यासकृदप्युच्चरेतयोगतिस्तस्यास्तिमंक्षुनान्याग-तिःस्यादितिभक्तिरस्यभजनंतदिहामुत्रोपाधिनैराश्येनैवामुष्मिन्मनःकल्पन-मेतदेवचनैष्कर्म्यं कृष्णंसंतंविप्राबहुधायजंति गोविंदंसंतंबहुधारसंति-गोपीजनवल्लभोभुवनानिदध्रे स्वाहाश्रितोजगदेजयत्सुरेताः वायुर्यथैकोभवनं प्रविष्टोजन्येपंचरूपोबभूव कृष्णस्तथैकोपिजगद्धितार्थंशब्देनासौपंच-पदोविभातीति ॥ ३ ॥ तेहोचुः उपासनमेतस्य परमात्मनोगोविंदस्याखिल धारिणोब्रूहीति तानुवाचयत्तस्यपीठंहैरण्यमष्टपलाशमंबुजंतदंतरालिका-नलास्त्रयुगंतदंतराद्यार्णंर्विलिखीतकृष्णायनमइतिबीजाढ्यं (सब्रह्मणा) + मा

---

B (१) अयं संख्याविभाग उपनिषद्विभाजकः । यथा नृसिंहपूर्व-तापिन्यामिति । एवंचाष्टौ उपनिषः पूर्वतापिन्यां भवन्ति । अत्रैव वाक्याभ्यासः प्रपाठकसमाप्तिद्योतकः । एवंच १, २, ४, ६, ७, , ८, इत्यत्र वाक्याभ्यासेभ्यः ६ षट्प्रपाठकाः पूर्वतापिन्याम् । उत्तरतापिन्यां तु खण्डशब्देन विभागो नृसिंहोत्तरतापिनीवद्बोध्यः । इति ( भगीरथझा )

C ज्ञानमुद्राढ्यं इति बहुत्र पाठः ।

+ 'स ब्राह्मणमादाय' इत्यन्यत्र पाठः ।

धायानंगमनुं गायत्रीं यथावद्व्यासज्यभूमंडलंशूलवेष्टितंकृत्वागंवासुदेवा-
दिरुक्मिण्यादिस्वशक्तींद्रादिवसुदेवादिपार्थादिनिध्यावीतंयजेत्संध्यासुप्रति-
पतिभिरुपचारैस्तेनास्याखिलंभवत्यखिलंभवतीति ।४। तदिहश्लोकाभवंति
एकोवशीसर्वगःकृष्णईड्यएकोपिसन्बहुधायोविभाति तंपीठस्थंयेनुय-
जंतिधीरास्तेषांसुखंशाश्वतं नेतरेषां नित्योनित्यानांचेतनश्चेतनानां एको-
बहूनांयोविदधातिकामान् तंपीठगंयेनुयजंतिविप्रास्तेषां सिद्धिः शाश्वतीने-
तरेषां एतद्विष्णोःपरमंपदंयेनित्योद्युक्ताःसंयजंतेनकामात् तेषामसौगोप-
रूपःप्रयत्नात्प्रकाशयेदात्मपदंतदैव योब्रह्माणंविदधातिपूर्वं योविद्यास्तस्मै-
गापयतिस्मकृष्णःतंहदेवमात्मवृत्तिप्रकाशंमुमुक्षुर्वैशरणममुंव्रजेत् ॐका-
रेणांतरितंयोजपतिगोविंदस्यपंचपदंमनुन्तं तस्मैचासौदर्शयेदात्मरूपं-
तस्मान्मुमुक्षुरभ्यसेन्नित्यशांत्यै एतस्मादन्येपंचपदादभूवन्गोविंदस्यमनवो-
मानवानां दशार्णाद्यास्तेपिसंक्रंदनाद्यैरभ्यस्यंतेभूतिकामैर्यथावत् तदेत-
स्यस्वरूपार्थंवाचावेदयेतितेपप्रच्छुः तदुहोवाचब्रह्मणोसावनवरतंमेध्यातः
स्तुतः परार्द्धांतेसोबुध्यतगोपवेषोमेपुरस्तादाविर्बभूवततःप्रणतोमयानुकूले-
नहृदामह्यमष्टादशार्णंस्वरूपंसृष्टयेदत्त्वांतर्हितः पुनः सिसृक्षतोमेप्रादुर-
भूत्तेष्वक्षरेषुभविष्यज्जगद्रूपंप्रकाशयंतदिह।।५।। आकाशादापोजलात्पृथि-
वीततोग्निर्विंदोरिंदुस्तत्संपातादर्कइति क्लींकारादसृजं कृष्णादाकाशंखा-
द्वायुरित्युत्तरात्सुरभिविद्याः प्रादुरकार्षं तदुत्तरात्तु स्त्रीपुमादिचेदंसकल-
मिदंसकलमिति।।६।। तस्यैवयजनेचंद्रध्वजोगतमोहमात्मानंवेदयित्वोंकारां-
तरालिकंमनुमावर्त्तयत्संगरहितोभ्यायतत् तद्विष्णोः परमंपदंसदापश्यंति-
सूरयः दिवीवचक्षुराततं तस्मादेतन्नित्यमभ्यसेन्नित्यमभ्यसेदिति ।। ७ ।।
तदाहुरेके यस्यप्रथमपदाद्भूमिर्द्वितीयपदाज्जलंतृतीयपदात्तेजश्चतुर्थाद्वा-
युश्चरमाद्व्योमेतिवैष्णवंपंचव्याहृतिमयं मंत्रंकृष्णावभासंकैवल्यसृत्यैसत-
तमावर्त्तयेदितितदत्रगाथाः यस्यपूर्वपदाद्भूमिर्द्वितीयात्सलिलोद्भवः
तृतीयात्तेजउद्भूतंचतुर्थाद्गंधवाहनः पंचमादंबरोत्पत्तिस्तमेवैकंसमभ्यसेत्
चंद्रध्वजोगमद्विष्णोः परमंपदमव्ययंततोविशुद्धंविमलंविशोकमशेषलो-

भादिनिरस्तसंगं यत्तत्पदं पंचपदं तदेवस वासुदेवो न यतोन्यदस्ति तमेकं गोविंदं सच्चिदानंदविग्रहं पंचपदं वृंदावनेसुरभूरुहतलासीनं सततं समरुद्गणोहं परमया स्तुत्या तोषयामि ॐ नमो विश्वरूपाय विश्वस्थित्यंतहेतवे विश्वेश्वराय विश्वाय गोविंदाय नमो नमः १ नमो विज्ञानरूपाय परमानंदरूपिणे कृष्णाय गोपीनाथाय गोविंदाय नमो नमः २ नमः कमलनेत्राय नमः कमलमालिने नमः कमलनाभाय कमलापतये नमः ३ बर्हापीडाभिरामाय रामाया कुंठमेधसे रमामानसहंसाय गोविंदाय नमो नमः ४ कंसवंशविनाशाय केशिचाणूरघातिने वृषभध्वजवंद्याय पार्थसारथये नमः ५ वेणुवादनशीलाय गोपालाया हिमर्दिने कालिंदीकूललोलाय लोलकुंडलधारिणे ॥ ६ ॥ वल्लवीनयनांभोजमालिने नृत्यशालिने नमः प्रणतपालाय श्रीकृष्णाय नमो नमः ॥ ७ ॥ नमः पापप्रणाशाय गोवर्द्धनधरायच पूतनाजीवितांताय तृणावर्तासुहारिणे ॥ ८ ॥ निष्कलाय विमोहाय शुद्धायाशुद्धवैरिणे अद्वितीयाय महते श्रीकृष्णाय नमो नमः ॥९॥ प्रसीद परमानंद प्रसीद परमेश्वर आधिव्याधिभुजंगेन दष्टं मामुद्धर प्रभो ॥ १० ॥ श्रीकृष्णरुक्मणीकांत गोपीजनमनोहर संसारसागरेमग्नं मामुद्धर जगद्गुरो ॥११॥ केशवक्लेशहरणनारायणजनार्दन गोविंदपरमानंदमांसमुद्धरमाधव ॥१२॥ अथ हैवं स्तुतिभिराधयामियेयूयं तथा पंचपदं जपन्तः कृष्णं ध्यायन्तः संसृतिंतरिष्यथेतिहोवाच हैरण्यः अमुं पंचपदंमन्त्रमावर्त्तयेद्यः स यात्यनायासतः केवलं तत् अनेजदेकं मनसोजवीयोनैनद्देवा आप्नुवन्पूर्वमर्षदितितस्मात्कृष्णएवपरो देवस्तं ध्यायेत्तं रसेत्तं भवेत्तं भजेत्तं भजेदित्योंतत्सदिति ८ इत्यथर्वोपनिषदि गोपालपूर्वतापिन्युपनिषत्समाप्ता ॥

## अथ गोपालोत्तरतापिन्युपनिषत् ।—

एकदाहिव्रजस्त्रियः सकामाः शर्वरीमुषित्वा सर्वेश्वरं गोपालं कृष्णं — हिताऊचिरे उवाच ताः कृष्णमनु कस्मै ब्राह्मणाय भैक्ष्यं दातव्यं भवति दुर्वासस इति कथं यास्यामो तीर्त्वा जलं यमुनाया यतः श्रेयो भवति कृष्णेति ब्रह्मचारीत्युक्त्वा मार्गं वो दास्यति अगाधा गाधा भवति यं मां स्मृत्वा

अपूतःपूतोभवतियंमांस्मृत्वा अव्रतीव्रतीभवतियंमांस्मृत्वा निष्का-
मः सकामोभवति यं मां स्मृत्वा अश्रोत्रियः श्रोत्रियोभवतियंमांस्मृत्वा
† श्रुत्वा तद्वाचं ह वै स्मृत्वा तद्वाक्येन तीर्त्वातत्सौर्य्यांहिवैगत्वाश्रमं पुण्य-
तमं नत्वामुनिंश्रेष्ठतमंहि वै रौद्रंचेतिदत्वास्मैब्राह्मणायक्षीरमयं घृतमयं
मिष्टतमं हि वै इष्टतमः सहिवै तुष्टः स्नात्वाभुक्त्वाशिषंप्रयोज्याज्ञांत्वदात्
कथंयास्यामोतीर्त्वासौर्यां सहोवाचमुनिर्दुर्वासिनं मां स्मृत्वावोदास्यती
तिमार्गंतासांमध्ये श्रेष्ठा गांधर्वीह्युवाचसहैवैताभिरेवंविचार्य कथंकृष्णो
ब्रह्मचारी कथंदुर्वासिनोमुनिः तांहिमुख्यांविधायपूर्वमनुकृत्वातूष्णी-
मासुः शब्दवानाकाशः शब्दाकाशाभ्यां भिन्नस्तस्मिन्नाकाशेतिष्ठतिह्याका-
शस्तं न वेद सह्यात्माहंकथंभोक्ताभवामि ॥१॥* स्पर्शवान्वायुः स्पर्श-
वायुभ्यांभिन्नस्तस्मिन्वायौतिष्ठतिवायुर्नवेद तं हि सह्यात्माहं कथं भोक्ता-
भवामि रूपवदिदंहितेजोरूपाग्निभ्यां हि भिन्नस्तस्मिन्नग्नौतिष्ठति अग्नि-
र्नवेद तं हि सह्यात्माहं कथं भोक्ताभवामि ॥ २ ॥ रसवत्यआपोरसाद्भि-
र्भिन्नस्तास्वप्सुतिष्ठत्यापोनविदुस्तं हि सह्यात्माहं कथं भोक्ताभवामि ॥३॥
गन्धवतीयं भूमिर्गन्धभूमिभ्यां हि भिन्नस्तस्यां भूमौतिष्ठति भूमिर्नवेद तं
हि सह्यात्माहं कथं भोक्ताभवामि ॥ ४ ॥ इदं हि मनस्तेष्वेवं हि मनुतेता-
निदं गृह्णाति यत्र सर्वमात्मैवाभूत्तत्रयाकुत्रमनुतेकवागच्छतीति सह्यात्माहं
कथं भोक्ताभवामि ॥ ५ ॥ अयं हि कृष्णोयोवोहिप्रेष्ठः शरीरद्वयकारणं
भवति द्वौसुपर्णौभवतोब्रह्मणोंशभूतस्तथेतरोभोक्ताभवति अन्यो हि
साक्षी भवति ॥ ६ ॥ वृक्षधर्मेतौतिष्ठतः अभोक्त्रभोक्तारौपूर्वोहिभोक्ता
भवति तथेतरोऽभोक्ताकृष्णो हि भवतीति यत्र विद्याविद्ये नविदामो-
विद्याविद्याभ्यां भिन्नोविद्यामयोयः स कथं विषयीभवतीति ॥ ७ ॥ योहि

---

† 'यं मां स्मृत्वाऽगाधतः स्पर्शरहिताऽपिसर्वासरिद्गाधाभवति'
इत्यधिकः, बहुषु पुस्तकेषु पाठः ।

* ॥१॥ इत्यादिखण्डसंख्यानिर्देशः, यथा नृसिंहोत्तरतापिन्या-
दिषु । एवंच (२८) अष्टाविंशतिःखण्डा गोपालोत्तरतापिन्यामितिज्ञेयम् ॥

वै कामेनकामान्कामयते स कामीभवति योहि वै त्वकामेनकामान् कामयतेसोकामीभवतीति जन्मजराभ्यां भिन्नः स्थाणुरयमच्छेद्योयं योसौ सूर्ये तिष्ठति योसौ गोषु तिष्ठति योसौ गोपान्पालयति योसौ गोपेषु तिष्ठति योसौ सर्वेषुदेवेषुतिष्ठति योसौ सर्वैर्वेदैर्गीयतेयोसौ सर्वेषुभूतेष्वविश्यतिष्ठतिभूतानिविदधातिसवोहिस्वामीभवतीति ॥ ८ ॥ साहोवाचगांधर्वी कथंवास्मासु जातोसौगोपालःकथंवाज्ञातोसौत्वयामुनेकृष्णः कोवास्यमंत्रः किं वास्यस्थानं कथंवा देवक्यां जातः कोवास्यज्यायान्रामोभवतिकीदृशीपूजास्यगोपालस्य भवति साक्षात्प्रकृतिपरोयोयमात्मागोपालः कथंत्ववतीर्णोभूम्यांहिवै ॥ ९ ॥ सहोवाचतांहि वै एकोहिवैपूर्वं नारायणोदेवोयस्मिल्लोका ओताश्चप्रोताश्चतस्यहृत्पद्मज्जातोब्जयोनिः स पितातस्मैहवरं ददौ स कामप्रश्नमेववव्रे तंहास्मददौसहोवाचाब्जयोनिरवताराणांमध्येश्रेष्ठोवतारः कोभवितायेनलोकास्तुष्टादेवास्तुष्टाभवंतियं स्मृत्वामुक्ताअस्मात्संसाराद्भवन्तिकथं वास्यावतारस्यब्रह्मताभवति ॥ १० ॥ सहोवाच तं हि वै नारायणोदेवः सकाम्या मेरोः शृङ्गे यथा सप्तपुर्योभवन्ति तथा निष्काम्याः सकाम्याश्च भूगोलचक्रे सप्तपुर्योभवन्ति तासांमध्येसाक्षाद्ब्रह्मगोपालपुरीहीति सकाम्यानिष्काम्यादेवानांसर्वेषांभूतानांभवति ॥ ११ ॥ यथा हि वै सरसिपद्मं तिष्ठति तथा भूम्यां तिष्ठतीति चक्रेण रक्षिता हि वै मथुरा तस्माद्गोपालपुरी हि भवतीति बृहद्वनं मधोर्मधुवनं तालस्तालवनं काम्यः काम्यवनं बहुलाबहुलावनं कुमुदं कुमुदवनं खदिरखदिरवनं भद्रोभद्रवनं भांडीरइतिभांडीरवनं श्रीवनं लोहवनं वृन्दाया वृन्दावनं एतैरावृतापुरीभवति ॥ १२ ॥ तत्र तेष्वेवगहनेष्येवदेवा मनुष्यानागा गन्धर्वाः किंनरागायंतीति नृत्यंतीति तत्र द्वादशादित्या एकादशरुद्रा अष्टौवसवः सदामुनयोब्रह्मानारदश्च पंच विनायका वीरेश्वरोरुद्रेश्वरोंबिकेश्वरो विघ्नेश्वरो गणेश्वरो नीलकंठो विश्वेश्वरोगोपालेश्वरोभद्रेश्वर आद्यानिलिंगानिचतुर्विंशतिर्भवन्ति द्वेवनेस्तः कृष्णवनं भद्रवनं तयोरंतर्द्वादश वनानिपुण्यानिपुण्यतमानि तेष्वेवदेवास्तिष्ठन्ति

सिद्धाः सिद्धिप्राप्ताः तत्रहिरामस्यराममूर्त्तिः प्रद्युम्नस्यप्रद्युम्नमूर्त्तिः अनिरुद्धस्यानिरुद्धमूर्त्तिः कृष्णस्यकृष्णमूर्त्तिः वनेष्वेवंमथुरास्वेवं द्वादशमूर्त्तयोभवंति ॥१३॥ एकांहिरुद्रायजंति द्वितीयांब्रह्मायजंति तृतीयांब्रह्मजायतंति चतुर्थींमरुतोयजंति पंचमींविनायकायजंति षष्ठींवसवोयजंति सप्तमीमृषयोयजंति अष्टमींगन्धर्वायजंति नवमीमप्सरसोयजंति दशमीहिदिवोह्यन्तर्द्धानेतिष्ठति एकादश्यंतरिक्षपदंगता द्वादशीतु भूम्यांतिष्ठति ताहियेयजंति ते मृत्युन्तरंति मुक्तिंलभंते गर्भजन्मजरामरणतापत्रयात्मकं दुःखंतरंति तदप्येतेश्लोकाः ॥ १४ ॥

प्रथमांमधुपुरींरम्यांसदाब्रह्मादिसेवितां शंखचक्रगदाशार्ङ्गरक्षितां मुशलादिभिः यत्रासौसंस्थितः कृष्णस्त्रिभिःशक्त्यासमन्वितः रामानिरुद्धप्रद्युम्नैरुक्मिण्यासहितोविभुः चतुःशब्दोभवेदेकोह्योंकारःसमुदाहृतः तस्मादेवपरोरजसेतिसोहमित्यवधार्य्यगोपालोहमितिभावयेत् समोक्षमश्नुते सब्रह्मत्वमधिगच्छति तब्रह्मविद्भवति गोपान् जीवान् वैआत्मत्वेनासृष्टिपर्य्यंतमालाति सगोपालोभवतिह्योंतद्यत्सत्परंब्रह्म कृष्णात्मकोनित्यानंदैकरूपः सोहमोंतत्द्गोपालएवपरंसत्यमबाधितं सोहमित्यात्मानमादायमनसैक्यंकुर्य्यादात्मनागोपालोहमिमितिभावयेत् सएवाव्यक्तोनंतोनित्योगोपालः मथुरायांस्थितिर्ब्रह्मन्सर्वदामेभविष्यति शंखचक्रगदापद्मवनमालावृतस्यवै विश्वरूपंपरंज्योतिः स्वरूपंरूपवर्जितं सदा मांसंस्मरन्ब्रह्मन्मत्पदं याति निश्चितं मथुरामंडले यस्तुजंबुद्वीपेस्थितोपिवा योर्चयेसत्प्रतिमां मां च स मे प्रियतरोभुवि ॥१५॥ तस्यामधिष्ठितःकृष्णरूपी पूज्यस्त्वया सदा चतुर्द्धाचास्याधिकारिभेदत्वेनयजंतिमां युगानुवर्त्तिनोलोकायजंतीहसुमेधसः गोपालं सानुजं रामंरुक्मिण्यासहतत्परं गोपालोहमजोनित्यःप्रद्युम्नोहंसनातनः रामोहंह्यनिरुद्धोहमात्मानमर्चयेद्बुधः मयोक्तेन स्वधर्मेणनिष्कामेनविभागशः तैरयंपूजनीयोवैभद्रकृष्णनिवासिभिः तद्धर्मगतिहीनायेतस्यांमयि परायणाः कलिनाग्रसितायेवैतेषांतस्यामवस्थितिः यथात्वंसहपुत्रैस्तुयथारुद्रोगणैःसह यथाश्रियाभियुक्तो-

हंतथाभक्तो मम प्रियः ॥१६॥ सहोवाचाब्जयोनिः चतुर्भिर्देवैः कथमेको-
देवःस्यात् एकमक्षरं यद्विश्रुतं अनेकाक्षरंकथंभूतं सहोवाचतंहिवै पूर्वंह्येक-
मेवाद्वितीयंब्रह्मासीत्तस्मादव्यक्तमव्यक्तमेवाक्षरंतस्मादक्षरात्महत्महतो -
अहंकारः तस्मादेवाहंकारात्पंचतन्मात्राणितेभ्योभूतानितैरावृतमक्षरंभवति
अक्षरोहमोंकारोहमजरोमरोभयोमृतोब्रह्माभयंहिवैसः अजोहमस्मि -
अक्षरोहमस्मि सत्तामात्रंचित्स्वरूपंप्रकाशंव्यापकंतथा एकमेवाद्वयंब्रह्म-
माययातु चतुष्टयं रोहिणीतनयोरामोअकाराक्षरसंभवः तैजसात्मकः प्रद्यु-
म्नउकाराक्षरसंभवः प्राज्ञात्मकोनिरुद्धोवैमकाराक्षरसंभवः अर्द्धमात्रात्मकः
कृष्णोयस्मिन्विश्वंप्रतिष्ठितं कृष्णात्मिका जगत्कर्त्रीमूलप्रकृतिरुक्मिणी
व्रजस्त्रीजनसंभूतश्रुतिभ्योब्रह्मसंगतं प्रणवत्वेनप्रकृतित्वंवदंतिब्रह्मवादिनः
तस्मादोंकारसंभूतोगोपालोविश्वसंस्थितिः क्लीमोंकारमेकत्वंपठ्यतेब्रह्मवा-
दिभिः मधुपुर्यांविशेषेणमांध्यायन्मोक्षमश्नुते अष्टपत्रंविकसितंहृत्पद्मं तत्र-
संस्थितं शंखांबुजातपत्रैस्तु चिह्नितं चरणद्वयं श्रीवत्सलांछनंहृत्स्थंकौस्तुभ-
प्रभयायुतं चतुर्भुजंशंखचक्रशार्ङ्गपद्मगदान्वितं सुकेयूरान्वितंबाहुंकंठ-
मालांसुशोभितं द्युमत्किरीटमभयंस्फुरन्मकरकुंडलं हिरण्मयंसौम्यतनुं
स्वभक्तायाभयप्रदं ध्यायेन्मनसिमांनित्यंवेणुशृंगधरंतुवा मथ्यतेतुज-
गत्सर्वं ब्रह्मज्ञानेनयेनवा तत्सारभूतंयद्यस्यांमथुरासानिगद्यते अष्टदिक्-
पालिभिर्भूमिपद्मंविकसितं जगत् संसारार्णवसंजातं सेवितं मम मानसैः
चंद्रसूर्यत्विषौचिह्नध्वजमेरुहिरण्मयः आतपत्रं ब्रह्मलोकमथोर्द्धचरणः
स्मृत श्रीवत्संचस्वरूपं च वर्त्ततेलांछनैःसह श्रीवत्सलांछनंतस्मात्कथ्यते ब्रह्म-
वादिभिः येन सूर्याग्निवाक्चंद्रतेजसास्वस्वरूपिणा वर्त्ततेकौस्तुभाख्यं
मणि वदंतीशमानिनः सत्त्वंरजस्तम इति अहंकारश्चतुर्विधः पंचभूता-
त्मकः शंखः परोरजसि संश्रितः चलस्वरूपमत्यंतं मनश्चक्रंनिगद्यते आ-
मायाभवेच्छार्ङ्गंपद्मंविश्वंकरेस्थितं आद्याविद्यागदावेद्यासर्वदामेकरेश्रिता
धर्मार्थकामकेयूरैर्दिव्यैर्नित्यमवारितैः कठंन्तुनिर्गुणं प्रोक्तं माल्यतेआ-
द्ययाजया माला निगद्यते ब्रह्मंस्तव पुत्रैस्तुमानसैः कूटस्थस्य स्वरूपं तु

किरीटेत्रवदंतिमे दरोत्तमंप्रस्फुरंतं कुण्डलं स्मृतं ध्यायेन्मम प्रियोनित्यं स मोक्षमधि गच्छति स मुक्तोभवति तस्मै आत्मानंददामि एतत्सर्वं भविष्य-द्वैमयाप्रोक्तं विधे तव स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथा ॥ १७ ॥ सहोवाचाब्जयोनिः व्यक्तानां मूर्त्तीनां प्रोक्तानां कथं वावधारणाभवति कथं वा देवा यजंति रुद्रा यजंति ब्रह्मा यजति ब्रह्मजा यजंति विनायकायजंति द्वादशादित्यायजंति वसवोयजंति अप्सरसोयजंति गन्धर्वायजंति स्वप-गादानुगा अन्तर्द्धानेतिष्ठतिकथं मनुष्यायजंति सहोवाच तु तं हवै नारायणो देवआद्या अव्यक्ताद्द्वादशमूर्तयः सर्वपुलोकेपु सर्वेपुदेवेषु सर्वेषुमनुष्ये-षुतिष्ठंति रुद्रेषुरौद्रीब्रह्मण्येवब्राह्मी देवेषुदैवीमनुष्येषुमानुषी विनायके-षु विघ्ननाशिनीआदित्येषुज्योतिःगंधर्वेषुगांधर्वीअप्सरःस्वेवंगौर्वसुष्वेवं-काम्या अंतर्द्धाने प्रकाशनेआविर्भावातिरोभावास्वपदेतिष्ठति तामसो-सात्त्विकीराजसीमानुषी विज्ञानघनआनंदघनः सच्चिदानंदैकरसेभक्ति-योगेतिष्ठति तामसोसात्त्विकीराजसीमानुषी विज्ञानघनआनंदघनः सच्चि-दानंदैकरसे भक्तियोगेतिष्ठति ॥ १८ ॥ ॐठांप्राणात्मनेठींतत्सत्भुर्भुवःस्व-स्तस्मैप्राणात्मनेनमोनमः ॐ ठां ॐ कृष्णायगोविंदायगोपीजनवल्लभाय-ठींतत्सत्भूर्भुवः स्वस्तस्मैवैनमोनमः ॥ २ ॥ ॐ ठां ॐ अपानात्मनेठीं-तत्सत्भूर्भुवः स्वस्तस्मैअपानात्मनेनमोनमः ॥ ३ ॥ ॐ ठां कृष्णाय-प्रद्युम्नायानिरुद्धायठींतत्सत्भूर्भुवस्वस्तस्मैवैनमोनमः ॥ ४ ॥ ॐ ठांसमा-नात्मनेठींतत्सत्भूर्भुवः स्वस्तस्मैसमानात्मनेनमोनमः ॥ ५ ॥ ॐठींकृष्णा-यरामायठींतत्सत्भूर्भुवःस्तस्मैवैनमोनमः ॥ ६ ॥ ॐ ठीं उदानात्मनेठीं-तत्सत्भूर्भुवःस्वस्तस्मैउदानात्मनेनमोनमः ॥ ७ ॥ ॐ ठां कृष्णायदेवकी-नंदनायठींतत्सतभूर्भुवः स्वस्तस्मैवैनमोनमः ॥ ८ ॥ ॐ ठां व्यानात्मने-ठींतत्सत्भूर्भुवस्वस्तस्मैव्यानात्मनेनमोनमः ॥ ९ ॥ ॐ ठां गोपालाय निजस्वरूपायठींतत्सत्भूर्भुवःस्वस्तस्मैवैनमोनमः ॥ १० ॥ ॐ ठीं योसौ-प्रेयानात्मागोपालःठींतत्सत्भूर्भुवःस्वस्तस्मैवैनमोनमः ॥ ११ ॥ ॐ ठां योसावींद्रियात्मागोपालःठींतत्सत्भूर्भुवःस्वस्तस्मैवैनमोनमः ॥ १२ ॥

ॐ ठां योसौसर्वभूतात्मागोपालःठींतत्सत्भूर्भुवःस्वस्तस्मैवैनमोनमः ॥१३॥
ॐ ठां योसावुत्तमःपुरुषोगोपालःठींतत्सतभूर्भुःस्वस्तस्मैवैनमोनमः ॥१४॥
ॐ ठां योसौपरंब्रह्मगोपालःठींतत्सत्भूर्भुवःस्वस्तस्मैवैनमोननमः ॥ १५ ॥
ॐ ठांयोसौसर्वभूतात्मागोपालःठींतत्सत्भूर्भुवःस्वस्तस्मैवैनमोनमः ॥१६॥
ॐ ठां योसौजाग्रत्स्वप्नसुषुप्तमतीत्यतुर्यातीतोगोपालःठींतत्सत्भूर्भुवःस्वस्तस्मैनमोनमः ॥ १७ ॥ एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्माकर्माध्यक्षःसर्वभूताधिवासः साक्षीचेताकेवलोनिर्गुणश्च रुद्रायनमः आदित्यायनमः विनायकायनमः सूर्यायनमः विद्यायैनमः इंद्रायनमः अग्नयेनमः पित्रेनमः निर्ऋतयेनमः वरुणायनमः मरुतेनमः कुबेरायनमः ईशानायनमः ब्रह्मणेनमः सर्वेभ्योनमः दत्त्वास्तुतिंपुण्यतमांब्रह्मणेस्वस्वरूपिणेकर्त्तृत्वंसर्वलोकानामंतर्द्धानेवभूवसः ब्रह्मणोब्रह्मपुत्रेभ्योनारदात्तु श्रुतंयथातथाप्रोक्तंतुगांधर्वागच्छत्वंस्वालयांतिकम् ❀ ॥ १८ ॥

इत्यथर्ववेदेश्रीमद्गोपालोत्तरतापनीयोपनिषत्समाप्ता ॥

—— ❀ ——

( त्रुटिपूर्तिः । तदेतत् ( ६८ ) पृष्ठशेषे प्रपञ्चविचारान्ते पठनीयम् )

अथाविद्यास्वरूपं निर्दिश्यते तत्र ब्रह्मात्म्यैक्यज्ञाननिवर्त्या मलिनसत्त्वप्रधानाऽनिर्वचनीया मायैवाविद्येति केवलाद्वैतवादिनः ॥ "विद्यांचाविद्यांच यस्तद्वेदोऽभयं सह" इतीशावास्यादौ सर्वमते कर्मण एवाविद्यापदवाच्यत्वात् "इयाज सोऽपि सुबहून्यज्ञाञ्ज्ञानव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ।" इतिविष्णुपुराणे षष्ठेंशे पराशरेण जनकोपाख्याने तथैव व्याख्यातत्वाच्च "अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते" इत्युदाहृतविष्णुपुराणवाक्याच्च सदसन्मिश्रंत्रिविधं, अनादिकर्मैऽवाविद्या जीवबन्धनहेतुः॥ एवंच तस्याः ब्रह्मज्ञाननिवर्त्यत्वमपि "इषीकातूलस्याग्निनिवर्त्यत्ववत् स्वातंत्र्येणैव। यथाच छान्दोग्यश्रुतिः "यथेषीकातूलमग्नौ प्रोतंप्रदूयते एवंहास्य सर्वे पाप्मानः प्रदूयन्ते" इत्यादि । प्रबलकर्मणो ब्रह्मज्ञानप्रतिबन्धकत्वमपि न्यायमते ज्ञानान्तरस्य कामिनीजिज्ञासादिवत् प्रारब्धभोगप्रतिकूलज्ञानसामग्रीविघटनद्वारा स्वातंत्र्येणैवेति वैष्णवसिद्धान्तानुयायिनः ॥ इति संक्षेपः । विशेषतस्त्वस्मद्विरचितेऽविद्याविवेके द्रष्टव्यम् इति ।

---

❀ऋग्वेदादौ-अपदान्तेऽपि परसवर्णनियमाभावादत्र यथाऽदर्शमेव पठितम्।

( १ ) वेदान्ततत्त्वसमीक्षा । ( २ ) श्रीयुग्मतत्त्वसमीक्षा । ( ३ ) श्रीभगवत्तत्त्वसुधानिधिः । ( ४ ) श्रीभगवत्तत्त्वसुधाम्बुधिः । इत्येतेषां महानिबन्धानाम् । ( ५ ) द्वैताद्वैतविवेकः। ( ६ ) भक्तिरहस्यम् । ( ७ ) सिद्धान्तबिन्दुः । ( ८ ) इत्येतेषांलघुनिबन्धानां संस्कृतभाषामयानां तथा ( ६ ) श्यामसुधानिधेर्मैथिलीयभाषाकाव्यस्य ( १० ) भागवततत्त्वविमर्शाख्यहिन्दीनिबन्धस्यच प्रणेतुर्भगीरथशर्मणःपूर्ववंशवितानमिदम्—

## —: वंशपरम्परा :—

मूलग्राम—हरिहरयराजन्यपुरा, काश्यपगोत्रीयमैथिलब्राह्मणेषु ।

( १ ) विश्वनाथझा ।❀ इत्येतस्य—

( २ ) १—बाभनझा, २—भट्टझा ।❀ इमौ द्वौ पुत्रौ ।

( ३ ) ❀भरतझा ।❀ भट्टस्यायंपुत्रः ।

( ४ ) ❀हरिजीवझा (कोहलखग्राम) तस्य शिवदत्तादयःपञ्च पुत्राः-

( ५ ) १ शिवदत्तझा, २ कूलझा, ३ रोहिणीझा, ४मनबोधझा, ५ सुबोधझा❀

( ६ ) ❀निधिपाणिझा, ( पोखरौनीग्राम ) सुबोधस्यायंपुत्रः ।

( ७ ) १-फकीरथझा, २-श्रीनाथझा, ३-ठीठरझा❀निधिपाणेरिमे त्रयःपुत्रः ।

( ८ ) ❀भूत्तनझा ( ठंगाहरिपुरग्राम ) ठीठरस्यायंपुत्रः ।

( ६ ) १—❀बुच्चीझा.) २—+यादवझा ।

( १० ) १—❀भगीरथझा)१—+बलभद्रझा, +२—जयकान्तझा ।

शारदीपूर्णिमा श्रीवृन्दावन सं० २००६ वै०

( ❀ एकचिह्नांकिताः क्रमशो भगीरथपूर्वजाः )

---

१—३—१०—एते निबन्धा मुद्रिताः (४) यन्त्रारूढः (१) ❀इयमिदमेव गोपालोपनिषद्भाष्यम् ।

स्वद्रव्यदानेनास्यप्रबन्धस्य मुद्रापयितृणां श्रीविहारिदासमहोदयानां-

## श्रीआचार्यपरम्परा ।

१ श्रीहंसनारायण
२ श्रीसनकादिभगवान्
३ देवर्षि श्रीनारदभगवान्
४ श्रीभगवान्निम्बार्कमहामुनीन्द्र
५ भाष्यकारश्रीनिवासाचार्य
६ श्रीविश्वाचार्य
७ श्रीपुरुषोत्तमाचार्य
८ श्रीविलासाचार्य
९ श्रीस्वरूपाचार्य
१० श्रीमाधवाचार्य
११ श्रीवलभद्राचार्य
१२ श्रीपद्माचार्य
१३ श्रीश्यामाचार्य
१४ श्रीगोपालाचार्य
१५ श्रीकृपाचार्य
१६ जाह्नवीकारश्रीदेवाचार्य
१७ सेतुकारश्रीसुन्दरभट्टाचार्य
१८ श्रीपद्मनाभभट्टाचार्य
१९ श्रीउपेन्द्रभट्टाचार्य
२० श्रीरामचन्द्रभट्टाचार्य
२१ श्रीवामनभट्टाचार्य
२२ श्रीकृष्णभट्टाचार्य
२३ श्रीपद्माकरभट्टाचार्य
२४ श्रीश्रवणभट्टाचार्य
२५ श्रीभूरिभट्टाचार्य
२६ श्रीमाधवभट्टाचार्य
२७ श्रीश्यामभट्टाचार्य
२८ श्रीगोपालभट्टाचार्य
२९ श्रीबलभद्रभट्टाचार्य
३० श्रीगोपीनाथभट्टाचार्य
३१ श्रीकेशवभट्टाचार्य
३२ श्रीगांगलभट्टाचार्य
३३ जगद्विजयिश्रीकेशवकाश्मीरि-
भट्टाचार्य
३४ श्रीभट्टदेवाचार्य
३५ श्रीहरिव्यासदेवाचार्य
३६ श्रीमत्स्वभूदेवाचार्य
३७ श्रीकर्णहरदेवाचार्य
३८ श्रीपरमानन्ददेवाचार्य
३९ श्रीचतुरचिन्तामणिदेवाचार्य
४० श्रीमोहनदेवाचार्य
४१ श्रीहरिदेवाचार्य
४२ श्रीश्रुतरामदेवाचार्य
४३ श्रीवृषभानुदेवाचार्य
४४ श्रीमनीषिरामदेवाचार्य
४५ श्रीहंसदासाचार्य
४६ श्रीहरिदासाचार्य
४७ श्रीमोहनदासाचार्य
४८ श्रीनयनादासजू
४९ श्रीइन्द्रदास जू काठिया (व्रज-
यात्रा तथा काठप्रवर्त्तक)
५० श्रीधर्मदासजू
५१ श्रीबलभद्रदासजू
५२ श्रीगिरिधारीदासजू
५३ वर्त्तमान-परमविरक्त—
पं० श्रीबिहारिदासजू महाराज ।

इति श्रीआचार्यपरम्पराप्रणालिका समाप्ता ।

शुभं भूयात् ।

श्रीराधाकृष्णाभ्यान्नमः

# अथ

मैथिलझोपाख्यश्रीभगीरथशर्म-प्रणीतम्

वेदान्ततत्त्वसमीक्षाख्यम्

# श्रीगोपालतापिन्युपनिषद्भाष्यम्

———:०:———

ओं तत्सत्परब्रह्मणेनमः ।। ओं गुरुभ्योनमः परमगुरुभ्योनमः परात्परगुरुभ्योनमः सर्व्वगुरुभ्योनमः अस्मद्गुरुभ्योनमः ।। अथ वेदान्ततत्त्व समीक्षाख्या श्रीगोपालोपनिषद्व्याख्या प्रारभ्यते ।।

वन्दे कृष्णं गुणातीतं परंब्रह्माच्युतं यतः ।।
आविर्ब्बभूवुः प्रकृतिब्रह्मविष्णुशिवादयः ।।१।।
श्रियं वन्दे हिरण्याभां सच्चिदानन्दाविग्रहाम् ।।
वृषभानुकुलोत्तंसां कृष्णवामार्ध-रूपिणीम् ।।२।।
विद्यया सहितं देवं विज्ञानानन्द-रूपिणम् ।।
गुरुमाद्यंपरंवन्दे दक्षिणामूर्ति-विग्रहम् ।।३।।
श्रीगुरुं वैष्णवंदेवं सनकादि स्वरूपिणम् ।।
गोवर्धनगुहासीनम् भूयोभूयो नमाम्यहम् ।।४।।
नमो गुरुभ्यः पूर्व्वेभ्यः सनकादिभ्य आदरात् ।।
यत्कृपालेशमात्रेण शास्त्र-तत्त्वं विविच्यते ।।५।।

मैथिलान्वयजातेन मिथिलाभूमिवासिना ॥
भगीरथेन विप्रेण श्रुतितत्त्वं विविच्यते ॥६॥

उपनिषदन्तरेषु क्वचिदप्राकृतासाधारणानन्त-स्वाभाविक यावदात्मभाविकल्याणगुणनिरुपणमुखेन यथा "सर्वकामः सर्वगन्धः सर्वरसः" छा. ३।३।१४॥ "यःसर्व्वज्ञः स सर्व्ववित्" । मु. उ ११।१॥ इत्यादौ । क्वचित् हेयधर्म्मनिरशनमुखेन हेयस्वरूपनिरशनमुखेनच यथा "अस्थूलमनणु"। बृ. ३।३।८॥ "दिव्योह्यमूर्तःपुरुषः" ॥ मु. ।३॥ यन्मनसा नमनुतेयेनाहुर्म्मनोमतम् । तदेवब्रह्मत्वंविद्धिनेदंयदिदमुपासते ॥ के उ. इत्यादौ क्वचिदुभयप्रधानेन यथा "केवलो निर्गुणश्च" ॥ श्वे. । ६ ॥ इत्यनेन प्राकृतगुणनिषेधपूर्व्वकं 'स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्व्वविदयः'श्वे.॥६॥ इत्यादिवाक्ये 'नेतिनेति' ॥ बृ.॥ इत्यादिना हेयविशेषनिषेधपूर्व्वकं "विज्ञातारमरेकेनविजानीयात्" ॥ बृ मै ॥ इत्यादिना स्वाभाविकधर्म्मप्रतिपादनपरे मैत्रेयीब्राह्मणादिवाक्ये च ॥ क्वचित्स्वरूपनिरुपणप्राधान्येन यथा "सत्यंज्ञानमनन्तंब्रह्म" ॥ ब्र. । व. ॥ "विज्ञानमानन्दंब्रह्म" ॥ बृ. ४. ॥ इत्यादौ ॥ क्वचित्कार्य्यनिरूपणमुखेन यथा "यतोइमानिभूतानिजायन्ते" ॥ तैः ॥ भृ ॥ इत्यादौ, क्वचिदेकविज्ञानेन सर्व्वविज्ञानजनकत्वेन यथा "कस्मिन्नुभगवोविज्ञाते सर्व्वमिदंविज्ञातंभवति'' ॥ मुण्ड १ ॥ "उततमादेशमप्राक्षोयेनाश्रुतंश्रुतं भवति" ॥ छा.॥ ६ ॥ इत्यादौ क्वचित्परमदेवत्वादिना यथा "तमीश्वराणांपरमंमहेश्वरंतंदेवतानांपरमं च दैवतम् " इत्यादौ इत्येवं विविधप्रकारेण निखिलहेयप्रत्यनीकस्वभावयावदात्मभावि-नित्य-निरतिशयानन्त कल्याण गुणशक्ति-स्वभावं निखिलजगदभिन्न-निमित्तोपादानंनित्यनिरतिशयसच्चिदानन्दघनंपरमदेवं प्रतिपादयन्ति श्रुतयः। तथा "आत्मैवेदमग्र आसीत्पुरुषविधः" ॥ बृ. । पु.।ब्रा. ॥"अन्योऽन्तरआत्माआनन्दमयः "अन्वयं विपुरुषविधः ॥ तै. ब्र. ॥ इत्यादिवाक्येन तस्य-मूलरूपं निर्भिन्नसच्चिदा-

न्दघनं पुरुषाकारमित्यपि बोधयन्ति श्रुतयः । एवमपि तद्ब्रह्मणो मूलरूपं शिवब्रह्माद्याकारं वाऽन्यविधं वेतिजिज्ञासाया विशेषतो विनिवृत्तये—'एकोहवै नारायण–आसीत्–न ब्रह्मानेशानः ॥' महो ॥ १–स एकाकी नर एव ॥' महो० ॥१॥ इत्याद्युपक्रमेण 'तस्यध्यानान्तस्थस्य ललाटान्त्र्यक्षः शूलपाणिः पुरुषोजायते विभ्रच्छ्रियंयशः सत्यंब्रह्मचर्यं तपो वैराग्यं तस्मादीशानो महादेवो महादेवः ॥' महो॥१॥ इत्याद्युपपत्त्या-'सहस्रशीर्षकं देवं,' इत्याद्युपसंहारेणच–महोपनिषदि विष्णोरेव सर्व्वमूलरूपत्वं निर्णीयते । 'नारायणसुबालादावपि'–'नारायणद्ब्रह्माजायते–नारायणाद्रुद्रोजायते' 'शुद्धोदेव–एकोनारायणो नो द्वितीयोऽस्ति कश्चित् ॥ ना० उ० ॥ 'दिव्योदेव एको नारायणः' ॥ सुवा० ॥ इत्यादिना तथैव निर्णीयते । तच्चाग्रे उत्तर तापिन्यां–एकोहवै पूर्वं नारायणोदेवः' इत्यत्र सुव्यक्तं भविष्यतीति । तत्रापिविष्णोरनन्तेषु चिदानन्द विग्रहेषु कतरद्रूपं सर्वमूलमूलं समानाभ्यधिकशून्यमिति सोपपत्तिकनिर्णयाय-पूर्वोक्त नानाप्रकारेण परमतत्व-निरुपकाणां वेदान्त-वाक्यानामेकत्र समन्वयाय तदुपासनादीनां विशेषतो विवेचनाय च गोपालतपनाख्यं निजस्वरूपमथर्व्ववेदोयपिप्पलादशाखायां श्रावयति भगवती श्रुतिः ।

तांचेमां ब्रह्मा ब्रह्मसंहितायां–श्रीकुमाराः सनत्कुमारसंहितादौ श्रीनारदादिभ्यः, श्रीनारदादयश्च गौतमीयतंत्रादौ गौतमादिमुनिभ्य उपबृंहयामासुः । तेनैतासांसंहितानामियमेवोपनिषद्विशेषतो मूलभूता, गौतमीयतंत्रे "क्लींकारादसृजद्विश्वमितिप्राहश्रुतेः शिरः" इतिपूर्व्वतापनिस्थवाक्योदाहरणात्—"अध्याय–शत–सम्पन्ना भगवद्ब्रह्मसंहिता । कृष्णोपनिषदांसारैः संक्षिप्ता ब्रह्मणोदिता" इति ब्रह्मसंहिता ।क्याच्च ज्ञायते इति । तां चेमां विश्वतो विततविग्रहामपि श्रीनारदो भगवदाज्ञया द्वापरान्तेऽवतीर्णाय श्रीसुदर्शनावताराय निम्बार्काय समुपादिदेश 'सुदर्शनोद्वापरान्ते कृष्णाज्ञप्तोभविष्यति । निम्बादित्य इतिख्यातो धर्म्मग्लानिं हरिष्यति" इतिभविष्ये प्रतिसर्गपर्वणि व्यासवाक्यात् । नरायणमुखांभोजा-

न्मंत्रस्त्वष्टादशाक्षरः । अविर्भूतः कुमारैस्तु गृहीत्वानारदायवै ।। उपदिष्टः स्वशिष्यायनिम्बार्कायचतेनतु-एवं परम्पराप्राप्तो मंत्रस्त्वष्टादशाक्षरः ।। इति विष्णुयामलवाक्यात् तथैव तत्सम्प्रदायेतिहासगुरुपरम्परा प्रसिद्धेश्च । अथ स भगवान्—हंस-कुमार-नारदप्रणीत-नैष्ठिकवंशसत्सं-प्रदाय-प्रवर्तकः श्रीनिम्बार्कः श्रीनिवासौदुम्बर-गौरमुखादिभ्यः स्वशि-ष्येभ्यः सहोपनिषदन्तरैः स्वगुरुपरम्परानुसारेणानुश्रावयामास ।। श्री श्रीनिवासौदुम्बराचार्य्यादिभिश्च वेदान्तसूत्रभाष्यकौस्तुभादिषु तथौदु-म्बरसंहितादिषु च तत्तत्प्रसंगानुसारेण तस्याः कतिचिद्वाक्यखण्डानि विवेचतानि ।। तदनुगताः ततश्चतुर्थीं पीठिकामारुढा श्रीपुरुषोत्तमा चार्य्याः निजाद्याचार्य्योदित वेदान्तकामधेनु भाष्ये वेदान्तरत्न मंजूषायां त्तत्प्रसंगत-स्तानि तानि वाक्यानि व्याचख्युः । अथ च श्रीनिम्बार्का-चार्य्यतश्चतुर्दशतमीं पोठिकां समारुढ़ाः साम्प्रतं वर्तमान-श्रीबालकृष्ण-देवाचार्य्यतः षट्-त्रिंशतमीं पूर्वपीठिकामारुढ़ा जाह्नवी-सेतु-प्रपन्न-सुरतरुमंजरी-मंत्ररहस्य-व्याख्यादि-प्रणेतारः सिद्धान्त-जाह्नवी प्रणेतृ श्रीदेवाचार्य्य-शिष्य-श्रीसुन्दरभट्टाचार्य्य-पादाः विस्तृतेन भाष्येणालंका-रयामासुर्विवेचयामासुश्च रहस्यषोडशीव्याख्यानादौ प्रकीर्णरुपेण । ततस्तत्पीठपरम्परया श्रीसुन्दरभट्टाचार्य्यतः सप्तदशतमीं पिठिकामारुढ़ाः श्रीकाश्मीरिकेशवभट्टाचार्य्याः वेदान्त-कौस्तुभप्रभायां ब्रह्म-सूत्रवृतौ प्रसंगानुसारेण कानिचिद्वाक्यखंण्डानि विवेचयामासुः ।। अन्येच विभिन्न-संप्रदायानुयायिनः सर्वप्रसिद्धोपनिषट्टीकृच्छ्रीनारायण-श्रीपुरुषोत्तम-गोस्वामि-श्रीजीवगोस्वामि-प्रभृतयस्तथा विवेचयामासुः । तामहमपि तेषां पूर्वाचार्य्याणां तात्पर्य्यानुसारेण विशेषतो द्वैताद्वैत-सिद्धान्तानुसारेण स्वबुद्धिपरिशोधनाय-वेदान्ततत्त्वसमिक्षा ख्ययानिज-युग्मतत्वसमीक्षा सहोदरया व्याख्यया समलं करोमि ।।

यद्यपीयं महासूक्ष्मान ज्ञेया माद्दशैर्नरैः ।।
तथापि शास्त्रं सद्वाक्यंशरणंमें भविष्यति ।।१।।

शास्त्रं च वेदास्स्मृषयः पुराणं च तदात्मकम्।
इतिहासः पंचरात्रं भारतं च विदुर्बुधाः। स्कन्द्रपु० वैं० वैं० मा० ॥२॥
ऋग्यजुः सामाथर्वाख्या भारतं पंचरात्रकम्।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥ ३ ॥
मूलस्कन्धमया वेदाः पञ्चरात्रंच यत्परम्।
अन्यच्च तत्परं ग्राह्यं शास्त्रं नान्यादृशं पुनः ॥
यच्चानुकुलमेतस्य तद्धि शास्त्रं परंमतम्।
प्रतिकूलं भवेद्यद्वै नैव शास्त्रं कुवर्त्म तत् ॥
एतैरेव महाविष्णुर्ज्ञेयो नान्यैः कथंचन।
नावेदविदमुं विष्णुं मनुते न नरः कश्चित् ॥ स्क०पु०वैं०वैं०मा०
तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थितौ। गीता०
'नावेदविन्मनुते तंबृहन्तं नाब्रह्मवित्परमं प्रैति धाम॥ शाख्या० ३ ॥
'या वेदबाह्या स्मृतयो याश्चकाश्चकुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ म० स्मृ०
इत्यादिश्रुतिवाक्यैश्च स्मृतिवाक्यैश्चनिश्चितैः।
शास्त्रैरेवाध्वं सम्प्रोक्तैः कर्तव्यस्तत्त्वनिर्णयः ॥
अन्यथा भ्रश्यते स्वार्थात्स्वेच्छाचारी द्विपत्पशुः।
प्रत्यक्षशास्त्रेणाविरुद्धं युक्तिभिश्च सुसंस्कृतम् ॥
सद्वाक्यमपि मानं स्यात् सुक्ष्म तत्त्व विनिर्णये।
इतिनिश्चित्यसच्छास्त्रैः सद्वाक्यैरेवनिर्णयः क्रियते परतत्त्वस्यतद्विरुद्धश्चत्यज्यतें

इतिवेदान्त तत्त्व समीक्षायां गोपालोपनिषद् व्याख्यायां झोषाख्य-मैथिल भगीरथशर्म्म ग्रथितायामुपोद्घातः समाप्तः ॥

**अथ उद्देशग्रन्थः।** वस्तुतत्त्वे विवेचनीये निवन्धतातपर्य्य-निर्धाराय-उपक्रमोपसंहारादिवत्–उद्देशलक्षणपरीक्षा–अपि वक्तव्या भवन्ति। ताश्चैताः क्वचिदुपक्रमादिष्वेव गतार्थाभवन्ति क्वचिदुपक्रमाद्यो-बोद्देशादिषु-यथा–तैतरीये-ब्रह्मानन्द-वल्ल्याम्—तत्रहि "ब्रह्मविदाप्नोति

परम्" इत्यंशेन-ब्रह्मस्वरुप-तद्वेदनतत्प्राप्तीनां क्रमेण स्वस्वनाम्ना ब्रह्म, वित्, आप्नोतिपरम् इतिपदत्रयेणोद्देशः। "सत्यंज्ञानमनन्तं ब्रह्म"—इतिब्रह्म स्वरुपलक्षणम्—"योवेदनिहितं गुहायाम्"—इतिवेदनलक्षणम्—"सोऽश्नुतेसर्वान्कामान् सह ब्रह्मणा विपश्चिता"—इतिप्राप्तेर्लक्षणम्। "तस्माद्वा" इत्यादिशेषग्रन्थेन परीक्षा इत्युपक्रमादयस्तत्रान्तर्भवन्ति ।। कचित्परीक्षामात्रे-उपक्रमादयो गतार्था भवन्ति। उद्देशलक्षणेच पृथगुक्ते भवतः। इत्यादिबहुविधं सांकर्य्यं तयोरूहनीयम्। इहतु—उद्देशो लक्षणंच पृथगुक्ते भवतः। परीक्षामात्रे—उपक्रमाद्या गतार्था भवन्ति। इति ।। तत्र—नाम्ना वस्तुसमर्पणमुद्देशः। स्वरुपधर्म्मैः कार्य्यैर्वाऽन्यतोऽव्यावृत्तिबोधनं लक्षणम्। अतएव स्वरुपलक्षणकार्य्यलक्षणभेदेन लक्षणं द्विविधम्। दिष्टस्य-लक्षितस्यच वस्तुनः युक्तिप्रतियुक्तिभ्यां परिशोधनम्परीक्षा। अत्रैवोपक्रमादीनां विशेषत उपयोग स्तात्पर्य्यावबोधाय। इति। अत्र—" "कृषिभूवाचकः शब्दः" इतिप्रथममंत्रेणोद्देशः। "ओं-सच्चिदानन्दरूपाय" इतिद्वितीयेन लक्षणम्। शेषग्रन्थेन उत्तरतापिन्यन्तेनोपक्रमादिभिः—परीक्षा इति प्रकरणसंगतिं र्वोध्येति।।

मू० कृषिर्भूवाचकः शब्दोणश्च निर्वृतिवाचकः।
तयोरैक्यं परंब्रह्म कृष्ण इत्यभिधीयते ।।इति।।

समुपवृंहितश्चैषमंत्रो गौतमीयतंत्रे वदथमाणपंचपदीमंत्रव्याख्याम्—"कृष् शब्दः सत्तार्थोणश्चानन्दस्वरूपकः। सुखरूपोभवेदात्माभावानन्दमयःकिल" इति-तथाच निरतिशयस्वतंत्रसत्तायुक्तो यो निरतिशयानन्दः तादृशानन्दस्वरूपो यः परमात्मपरब्रह्मशब्दाभिधेयः स कृष्णपद वाच्यः इत्युद्देशवाक्यार्थः। गौतमीयतंत्रे-भावपदविशेषणात् तस्य "रसोवै स" इति श्रुत्युक्तरसानन्दत्वं सूचितम्। वस्तुतस्तु भावपदंतत्र कृष् शब्दार्थभूतसत्तार्थकमेवाभाति ।। रसरूपत्वंतु तस्य "रसोवैसः"

इति श्रुत्यन्तरैकवाक्यतयाऽनुकूलब्धमेव । चिद्रूपत्वमपि "सत्यंज्ञान-मनन्तंब्रह्म" इत्यत्र "विज्ञानमानन्दं ब्रह्म रातेर्दातुःपरायणम्" इति-श्रुत्यन्तरैकवाक्यताबलादानन्दरुपत्ववत् "सत्यंज्ञान" मित्यादिश्रुत्यैक-वाक्यताबलात् "सच्चिदानन्दरुपाये" तिवक्ष्यमाणश्रुतेश्च लब्धमेव । निरतिशयत्वंतु तत्र वक्ष्यमाणप्रकरणबलात्, इति वक्ष्यमाणस्वरूपलक्षण-लक्षितं सर्वतःपूर्णमेव ब्रह्म इह समुद्दिष्टमिति न काचिन्न्यूनतेति ॥

एवंपुराणादावपि कृष्णशब्दो बहुधा विवृतः । यथा ब्रह्मवैवर्तेब्रह्म-खण्डे प्रकृतिखण्डेच "कृषिश्च सर्ववचनो नकारश्चात्मवाचकः । सर्वात्माच परंब्रह्म कृष्ण इत्यभिधीयते ॥ कृषिश्च सर्थवचनो नकारश्चादिवाचकः । सर्वादिश्च परंब्रह्म कृष्ण इत्यभिधीयते ॥ कृषिश्च सर्व्व-वचनो नकारोवीजएवच-सर्ववीजं परंब्रह्मकृष्ण इत्यभिधीयते ॥ कृषिश्च सर्व्ववचनो नकारो मोक्षवाचकः । सर्व्वमोक्षप्रदाता च कृष्ण इत्यभिधीयते ॥ कृषिश्च भक्तिवचनो नकारो दास्यवाचकः । भक्तिदास्यप्रदाता च कृष्ण इत्यभिधीयते । इति । तानि सर्व्वाणि निर्व्वचनानि तस्मिन् निसर्गतःसंगच्छन्ते तस्यैव सर्वमूलरुपत्वात् इति ।

इदमत्रानुसंधेयम् ॥ कृष्णशब्दार्थो-हि-द्विविधःसखण्डार्थो-ऽखण्डार्थश्च । सखण्डार्थोऽपि द्विविधो व्याकरणव्युत्पन्न आर्षव्युत्पन्नश्च । तत्रोपरितनोक्ताः सर्व्वाव्युत्पत्तयोऽन्याश्चैतादृशा आर्षव्युत्पत्ता-वन्तर्भवन्ति । व्याकरणव्युत्पन्नार्थस्तु-वक्ष्यमाणावयवचतुष्टयवृत्तिद्वारा वोध्यः। अखण्डार्थस्तु-अखण्डवृत्तिगम्यः । ताश्चैता सर्व्वात्तयुत्प-तयः श्रीसुन्दरभट्टाचार्य्यपादैःभगवदाद्याचार्य्यपादप्रणीताया वक्ष्यमाण-पंचपदीमंत्रव्याख्यारुपाया मंत्ररहस्यषोडश्या व्याख्यानेमंत्रार्थरहस्ये सुष्ठूपपादिताः । इति समुपयुक्तत्वात्तद्ग्रन्थभाग एवोद्धि्रयते ।

तद्यथा "तथाहि—कृष्णशब्दार्थो द्विविधः सखण्डार्थोऽखण्डार्थश्च । सखण्डार्थोऽपि द्विविधः व्याकरणव्युत्पन्न, ऋषिव्युत्पन्नश्चेति । तत्र व्याकरणमुखेन व्युत्पत्तिं दर्शयन् विव्रियते चतुर्थ्यन्तं चतुःपदमिदं वाक्यम् । कृ-शब्दस्यात्र तंत्रपाठे-कृ-कृष्-ण-अ-पदानि । तत्र "डुकृञ् करणे-कृष् विलेखने" इत्यनयोः क्विप्प्रत्यययोगें-अत्र तुगभावश्छा-न्दसः । कृ-कृष् इति द्वितीयपदस्य च लोपे-अदर्शनेंकृष इतिशब्दोव्युत्पन्नः। सच कर्तृसंहर्तृवाचकः । "वस्तुलाभकरो णस्तु" इति वचनान्मोक्षलाभ-करोण शब्दः। अवरक्षणे इत्यव् धातोः क्विप् प्रत्यययोगेन-अकारस्या वशेषात्-पृषोदरादित्वादुठ भावोबोध्यः । छान्दसत्वाद्वा । रक्षत्वत्वसिद्धिः। एवंचजगत्कर्तृत्वं संहर्तृत्वं मोक्षदातृ त्वं च लक्षणं कलर्थस्य कृष्णस्य सिद्धम् । "यतो वा इमानि भूतानिजायन्तेयेनजातानि जीवन्ति । यत्प्रयं त्यभि संविशन्ति" ॥ तैं-उ-भृ-व-संसार मोक्षस्थितिबन्धहेतुः ॥ श्वे. ६ ॥ 'अहं सर्वस्यप्रभवोमत्तः सर्वं प्रवर्तते' इतिश्रुतिस्मृतिभ्य 'आर्षव्युत्पत्ति पक्षेच- "कृषिर्भूवाचकःशब्दोणश्चनिर्वृत्तिवाचकः । तयोरैक्यंपरंब्रह्म कृष्ण इत्यभिधीयते" इति॥ "सत्यंज्ञानमनन्तंब्रह्म''इत्या दिश्रुत्युक्तद्वितीय-लक्षणसिद्धिः । अखण्डार्थत्वेंश्रुत्युक्तसच्चिदानन्दरुपकृष्ण इति । "सच्चिदानन्दरुपायकृष्णायाक्लिष्टकारिणे" ॥ इति मंत्रवर्णात् । एवं जगज्जन्मादिकरणत्वं सूत्रकारोक्तलक्षणं श्रीकृष्णेसमन्वितम् ॥ तेन च स्वसमानाधिकरणतया -सार्वज्ञादिकारुण्यवात्सल्यादिगुणशक्त्यादयोप्या-क्षिप्ताः' अन्यथाऽनुपपत्तिप्रमाणसिद्धत्वात् । तथाच जगज्जन्मादिहेतुर्म्मोक्ष दाता सच्चिदानन्दरुपः सार्वज्ञ्यवात्सल्याद्यनन्ता-संख्यैयस्वाभाविकयाव दात्मवृत्तिगुणशक्त्यादिपूर्णो 'भगवान्' कृष्णपदार्थाभिन्नकर्तृपदार्थ इति संक्षेपार्थः ॥

गुणाश्च ज्ञानशक्तिबलैश्वर्य्यतेजोवीर्य्यादयो जगत्सृष्टयाद्युपयो गिनः । वात्सल्यसौशील्यस्वामित्वसत्यप्रतिज्ञत्वकृतज्ञत्वस्थैर्य्यपूर्णत्वौ-

दार्य्यकारुण्यादयो भगवदाश्रयणे प्रपन्नरक्षणेचोपयोगीनोंऽनन्ताश्च । तत्र ज्ञानं सर्वदेशकालवस्तुनो निरन्तरंप्रत्यक्षानुभवः । शक्तिः अघटघटनापटीयस्त्वाभिन्नसामर्थ्यम् । वलं विश्वविधारणशक्तिः । श्रमहेतौ विद्यमाने तच्छून्यत्वं वीर्य्यम् । तेजः परैरनभिभूयमानत्वेन सहितं पराभिभवनसामर्थ्यम् । वात्सल्यं प्रपन्नदोषादर्शित्वम् । जात्यादिमहत्त्वमनपेक्ष्यातिमन्दैस्सहाप्ययासंश्लेषस्वभावत्वं सौशील्यम् । स्वजनरक्षाशीलत्वं स्वेतरसकलवस्तुनि स्वकीयत्वाध्यवसायोवा स्वामित्वम् । सत्यप्रतिज्ञत्व ममृषाजल्पता । कृतज्ञत्वम् अल्पकृतेंऽपि वहुमन्यता । स्थैर्य्यं स्थिरव्रतत्वम् । युद्धादावचलत्वंवा । पूर्णत्वम्प्रत्युपकाराकांक्षाराहित्यम् । औदौर्य्यमात्मपर्य्यन्तदातृशीलत्वम् । कारुण्यं परदोषक्षपणस्वभावः । दया निर्हेतुकपरदुःखदुःखत्वे सति तन्निराचिकीर्षा । अन्येऽपि आर्जवमार्दवसौहार्द शरण्यत्वादयोऽनुसंन्धेयाः । "विवक्षितगुणोपपत्तेश्च।"सर्वोपेता च दर्शनात् ॥ वे. सू. ॥ 'स्वाभाविकी ज्ञानवलक्रियाचं ॥ श्वेता. उ. ६ ॥ "विष्णोर्नु कंवीर्य्याणिप्रवोचम् यः पार्थिवानि विममे रजांसि"॥ वि.सू.॥ "नते विष्णोजायमानो न जातो देवस्य महिम्नः परमंतमापसहस्रधा महिमानः सहस्रम्"।"ज्ञानशक्तिवलैश्वर्य्यवीर्य्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" ॥ "तेजोवलैश्वर्य्यमहाऽववोधः स्वीवर्य्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥ इत्यादिशास्त्रात् । इति । ॥ अत्र गुणानां यानि लक्षणान्युक्तानि तानि तेषां कार्य्यलक्षणान्येव स्वरूपलक्षणस्य वागगोचरत्वात् । इत्यपि ध्येयम्" । तदेतत्कृष्णशब्दार्थस्य साकल्येन परिज्ञानाय वक्ष्यमाणग्रन्थोपयोगाच्च रहस्यषोडशोक्तों मया संगृहीतम् इति॥ एवं च "कृषिर्भूर्वाचकः शब्द" इति मंत्रेणार्षव्युत्पत्त्या निरतिशयसत्यचिद्रसानन्दरूपः परब्रह्माख्यः श्रीकृष्ण इहोद्दिष्टः । नाम्ना वस्तुसङ्कीर्तन-मुद्देश इतिनिरुक्तलक्षणात् । इति मैथिलभगीरथशर्म्मविरचितायांवेदान्ततत्त्वसमीक्षाख्यायांश्रीगोपालतापिन्युपनिषद्व्याख्यायां-उद्देशग्रंथः ॥

अथ लक्षणग्रंथः ॥ एवं प्रतिपाद्यं वस्तुतत्त्वं समुद्दिश्य स्वरूपतो धर्म्मतः कार्य्यतश्च तल्लक्षणं दर्शयन् नमस्करोति ॥—

**ओं सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।**
**नमो वेदान्तवेद्यायगुरवे बुद्धिसाक्षिणे ॥२॥**

ओं सच्चिदानन्दरूपायेत्यादि । सत्त्वं नाम त्रिकालाबध्यत्वं परमसत्यत्वाऽपरपर्य्यायम् । "सत्यं ज्ञानमनन्तं ब्रह्म" ॥ तै. उ. इतिश्रुत्यन्तरात् । चित्त्वं नाम स्वतः प्रकाशत्वं परप्रकाशकत्वं च "यत्साक्षादपरोक्षाद्ब्रह्म" ॥ बृ. उ. ॥ "न यत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्व्वमिदं विभाति" । मु. उ. ॥ इत्यादिश्रुतेः । परमानुकूलवेदनीयत्वम्-आनन्दत्वम् । "रसो वै सः । रसँ ह्येवायं लब्ध्वाऽनानन्दीभवति कोह्येवान्यात्कः प्राण्यात् । यदेष आकाशआनन्दो न स्यात् । एष ह्येवानन्दयाति । तै. उ. । "तदेतत्प्रेयः पुत्रात्प्रेयोंवित्तात्प्रेयोंऽन्यस्माच्च सर्वस्मादन्तरतरं यदयत्मा" । बृ. उ. इति श्रुतेः ॥ तथाच प्रधानें सत्त्वरजस्तमोंगुणवन्नब्रह्मणि सच्चिदानन्दरूपसंज्ञात्रयम् ।०अपितु एकमेव निरतिशयाखण्डं तत्त्वं त्रिकालाऽवाध्यत्वात्सच्छन्देन स्वतः प्रकाशत्वात्प्रकाशकत्वाच्च चिच्छन्देन निरतिशयानुकूलवेदनीयत्व दानन्दशब्देन च शास्त्रे व्यपदिश्यते, इतिबोध्यम् ॥ अत्र 'सच्चिदानन्दाय" इत्यनुक्त्वा "सच्चिदानन्दरुपाय" इति यदुक्तं तेन तस्य पुरुषाकारत्वमपि तस्य तथा भूतस्यैव सूचितंभवति । तथाच वक्ष्यति "तमेकं गोविन्दं सच्चिदानन्दविग्रहमिति । कृष्णशब्दार्थोस्त्रिविधो भवति इत्युक्तम् तत्राखण्डार्थस्य सच्चिदानन्दरूपायेति स्वपदेनैवोक्तत्वात्—आर्षव्युत्पन्नार्थस्यापि "कृषिभूर्वाचकः शब्दः इति पूर्व्वमंत्रेणैवोक्तत्वाच्च इह कृष्णशब्दः पूर्व्वनिरुक्तव्याकरणव्युत्पन्नार्थमात्रगमक. । सचोक्त एवेति स एव स्मृर्त्तव्योऽत्र योजनीयः । इति ।

एवं कृष्णपदार्थस्य जगज्जन्मादिकर्तृत्वमोक्षदातृत्वस्याविद्याकर्माद्यनुपहतस्व-तंत्रेच्छाप्रयुक्तत्वबोधनायाह—"अक्लिष्टकारिणे" इति । "अविद्याऽस्मितारागद्वेषाभिनिवेशाः पंचक्लेशाः" इतियोगसूत्रोक्ताः पंचक्लेशा बोध्याः । "तेनच क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इतीश्वरलक्षण सूत्रोक्तानां कर्मविपाकाशयानामपि वक्ष्यमाणसूत्रान्तरोक्तानामुपलक्षकाः । तथाच स्वभावत एभिर्दोषैर्वर्जिता जगज्जन्मादिकृतिर्यस्य तस्मैनमइत्यर्थः । "एष आत्मा अपहतपाप्माविजरोविमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः ॥ छा. ॥६॥ "स न साधुना कर्मणा भूयान् नोएवाऽसाधुना कर्म्मणा कनीयान् ॥बृ.॥४।४॥ इत्यादिश्रुतिभ्यः ॥

"नमो वेदान्तवेद्याय" इति । वेदान्तैकसमधिगम्याय समस्तवेदान्तवेद्यायचेत्यर्थः । "नाऽवेदविन्मनुते तं बृहन्तं ॥" शा. उ. ॥१॥ "तंत्वौपनिषदं पुरुषं पृच्छामि" ॥बृ.॥ "सर्व्वे वेदा यत्पदमामनन्ति" ॥क.उ.॥ "नाऽवेदविदमुं विष्णुं मनुते न नरः कचित्" ॥ स्क. पु. ॥ "वेदैश्च सर्वैरहमेव वेद्यः" ॥गी.॥ इत्यादिश्रुतिस्मृतिभ्यः ॥ वक्ष्यति च 'गोभूमिवेदविदितइति" यो वेदैर्गीयते' इतिचेति "गुरवे" इति ॥

स्वात्मप्रकाशनेन सर्वज्ञानसम्पादकाय सर्वश्रेयः प्रापकाय सर्वविद्याप्रवर्तकाय चेत्यर्थः । "गोपीजनवल्लभविज्ञानेनाखिलंविज्ञातंभवति ।" "तस्मादसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदेव ॥" "यो ध्यायति रसयति भजतिसोऽमृतो भवति" ॥ गी ॥ यो ब्रह्माणं विदधाति यो वै वेदाँश्चप्रहिणोति तस्मै तं हदेवमात्मबुद्धिप्रकाशं मुमुक्षुर्वैशरणं व्रजेत् ॥ गो. ॥ इत्यादिवक्ष्यमाणश्रुतिभ्यः । "आत्मनि खलु दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" ॥बृ ॥ "ददामि बुद्धियोगं तं येन मामुपयान्तिते ॥ इत्यादिश्रुत्यन्तरेभ्यः स्मृतिभ्यश्चेति ।

बुद्धिसाक्षिणे" इति । बुद्धिप्रेरकाय बुद्धिगतसर्वद्रष्टे—"धियो यो नः प्रचोदयात्" इतिगायत्रीमंत्रार्थभूतायेत्यर्थः । "साक्षी चेता केवलो निर्गुणश्च" इत्यादिवक्ष्यमाणश्रुतेः । तथाच निरतिशयसच्चिदानन्दविग्र-

हाय सृष्टिस्थितिसंहारकर्त्रे मोक्षदाय सर्वदोषविवर्जिताय यावरात्मभावि-निश्शेषकल्याणगुणशक्तिस्वभावायस्वभावापास्तसमस्त-दोषगणाय समस्तवेदान्तवेद्याय स्वात्मप्रकाशनेनाशेषज्ञानसम्पादकायगायत्रीमंत्रार्थभूताय नमः ॥ इति समग्रमंत्रार्थः ।

एतेन पूर्व्वमुद्दिष्टः कृष्णपदार्थः स्वरूपतो गुणतः कार्य्यतश्च लक्षितः । "सच्चिदानन्दरूपाय" इत्यंशेन स्वरूपलक्षणस्य कृष्णाये त्यंशेन निरुक्तदिशा जगज्जन्मादिबोधकेन कार्य्यलक्षणस्य "अक्लिष्टकारिणे" इत्यंशेन—"एष आत्मा अपहतपाप्माइतिश्रुतिप्रोक्त" "क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः,इतियोगसूत्राद्यु पबृहितस्वधर्मलक्षणस्य च स्फुटं सूचनात् । एवं अनुबन्धचतुष्टयभूता विषयः प्रयोजन सम्बन्धोऽधिकारीच दर्शिताः । तथाहि निरुक्तसमग्रवाक्यार्थभूतः श्रीभगवान्विषयः । तद्भावापत्तिः प्रयोजनम् । अन्येच्छाऽनधीनेच्छाविषयो हि स्वतः प्रयोजनमित्युच्यते । तादृशं चात्यन्तिकदुःखनिवृत्तिर्नित्यनिरतिशयानन्दश्चेति द्वयमेव परोक्षकानुभवसिद्धम् । तत्रापि नित्यनिरतिशयानन्द एव मुख्यं तत्प्राप्तावात्यन्तिकदुःखनिवृतेरयत्नसिद्धत्वात्—सूर्य्यमंडल प्रवेशे तमोनिवृत्तिवत् । नित्यनिरतिशयानन्दश्च श्रीभगवान् एव नान्यः । "भूमैव सुखं नाल्पे सुखमस्ति" ; छा. १४ ॥ इति छान्दोग्यश्रुतेः । एतस्यैव आनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति । बृ. ।४। ॥ "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।" आनन्दं ब्रह्मणो विद्वान्न बिभेतिकुतश्चन । तै. ब्र. ॥ इत्यादि बृहदारण्यकतैत्तरीयादिश्रुतिभ्यश्चः । इति निरन्तरतदनुभूत्यास्थितिलक्षणतद्भावापतिरेव परमं प्रयोजनम् । भूमैव सुखं नाल्पेसुखमस्तिभूमात्वेवविजिज्ञासितव्यः । छा. ।७ ॥ सलिल एकोद्रष्टाऽद्वैतोभवत्येष ब्रह्मलोक सम्राडितिहैवमनुशशासयाज्ञवल्क्य एषाऽस्य परमागतिरेषाऽस्यसम्पदेषोऽस्य परमलोकएषोऽस्य परमआनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति । बृ. ॥५ ॥३॥ जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमितिवीतशोकः, 'निरंजनः। परमं साम्यमु-

पैति"।। मु. उ.।। मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते। गो.। इत्यादि-श्रुतिस्मृतिभ्यः। तच्च प्रयोजनमिह 'सच्चिदानन्दरूपाय' इतिपूर्वार्धेन सूचितं भवति। तादृशस्य विषयभूतस्य भगवत उपनिषदश्च प्रतिपाद्यप्रतिपादकभावः सम्बन्धः। सच 'वेदान्तवेद्यायेति' पदेन सूच्यते। अधिकारी चात्र सर्वत्र ममत्वहीनों ऽत एव शमदमाद्युपेतो मुमुक्षुः शरणार्थी सच नमः शब्देन सूच्यते। म शब्दस्य जीववाचकत्वात्। न शब्दस्य स्वातन्त्र्यनिषेधेन भगवदीयत्वबोधकत्वात् समष्टिनमः शब्दस्यापि समर्पण बोधकत्वेन समर्पणलक्षणशरणागतिसमर्पकत्वाच्च। तच्चाग्रे व्यक्तीभविष्यति। मशब्दस्य जीववाचकत्वमुक्तं रहस्यषोडश्यांश्रीमदाद्याचार्यैर्मकारार्थो जीवजातोंविज्ञेयावैष्णवोत्तमैरिति। व्याख्यातं च श्रीसुन्दरभट्टाचार्य्यपादैः जीवत्वसामान्यावच्छिन्नो मकारशब्दवाच्य इत्यर्थः। "पंचविशोंऽयं पुरुष" इतिश्रुतेः। यथा तत्त्वानांमध्ये पंचविंशोविज्ञानात्मा तथा वर्णानां मध्ये पंचविंशो मकारः क्षेत्रज्ञवाचकः। तद्वाच्यश्चायं पुरुष इति।।. नमः शब्दस्य शरणागतिपरत्वमुक्तं बृहद्ब्रह्मसंहितायां षष्ठाध्याये नारायणमंत्रव्याख्याने "ममत्वे तु मकारः स्यान्नकारस्तन्निषेधने। अतो नैवास्य कर्तृत्वं केवलं शरणं विना। सर्वधर्म्मान्परित्यज्य मामेकं शरणं व्रज" इत्यादिनेति न किंचिदमुपपन्नमिति। इतिश्रीवेदान्ततत्त्वसमीक्षायां गोपालोपनिषद्व्याख्यायामनुबन्धलक्षणग्रन्थः।।

अथपरीक्षाग्रन्थः

मू० मुनयो ह वै ब्रह्माणमूचुः कः परमो देवः कुतो मृत्युर्बिभेति कस्य विज्ञानेनाखिलं विज्ञातं भवति केनेदं विश्वं संसरतीति।

अथोद्दिष्टं लक्षितंचार्थमुपक्रमोपसंहारादिभिरविशेषप्रश्नप्रतिवचनाभ्यां च विशेषतो निरूपयति—"मनुयो हवै,' इत्यादिना—"एकोदेवः

सर्वभूतेषु गूढः” इत्युत्तरतापिन्यन्तग्रन्थेनेति । “मुनयः” इति मननशीला आदिज्ञानिन उर्ध्वरेतसः सनकादयः ब्रह्माणम्-कमलोद्भवम्- ऊचुरिति-सम्बन्धः । ब्राह्मणमिति पाठेऽपि स एवार्थः । ‘ब्रह्मसदनं चरतोमे ध्यातः’ इत्याद्यग्रिमग्रन्थपर्य्यालोचनया तथैव निर्णयात् तथोपसंहारे “ब्रह्मणे ब्रह्मपुत्रेभ्यो नारदाच्च श्रुतंमया” इत्यत्र ब्रह्मपुत्रेभ्य इति शब्दपर्य्यालोचनया सनत्कुमारसंहितादिपर्य्यालोचनया पूर्वव्याख्यातृप्रसिद्धेश्च मुनि शब्दस्य सामान्यत्वेपि तेन सनकादय एव गृहीता इत्यपि बोध्यम् । एवंच वक्तृश्रोतृवैशिष्ट्याद्देतदुपनिषदर्थस्यापि वैशिष्ट्यं ध्वनितम् । पितृपुत्रसंवादात्परमरहस्यत्वमपि ध्वनितंभवति तथाच श्रीब्रह्मणा श्री सनकादिभ्यः तैश्च श्रीनारदायोपदिष्टमिति बोध्यम् ॥

इदंत्विहावधेयम् । यत्र विशेषरूपेण प्रश्नप्रतिवचने भवतस्तत्र नैकान्ततो वस्तुतत्त्वस्य परमार्थरूपेणावधारणम् । तत्र प्रतिवचनस्य वक्तृजिज्ञासानुरोधसंभवात् । यथा कश्चिज्जिज्ञासते गण्डको कीदृशी पावनी नदी तदा वक्ता श्रोतुर्गण्डकीविषयकरुचिं बुद्ध्वा तं प्रति गण्डकीमेव सर्वनदीश्रेष्ठत्वेन वर्णयति तस्य श्रोतुःप्ररोचनार्थं तदा गण्डकी सर्वश्रेष्ठा-सरित् गङ्गाद्यास्तु ततोऽपकृष्टा इत्येव प्रतिवक्तुस्तात्पर्य्यमिति न परीक्ष-कैर्निर्णीयते । किंच यदा गंगापर्य्यन्तं गन्तुमशक्तैर्गण्डकींगंतुं शक्तैः कैश्चिद्दुर्बलैःपुरुषैःपृच्छयतेका सर्वश्रेष्ठा सरिदिति । तदा सामान्यप्रश्नेऽपि गण्डकी सर्वश्रेष्ठा सरिदितिप्रतिवचनंश्रुत्वाऽपि परीक्षकैर्नैकान्ततो निर्णीयते यद्गण्डक्येव सर्वश्रेष्ठा सरिदिति प्रतिवक्तुराशय इति । जिज्ञासोर्गंगापर्य्यन्तगमनेऽनधिकारं गण्डकीपर्य्यन्तगमनाधिकारं च दृष्ट्वा बुद्धिमान् वक्ता जिज्ञासोरधिकारानुसारेणोक्तवानिति शंकासंभवात् तस्मात्तादृशाधिकारहीनजिज्ञासुकृताविशेषप्रश्नेऽपि न वस्तुतत्त्वनिर्णयः । इति तादृशतादृशसंभावनारहिताविशेषप्रश्नप्रतिवचनाभ्यां यत्र पदार्थवि-चारोपक्रमस्तत्रैव परमार्थनिर्णय इति । प्रकृतेतु सर्वज्ञानिगुरवो निवृत्ति मार्गपरमाचार्य्याः परमतत्त्वनिर्णयप्रचारैकपरायणा वीतरागाः

सर्वत्र निरपेक्षाः सर्वपक्षपातविवर्जिताः आत्मारामाः सनकादयो जिज्ञासवः तत्पिता सर्वविद्यानिधिर्वेदतातः सर्वपक्षपातशून्योब्रह्मैव वक्ता, अविशेषप्रश्नप्रतिवचने च इति नात्र निर्णयन्यूनताप्रयोजकीभूतः कोप्युपरितनोक्तदोष इति ।

अतएव यत्र प्रकरणे निरूपिता एते निर्णायकहेतवो न भवन्ति । अपितु तद्विपरीतविशेषप्रश्नप्रतिवचनादिकं भवति तत्र निर्णीतसिद्धान्तापेक्षयाऽस्य सिद्धान्तस्योत्कृष्टत्वमपि बोध्यंबुभुत्सुभिरिति ।

( १ ) अथप्रथमाजिज्ञासा । "कःपरमोदेव" इति ॥ यस्मात्परो नास्ति स परमः सर्वस्मात्परः स्वसमानाऽभ्यधिकशून्यो देवः कः इतिप्रथमप्रश्नवाक्यार्थः । 'यस्मात्परं नापरमस्ति किंचित्" "न तत्समश्चाभ्यधिकश्च दृश्यते" "पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमःप्रैति युक्तः केनेषितां वाचमिमां वदन्ति चक्षुःश्रोत्रं क उ देवोयुनक्ति । केनो. ।१।१॥ तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरोहर्षशोकौ जहाति । क ड. १।२।१२। कस्तं मदामदं देवं मदन्योज्ञातुमर्हति । क.१।२-२१॥ ज्ञात्वा देवं मुच्यतेसर्वपाशैः । श्वेता. ।१।११॥ देवं स्वचित्तस्थमुपास्य पूर्वम् । श्वेता ६ । ७ ॥ तमः परे देवे एकीभवति परस्तान्न सन्नासन्नसदसदित्येतन्निर्वाणानुशासनमितिवेदानुशासनमितिवेदानुशासनमिति । सुबालोप.ख. २॥ एष सर्वभूतान्तरात्मा दिव्योदेव एको नारायणः । सुबा. ७॥ दिव्योदेवएकोनारायणो द्वितीयोऽस्ति कश्चित् । नारा. अथर्व । एकोदेवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च । श्वेता. ६ ।११॥ "तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि" ॥ इत्यादि केनकठश्वेताश्वतरसुबालनारायणाद्युपनिषत्सु परमदुर्ज्ञेयत्वसर्वजीवमोक्षहेतुज्ञानविषयपरमदेवत्वपरममहेश्वरत्वस्वसमानातिशयशून्यत्वसर्वपतित्त्वतमः पर्य्यन्तलयाधिकरणत्वतमःपरत्वतमःपर्य्यन्तनियामकत्वावि-

द्यादिसर्वमलस्पर्शशून्यत्वसर्वभूतगूढत्वसर्वव्यापित्वसर्वभूतान्तरात्मत्वक-र्माध्यक्षत्वसर्वभूताधिवासत्वसाक्षित्वचेतृत्वनिर्गुणत्वसर्वसवितृत्ववरेण्य-त्वादिना निरूपितः परमदेवः किंलक्षणः किंस्वरूपः इति पर्य्यवसितप्रथम-जिज्ञासावाक्यार्थः ।

एतेन ब्रह्मादिदेवानां मध्ये यज्ञेषु त्यागोद्देश्यदेवतानामिन्द्रो-पेंद्रवरुणादीनां मध्ये वा श्रेष्ठो देवः कः इत्येतावन्मात्रमेव प्रथमप्रश्नवाक्या-भिप्रायः। तेन नाऽत्र सर्वातिशायिसर्वात्मभूतप्रकृतिपरपरब्रह्मविचारस्यैका-न्ततः प्रसरः इत्यपि शंकाबीजं निरस्तम्। तावन्मात्रेण परमदेवत्वानि-र्व्वाहारात्, उपर्युक्तश्रुतिसिद्धसर्वातिशायिदेवस्यैव परमदेवत्वसंभवाच्च। तस्मात् स एव परमदेव इह जिज्ञास्यत्वेन प्रस्तुतः। अत एव परमोप-संहारे उत्तरतापिन्यन्ते "एको देवः सर्वभूतेषु गूढः" इतिश्वेताश्वतरा-द्युपनिषदन्तरप्रसिद्धेनस्वासाधारणधर्मपुरस्कारेण सर्वोपनिषत्प्रसिद्धपर-मदेवप्रतिपादकमंत्रेणैवोपसंहारः कृतः। उपक्रमोपसंहारयोरेकवाक्यत्व-स्य सर्ववादिसम्मतत्वादुपक्रमेंऽपि स एवोपनिषत्प्रसिद्धः परमदेवः परब्र-ह्मादिशब्दान्तरव्यपदेश्योंग्राह्यः। इतिबोध्यम्॥ इतिप्रथमाजिज्ञासा।

(२) अतिमृत्युहेतुजिज्ञासा। अथ द्वितीया जिज्ञासा॥ "कुतो-मृत्युर्बिभेति" इति॥ कस्मात्सकाशात्—मृत्युः जन्ममरणपरम्परात्मिका-संसारावस्था बिभेति स्वनाशमाशंकते-इति। कस्य साक्षात्कारेण मृत्युर-त्यन्तं विलीयते इत्यर्थः। "भयादस्याग्निस्तपति भयात्तपति सूर्य्यः। भया-दिंद्रश्च वायुश्च मृत्युर्धावति पंचमः"। कठो. ३। यस्य ब्रह्म क्षत्रंचोंभे भवत ओदनः मृत्युर्य्यस्योपसेचनम्। क. उ.॥ तमेव विदित्वाऽतिमृत्यु-मेति" श्वे. उ.। निचाय्य यन्मृत्युमुखात्प्रमुच्यते। क. उ.॥ अव्यक्तात्तु-परः पुरुषो व्यापकोऽलिङ्ग एव च यज्ज्ञात्वामृत्युमत्येति। क. उ.॥ तमेवं-विद्वान्मृत्युपाशांश्छिनत्ति॥ श्वेता. उ.॥ ज्ञात्वा देवं मुच्यते सर्वपाशैः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः॥ श्वे.॥ इत्यादिश्रुतिप्रतिपाद्यः साक्षा-न्मृत्युविरोध्यतिमृत्युलक्षणमुक्तिप्रदत्त्वेन मृत्योरात्यन्तिकोच्छेदजनकः कः

इतिद्वितीयजिज्ञासावाक्यस्य पर्य्यवसितार्थः ॥

(३) अथ तृतीयजिज्ञासा ॥ "कस्य विज्ञानेनाखिलं विज्ञातं भवति" इति ॥ कस्य परमतत्त्वस्य विज्ञानेन साक्षादनुभवेन अखिलं-दिक्कालाद्यवच्छिन्नमनवच्छिन्नं च सर्वं विज्ञातं साक्षाद्युगपच्चानुभूतं भवतीत्यर्थः। अयंभावः। मुण्डके "कस्मिन्नु भगवो विज्ञाते सर्वमिदंविज्ञातंभवति इतिशौनकप्रश्ने "तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिंगाः सहस्रशः प्रभवन्ते सरूपाः तथाऽक्षराद्विविधाःसौम्यभावाः प्रजायन्ते तत्र चैवापियन्ति इत्यादिना, तथा छान्दोग्ये श्वेतकेतुप्रश्ने "यथा सोम्येकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातंस्यात् वाचारम्भणं विकारो-नामधेयंमृत्तिकेत्येव सत्यम्, इत्यादिना च निरुपितः निखिलजगदभिन्ननि-मित्तोपादनत्वादिना स्वविज्ञानेनाशेषविज्ञानहेतुः सदादिपदार्थः किंलक्षणः किंस्वरुपःकःइति तृतीयजिज्ञासावाक्यार्थः ॥

(४) अथचतुर्थीजिज्ञासा ॥ "केनेदं विश्वं संसरति" इति ॥ इदं नामरूपाभ्यां व्याकृतं जीवजडात्मकं जगत् केन अवान्तरहेतुना संसरति भ्रमति इत्यर्थः। "स्वभावमेके कवयो वदन्ति कालं तथाऽन्ये परिमुह्यमानाः। देवस्यैष महिमातु लोके येनेदं भ्राम्यते ब्रह्म चक्रम्। श्वेता. ६ ॥ इत्यादिश्रुतिषु प्रतिपादितं निखिलप्रपंचसंसरणेऽवान्तरहेतु-भूतं महिमादिशब्दवाच्यंकिम्, इति तुरीयजिज्ञासावाक्यार्थः ॥

इदमत्र विशेषतोऽवधेयम् ॥ निरुक्तप्रश्नचतुष्टयेष्वेकतरप्रश्नेन तदुत्तरेण चापि परब्रह्मतत्त्वनिरुपणसंभवे प्रश्नचतुष्टयस्य किम्प्रयोजनम्। नचैकतरप्रश्नप्रतिवचनाभ्यामंशतो ब्रह्मतत्त्वनिर्णयेऽपि साकल्येन निर्ण-याभावात्-साकल्येन निर्णयजिज्ञासासंभवात् प्रश्नचतुष्टयमितिवाच्यम्। यथा मुण्डकोपनिषदि "कस्मिन्नु भगवोविज्ञातेसर्वमिदंविज्ञातंभवति इति प्रश्ने-यथावा छान्दोग्ये "कथन्नु भगवः स आदेशोभवति" इत्यत्र सर्वविज्ञानविषयकप्रश्ने इतरे सर्वेप्रश्ना गतार्था भवंति। तथाऽत्रापिस्यात्, इति "कस्य विज्ञानेनाखिलं विज्ञातं भवति" इत्येवैकः प्रश्नोऽस्तु। इतरेषामपि

तत्रैवार्थत अन्तर्भावसंभवात्। इतिचेत्।

अत्रोच्यते। नहि सर्वविज्ञानविषयकजिज्ञासाप्रतिवचनमात्राभ्यामितरप्रश्नार्था निरूपितत्वेन गतार्था भवितुमर्हन्ति। निखिलप्रपंचस्य भगवदात्मकत्वनिरूपणमात्रेणैव एकविज्ञानेन सर्वविज्ञाननिरूपणसंभवात्। तावन्मात्रनिरूपणेऽप्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञानिर्वाहसंभवाच्च। एवंच सर्वं भगवदात्मकं भगवाँश्च सर्वात्मा न ततोऽव्यतिरिक्तं किंचित् इत्येवंरूपेण तत्त्वतो ज्ञानेऽपि भगवान् किंस्वरूपः मोक्षप्रदानेन मृत्युनिवर्तको नवा सर्वशक्तिमानुत जडस्वभाव एव सांख्यकल्पितप्रधानादिवत्। इत्यादिसंशयानुपरमात्। नचैवं छान्दोग्येपि सद्विद्यायां समग्रं ब्रह्म न निरुपितमित्युक्तं स्यात्तच्चायुक्तम् "तद्धास्य विजज्ञौ" इत्यंशेन श्रुत्यैव श्वेतकेतोः ब्रह्मज्ञानकथनादिति वाच्यम्। सद्विद्यायां श्वेतकेतोः सर्वविज्ञानविषयकजिज्ञासानुसारेण ब्रह्म केवलं कारणात्मनैव निरूपितं न सर्वतोभावेन तावन्मात्रेणैव जिज्ञासानिवृत्तेः संभवात्। अत एव ब्रह्मणः स्वरूपभूताभ्यांचिदानन्दाभ्यामपि तत्र स्पष्टतो ब्रह्म न निरुपितम्। ईक्षणेन प्रक्रान्तत्वात्-यथाकथंचित्सच्चिदात्मना निरुपणस्वीकारेऽपि-आनन्दात्मना निरुपणं तत्र नास्त्येवेति विस्पष्टं वक्तुं शक्यते। वस्तुतस्तु तत्र सदात्मनैव ब्रह्म निरुपितं सर्वविज्ञाननिर्वाहार्थं प्रपञ्चस्य ब्रह्मात्मकत्वनिरुपणे तावन्मात्रस्यैवोपयोगात्। ईक्षणस्य तु तदुपयोगितया सद्धर्मत्वेनैव निरुपणान्नतु सद्गुणत्वेनेव स्वातंत्र्येण। नच ब्रह्म सन्मात्रं किन्तु सच्चिदानन्दं ब्रह्म "सत्यं ज्ञानमनन्तं ब्रह्म। विज्ञानमानन्दं ब्रह्म" इत्यादिस्वरुपलक्षणश्रुतिभ्यः। तस्मात्तत्र न सर्वतोभावेन ब्रह्मनिरुपणं सर्वतोभावेनब्रह्मनिरुपणंतु-अध्यायत्रयेणैव-। तत्र सद्विद्यायां सदात्मना भूमविद्यायामानन्दात्मना, चिदादिशेषात्मना तु चरमाध्यायेनेति चरमाध्याये एव ब्रह्मविद्या समाप्तिः। एवं मुण्डकेऽपि कारणत्वप्राधान्येनैव ब्रह्मनिरुपणमन्येषां ब्रह्मधर्म्माणां तु तच्छेषत्वेनैव तेन तत्रापि न साकल्येन ब्रह्मस्वरुपनिरुपणमिति तद्विद्यायामपि गुणोपसंहारन्यायेन विद्यान्तरपठित-

स्वरूपधर्मान्तराणामुपसंहारोऽपेक्षित एव। श्वेतकेतोर्हि विज्ञानकथनं तु निखिलप्रापञ्चिकपदार्थानां ब्रह्मात्मकत्वविज्ञानाभिप्रायेण नतु सर्वतोभावेन ब्रह्मज्ञानाभिप्रायेण, इत्यपि वक्तुं शक्यते। नचैवं तस्य मोक्षकथनानुपपत्तिः प्रतिपाद्यते च-तत्र तादृशज्ञानवतः "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते" इत्यंशेन प्रारब्धनाशानन्तरं कैवल्यमोक्षःतातःपूर्वं जीवन्मुक्तिरितिवाच्यम्। सच्चिदंशमात्रप्राधान्येन ब्रह्मज्ञानेन निजस्वरुपलाभरूपकैवल्यमुक्तेःसंभवात्। साक्षात्पुरुषोत्तमसायुज्यलाभरूपमुक्तावेव पुरुषोत्तमस्वरूपौपयिकयावद्धर्म्मप्राधान्येन पुरुषोत्तमस्वरूपज्ञानमपेक्षितमिति न काप्यनुपपत्तिः। यदि च श्वेतकेतुविद्यादिषु यावद्धर्म्मपुरस्कारेण ब्रह्मस्वरुपनिरूपणमस्त्येवेति विभाव्यते तदापि यथा प्रश्नचतुष्टयेन जिज्ञास्यतत्त्वंवर्गीकृत्य निरूपणे पुरोदीरितसर्वश्रुतीनांस्फुटंसमन्वयस्समग्रबोधश्च यथा भवतस्तथा नैकप्रश्नेनेति सर्वश्रुतीनां स्फुटं समन्वयार्थं स्फुष्टतया सर्वतोभावेन पुरुषोत्तमस्वरूपज्ञानार्थं च प्रश्नचतुष्टयमितिविभावनीयम्। वस्तुतस्तु मुण्डकविद्यापेक्षया सद्विद्यापेक्षयाचात्र महद्वैलक्षण्यं तत्र केबलं कारणात्मनैव प्रक्रान्तं नतु स्वशब्दवाच्यत्वेन ब्रह्मस्वरुपानुबन्धियावद्धर्म्मविशिष्टत्वेन। अत्रतु "ओं सच्चिदानन्दरुपाय कृष्णायाक्लिष्टकर्म्मणे नमोवेदान्तवेद्याय गुरुवे बुद्धिसाक्षिणे" इतिमंत्रवर्णप्रतिपादितदिशा निरतिशयसच्चिदानन्दघनत्वेन स्वभावतोऽपास्तसमस्तदोषत्वेननिखिलजगदभिन्ननिमित्तोपादनभूतत्वेन तत एव निखिलजगज्जन्मस्थितिमोक्षहेतुत्वेनानन्तानन्तकल्याणगुणशक्तिस्वभावत्वेन निखिलवेदैकवेद्यत्वेन निखिलनिजात्मकतत्त्वप्रकाशकत्वेन सर्वसाक्षित्वेन च समग्रं ब्रह्म जिज्ञास्यत्वेन प्रक्रान्तं तच्च प्रश्नचतुष्टयमन्तरा न सम्यक् निरुपितं भवितुमर्हतीतिप्रश्नचतुष्टयमावश्यकमिति न विस्मर्तव्यम्।

ननु प्रश्नचतुष्टयकृतेऽपि कथं तत्र निखिलस्वासाधारणधर्म्मोपपन्नत्वेन स्वरूपेण च ब्रह्मणो जिज्ञास्यत्वमितिचेत् शृणु प्रथमः प्रश्नस्तावत्–"कः परमो देव" इति। तत्र परमत्वं स्वसमानाभ्यधिकशून्यत्वमेवेति

पूर्वमुक्तम्। वृत्तिसंकोचे कारणाभावात्। अत एव प्रतिवचने "कृष्णो वै परमं दैवतमिति" अत्र एवकारार्थकेन वै इत्यव्ययेनान्ययोगव्यवच्छिन्नत्वेनैव परमदैवतत्वं कृष्णे निरुपितम्। नचात्र वै शब्दस्यैवकारार्थकत्वे गानाभाव:। उपसंहारे-"तस्मात्कृष्ण एव परमो देव:" इत्यत्रैवकारघटितेनैव वाक्येन निगमनात्। तस्मात्प्रतिवचनोपक्रमेऽपि वै शब्द एवकारार्थक एव, उपक्रमोपसंहारयोरेकवाक्यतायाः परमावश्यकत्वात्। अतएव परमोपसंहारे-उत्तरतापिन्यन्ते-"एकोदेव: सर्वभूतेषु गूढ: सर्वव्यापी सर्वभूतान्तरात्मा॥ कर्म्माध्यक्ष: सर्वभूताधिवास: साक्षी चेता: केवलो निर्गुणश्च" इतिमंत्रेणाद्वितीयत्वादिघटितदेवत्वादिबोधकैनैकादिपदघटितवाक्येनैवोपसंहार:। अतो जिज्ञासावाक्येऽपि परमपदेन स्वसमाधिकशून्यत्वेनैवोपक्रम: इतिबोध्यम्। इति परमशब्दार्थविचार:॥

अथ देवशब्दार्थोविचार्य्यते॥ एवं देवशब्दश्च यदा ऽन्यतोऽपि प्रयुक्तो यथासंभवं स्वरूपतोधर्म्मतश्च दोषविनिर्मुक्तं विविधसद्गुणशक्त्यादियुक्तं नित्यं चेतनविशेषमेवार्थं गमयति तदा उक्तार्थकपरमपदसमभिव्याहृत: प्रश्नान्तरसमभिव्याहृतश्च देवशब्द: स्वभावत एव ततोविशेषं प्रकरणोपयुक्तं चेतनविशेषंबोधयेदेवेति निर्विवादसिद्धम्। एवंचात्र देवशब्द:-अनादिसिद्धनिजस्वरूपमहिम्नैवानादित एवापास्ताविद्यास्मितारागद्वेषाभिनिवेशादिसमस्तदोषकदम्बम्, अनादिस्वरूपसिद्धाशेषानन्तयावदात्मभाविप्रकृतिकालातीतनिजस्वरूपात्मकगुणशक्तिस्वभावं नित्यनिरतिशयविचित्रक्रीड़ापरायणं सर्वातिशायिचेतनविशेषमेव बोधयति। अपिच दिवुधात्वर्थविचारेणापि स एवार्थ: प्रमीयते। तथाहि "दिवु क्रीड़ाविजिगिषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु" इतिधातुपाठात् क्रीडादिदशविधेऽर्थे दिवुधातु: प्रयुज्यते तेन निष्पन्नोदेवशब्द वृत्तिसंकोचेकारणाभावात् फलत: सर्वानेव निर्दिष्टधात्वर्थान् गमयति। तत्रापि स्वसमानाभ्यधिकशून्यत्वार्थकपरमपदसमभिव्याहृतप्रश्नान्तरसमभित्याहृतश्च देवशब्द: स्वसमानातिशयशून्यानतएव निजस्वरूपमहिमातिरिक्तसाधननि-

रपेक्षानत एवानादिसिद्धानेव तादृशानर्थान्बोधयति॥ तथाच दिव्यति क्रीडते इति देवः। तच्च क्रीडनमन्तरंगबहिरंगभेदेन द्विविधम्। तत्र अन्तरंगं प्रकृतिपरे परमे व्योम्नि निजार्धांगभूतया श्रीदेव्या, अन्यैश्च नित्यमुक्तैः साधनमुक्तैश्च सह। तथाच वक्ष्यति—"कृष्णाय गोपीनाथाय" रमामानसहंसाय—"वल्लवीवदनाम्भोजमालिने नृत्यशालिने" इत्यादिना। अन्यत्र जितंतेस्तोत्रादौ "लोकं वैकुण्ठनामानमि" त्याद्युपक्रम्य "क्रीडन्तं रमया सार्द्धं लीलाभूमिषु केशवमि" त्यादिनेति। बहिरंगन्तु विश्वसर्गादिलक्षणम्। तत्रान्तरंगरमणं विशेषतः निजस्वरूपनिजाधिदैवत रसात्मक एव सच रसो रतिस्थायिकः सुखातिशय एव सर्वत्र पर्य्यवस्यति। प्रकृते तु परमपदसमभिव्याहारात्प्रशान्तरसमभिव्याहाराच्च निरतिशयं रसात्मकं सुखमेव गमयति। भगवतः शृङ्गाररसाधिदैवतत्वाच्छान्तरसाधिदैवतत्त्वाच्च सुतरां स्वरूपमपि "रसो वै सः रसँह्येवायं लब्ध्वाऽनन्दी भवति को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एषह्येवानन्दयाति"। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्च" इत्यादि तैतरीयादिश्रुतिसिद्धंपरमकाष्ठापन्नरसानन्दरूपं गमयति। स्वरूपस्य निरतिशयरसानन्दरूपत्वमन्तरा निरतिशयरसानन्दस्वस्वरूपात्मकसाधनातिरिक्तसाधननिरपेक्षरसलीलाऽसंभवात्। तदेव च तादृशनिरतिशयरसानन्दलीलौपयिकंनित्यनिरतिशयस्वरूपात्मकं सर्वविधगुणशक्त्यादिमत्त्वं सर्वदोषविवर्जितत्वंच गमयति। बहिरंगरमणमपि विश्वसर्गादिलक्षणं सर्वजगत्कर्तृत्वंगमयन्—तदविनाभावसिद्धं निरतिशयसर्वविधसामर्थ्यवत्वं गमयति तथाच प्रथमव्युत्पत्त्या देवशब्देन नित्यनिरतिशयानन्दलक्षणं सर्वैश्वर्य्यमयं निखिलजगज्जनिनिमित्तोपादानंवस्तुतत्त्वं सूचितम्॥

दीव्यति द्योतते इति देवः। द्युतिः प्रकाशः। सोऽपिच परमपदसमभिव्याहारमहिम्ना स्वरूपतो धर्म्मतश्च—अविद्यापर्य्यन्तसर्वतमोविरुद्धस्वभावं निरतिशयचिद्रूपतत्त्वमेव गमयति। प्राकृते प्रकाशे सर्वा-

तिशायित्वलक्षणस्य समभिव्याहृतपरमपदार्थत्वस्याऽसंभवात्। एवंच व्युत्पत्तिद्वयेनोक्तं चिदानन्दरूपत्वमन्यथाऽनुपपत्त्याऽविनाभावेन च परमसत्यत्वलक्षणं सद्रूपत्वमपि गमयति। निजस्वरूपमहिमातिरिक्त-साधनान्तरनिरपेक्षस्वरूपात्मकविविधलीलामयत्वसूचनेन तदविनाभूतनि-त्यनिरतिशयस्वाभाविकस्वरूपात्मकानन्तकल्याणगुणशक्त्यादिकमपि सू-चितमेवेत्युक्तमेव। इतरेऽपि विजिगीषादिधात्वर्था यथायथं तादृशस्वरूप-गुणशक्त्यादिकमेव बोधयन्ते। तथाहि विजिगीषा सामर्थ्यसाध्यत्वात् तादृशसामर्थ्यवत्त्वम्। प्रशस्तगुणकथनरूपायाः स्तुतेः गुणातिशयसाध्य-त्वात् तादृशगुणवत्त्वंमादनस्य सर्वातिशायिसौन्दर्य्यमाधुर्य्यादिगुणसा-ध्यत्वात्तादृशसौन्दर्य्यादिधर्म्मवत्त्वमानन्दोद्रेकरूपमोदस्यानन्दरूपत्वात्तादृ-शानन्दरूपत्वं च सुतरामुक्तं भवति। तत्रापि परमपदसमभिव्याहारात्-तेषां सर्वेषां निरतिशयत्वमेवबोधितंभवति।एवमन्येऽपि दिवुधात्वर्थास्तत्र ऊहनीयाः। तथा रूढ़िविचारेण योगार्थविचारेण चात्र—अनादिसिद्धनि-जस्वभावापास्तसमस्तहेयसंम्बन्धः नित्यनिरतिशयकल्याणमयानन्तयाव-दात्मभाविगुणशक्तिस्वभावः, नित्यनिरतिशयानन्तविविधक्रीड़ामयः, नि-त्यनिरतिशयसच्चिदानन्दस्वरूपः, पुरुषविशेषः, परमपदसमभिव्याहृतप्र-श्नान्तरसमभिव्याहृतदेवशब्दार्थः। एतादृशार्थमादायैव वेदान्तेषु देव-शब्दः प्रयुज्यते नतु यज्ञादौ त्यागोद्देश्यत्वादिरूपदेवत्वादिमात्राभिप्रा-येण। स एव चार्थोऽत्रप्रथमजिज्ञासाविषयः।

एवमेव वेदान्तरत्नमंजूषायां पुरुषोत्तमाचार्य्यपादैरपि देवशब्दार्थो व्याख्यातः। तथाहि—"देवशब्दार्थमाह—ब्रह्मेति स्वरूपगुणशक्त्यादिभि-र्निरतिशयबृहद्वस्तु ब्रह्मशब्दाभिधेयमित्युक्तं पुरस्तात्। तदेव देवपदेना-भिधीयते। तथाहि दिव्यति क्रीडति विश्वसर्गादिभिरितिदेवः—'ओं नमो विश्वरूपाय विश्वस्थित्यन्तहेतवे" इति मंत्रवर्णात्—'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते" इति भगवद्वचनाच्च। विजिगीषतेऽसुरानितिदेवः। "कंशवंशविनाशाय केशिचाणूरघातिने" इतिमंत्रवर्णात् "संरक्षणाय

साधूनां विनाशायचदुःकृतामि" तिवाक्याच्च। सर्वभूतेष्वन्तर्य्यामितया व्यवहरतीतिदेवः "य आत्मानमन्तरोयमयति"–एष त आत्माऽन्तर्य्यामी्यमृतः" "सर्वस्य चाहं हृदि सन्निविष्ट" इति। द्योतते इति देवः। "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"। "येन सूर्य्यस्तपति तेजसेद्धः"। इत्यादिश्रुतेः। "यदादित्यगतं तेजो जगद्भासयतेऽखिलं यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमि" तिस्मृतेश्च। स्तूयते ब्रह्मादिभिरिति देवः। "तमेकं गोविन्दंसच्चिदानन्दविग्रहं वृन्दावनसुरभूरुहतलासीनं सततं मरुद्गणोऽहं परमया स्तुत्या स्तोषयामि" इतिश्रुतेः गो. ता.। "स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभि" रिति स्मृतेश्च। सर्वत्र गच्छतीति देवः। "यःसर्वज्ञः स सर्ववित्"। "वेदाहं समतीतानि वर्तमानानि चार्जुन भविष्याणिच भूतानि मांतु वेद न कश्चनेति"। "अनेजदेकं मनसो जवीयो" "मया ततमिदं सर्वं जगदव्यक्तमूर्तिना" इति। "एको वशी सर्वगः कृष्ण ईड्यः" इति। मोदतेवेतिदेवः, "एष ह्येवानन्दयाति; इत्यादिनिर्वचनेभ्योदेवशब्दोब्रह्मवाचकइत्यन्तग्रन्थेनेति। एवमेवच प्रपन्नसुरतरुमंजर्य्यां श्रीसुन्दरभट्टाचार्य्यचरणैरपि देवशब्दार्थो व्याख्यातः। तथा तत्रत्यग्रन्थसन्दर्भः। "सर्वज्ञः सर्वशो विश्वात्मा विश्वप्रकाशको विश्वनियन्ता विश्वसर्गादिहेतुः सर्वजेता ब्रह्मादि सर्वदेवस्तुत्यः स्वरूपानन्दमुदितः स्वाश्रितमोददाता सत्यकामो भगवान्वासुदेवः श्रीनिवासो देवशब्दार्थः। 'दिवु क्रीडाविजिगिषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु" इत्यादिधातुपाठात्। तथाहि दीव्यति क्रीडते "विश्वसर्गादिभिरितिदेवः" "यतोवा इमानि भूतानि जायन्ते" इतिश्रुतेः। विजिगीषतेऽसुरानिति देवः। 'कंशवंशविनाशाय केशिचाणूरघातिने" इतिमंत्रवर्णात्। दिव्यते स्तूयते इतिदेवः "यंसर्वेदेवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च," 'वृषभध्वजवन्द्याय" इत्यादिश्रुतेः। मोदते मोदयते वा देवः।" "विज्ञानमानन्दं ब्रह्म, एष ह्येषाऽऽनन्दयाति इतिश्रुतेः। गच्छतीति देवः। गत्यर्थस्त्रिविधः ज्ञानगमनप्राप्तिभेदात्। तत्र सर्वं गच्छति गमनं करोतीति

देवः ।" "अनेजदेकं मनसो जवीयः" इतिश्रुतेः। विश्वंगच्छतीति प्राप्नोतीति वा देवः ।" "एष सर्वभूतान्तरात्मा" इत्यादिश्रुतेः । विश्वं दीव्यति द्योतते इतिदेवः । तमेव भान्तमनुभाति सर्वं तस्यभासा सर्वमिदं विभाति" येन सूर्य्यस्तपति तेजसेद्धः, इत्यादिश्रुतेः । सर्वस्मिँस्तदन्तर्यामितया व्यवहरतीति देवः। "अन्तःप्रविष्टः शास्ता जनानां" "दिव्योदेवएकोनारायणः" इतिश्रुतेरितिसंक्षेपार्थइत्यन्तेनेति । एतावान् परंविशेषः । यदत्र "देवो मुक्तिप्रदो हरिः" इत्यनेन विशेषस्य निर्णीतत्वात्-श्रीनिवासोभगवान्वासुदेवइति विशेषनिर्धारणमपि दर्शितम् । प्रकृतेतु "कः परमोदेवः" इति विशेषस्य जिज्ञास्यत्वान्न श्रीनिवासवासुदेवादिपदवाच्यत्वेन विशेषनिर्धारणमिति न प्रश्नस्याविशेषत्वहानिरितिध्येयम् ।

तथाच । स्वरूपतो धर्मतश्च परे ब्रह्मणि जिज्ञासिते स्वरूपतोधर्म्मतश्च ब्रह्मनिरूपकाणां वेदान्तवाक्यानाम्-"सत्यंज्ञानमनन्तं ब्रह्म" तै. उ. ।। "विज्ञानमानन्दं ब्रह्म रातिर्दातुःपरायणम्" । बृ. उ. ।। "यत्तद्रेस्यग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रम् ।" मु. उ. ।। "अस्थूलमनणु।" बृ. उ. ।। "आनन्दं ब्रह्मणोविद्वान्" । तै. उ. ।। "एष आत्मा अपहतपाप्मा" । छा. उ. । "सत्यकामः सत्यसंकल्पः, सर्वकामः सर्वगन्धः" । छा. उ. । "यः सर्वज्ञः स सर्ववित्"। मु उ. ।। "आत्मैवेदमग्रआसीत्" बृ. ।। "तदेतत्प्रेय पुत्रात्प्रेयोवित्तात्-प्रेयोऽन्यस्माच्चसर्वस्मादन्तरतरंयदयत्मा" । बृ उ. ।। "एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तज्योतिः"। "य एषोऽहृदय आकाशस्तस्मिञ्शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय-"एष नेति नेत्यात्माऽगृह्यो नहि गृह्यते ऽशीर्य्यो नहि शीर्य्यते:" "एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्" "स वा एष महानज आत्मा योऽयं "अजरोऽमरोऽमृतोऽभयो ब्रह्माभयम्।। "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघनः एवं वाऽरेयमात्मा-

ऽनन्तरोऽवाह्यः कृत्स्नः प्रज्ञानघनः "स एष नेति नेत्यात्माऽगृह्यो नहि-गृह्यते । बृ. उ. ॥ "भूमैव सुखंनाल्पे सुखमस्ति । छा. ॥ "अपाणिपादो-जवनोगृहीता, पराऽस्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानवलक्रियाच । श्वेता. ६ ॥ इत्यादीनामवतारिकायामुदाहृतानाम् "केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति:" इत्यादिदेवपदघटितानांचैतत्र यस्मिन्नर्थेसमन्वयः स पदार्थः कः इति जिज्ञासितो भवति । तेषां समन्वयं विना निरुक्तलक्ष-णपरमदेवत्वस्य निर्धारणासंभवात् । अतस्तेषांवेदान्तवाक्यानांपूर्वतापि-न्यामुत्तरतापिन्यांच समन्वयं दर्शयिष्यतीत्युत्तरत्र क्रमशोदर्शयिष्यामिच। ननु निदर्शितरूढिप्रकारेण योगप्रकारेण वा प्रकृते देवपदार्थपरिग्रहे मतान्त-रीत्या देवपदार्थस्य सगुणसोपाधिब्रह्मविषयकत्वमेवायातिः उपहितब्रह्मण एव मताऽन्तरे तादृशगुणशक्त्यादिमत्त्वात् । तथाचैतज्जिज्ञासाया उपहित-ब्रह्मविषयकत्वान्न परमतत्त्वनिर्णायकत्वमितिचेत् । उच्यते । नह्यत्रजि-ज्ञासायाः सोपहितब्रह्मविषयत्वेनिरुपधिब्रह्मविषयकत्वेवातात्पर्य्यम् अ-पितु सगुणवाक्यानां निर्गुणवाक्यानांच सर्वेषांवेदान्तानांयत्र समन्वयः सः पदार्थः कः इत्येव तात्पर्य्यम् । एवमेव वस्तुतत्त्वनिर्धारोभवितुमर्हति नतु विशिष्य सगुणजिज्ञासया निर्गुणजिज्ञासया वा–"सर्वे वेदा यत्पदमाम-नान्ति" इति श्रुतेः । "वेदैश्चसर्वैरहमेववेद्यः" इतिस्मृतेश्च समस्तवेदान्तप्र-तिपाद्यं यद्वस्तु तदेव परमं तत्त्वं नतु केवलं निर्गुणवाक्यप्रतिपाद्यं सगु-णवाक्यप्रतिपाद्यंवा । मया देवशब्दार्थस्तथैव व्याख्यातो यथा सो-ऽर्थः निर्गुणवाक्यरूपाणां सगुणवाक्यरूपाणांच सर्वेषां वेदा-न्तानां विषयोभवति । युक्तं चैतत्–"एकोदेवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च" "तमीश्वराणां परमंमहेश्वरं तं देवतानां परमं च दैवतं पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् । श्वे. उ. ॥ इत्याद्युदा-हृतश्रुतिषु देवशब्दस्य सगुणनिर्गुणोभयप्रतिपादकशब्दसामानाधिकरण्ये-

नैव श्रुतत्वेन विशेषाभावात् ।

एवं च यद्यपि सर्वेषामेव वेदान्तवाक्यानांसमन्वयोऽर्थातोऽस्यामेव जिज्ञासायामन्तर्भूतः । तथापि मुक्तिवाक्यानां कारणवाक्यानां संसृत्यवान्तरहेतु वाक्यानां च तथा तद्बोधितानांमोचकत्वनिखिलजगदभिन्ननिमित्तोपादानत्वसंसृतिहेतुत्वादीनां च पूर्वोक्तस्वरूपप्रतिपादकधर्म्मप्रतिपादकवाक्यानामिव स्फुटं स्वरूपानुबन्धित्वाभावात् तन्निरूपणमन्तरापि परमदेवस्वरूपनिरुपणसंभवात् स्वातंत्र्येण स्वशब्दवाच्यत्वेन च स्वरूपवाक्यानांधर्मवाक्यानांचैव समन्वयाय क्रमेण त्रयः प्रश्नाः "(१) कुतोमृत्युर्बिभेति । (२) कस्य विज्ञानेनाखिलं विज्ञातं भवति । (३) केनेदंविश्वं संसरति" इति बोध्यम् । तत्र प्रथमेन मुक्तिहेतुत्वबोधकानां पूर्वोक्तानां "तमेवविदित्वाऽतिमृत्युमेति" "मृत्युर्धावति पंचमः" इत्यादिवेदान्तवाक्यानां तत्प्रतिपाद्यमुक्तिहेतुत्वस्य चैकत्र समन्वयो जिज्ञासितः (२)। द्वितीयेन कारणवाक्यानां पूर्निखिलजगदभिन्ननिमित्तोपादनत्वबोधकानां पूर्वपठितानां "सदेव सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" "सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठानाः "ऐनदात्म्यमिदँ सर्वम् ।" "तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति" "तथाऽक्षरात्संभतीहविश्वम् ।" "पुरुष एवेदँ सर्वम्" "यतो वा इमानि भूतानि जायंते" इत्यादिवाक्यानामेकत्र समन्वयो जिज्ञासितः (३) तृतीयेण संसृत्यवान्तरहेतुभूतानांमायादिप्रतिपादकवेदान्तवाक्यानां समन्वयो जिज्ञासितः । इति चतुर्धा वर्गीकृत्य सर्वेषामेव वेदान्तवाक्यामेकत्र समन्वयो जिज्ञासितो भवति इति न किंचिदवशिष्यते । तदेवं सर्वेषां वेदान्तवाक्यानां यस्मिन्नेकस्मिन्नर्थे समन्वयः स एव "सर्वे वेदा यत्पदमामनन्ति" इतिश्रुत्युक्तलक्षणः समग्रवेदान्तानांपरमार्थभूतो न ततोऽधिकं किंचिदवशिष्यते इतिप्रश्नकृतांतात्पर्य्यमितिभावः ॥

**मू० तदुहोवाच ब्राह्मणः । कृष्णो वै परमं दैवतम् ।**

**गोविन्दान्मृत्युर्बिभेति । गोपीजनवल्लभज्ञानेनैतद् विज्ञातं भवति । स्वाहेदं विश्वं संसरतीति ।**

अथप्रतिवचनम् । तदुहोवाचेति ॥ तत्-तदनन्तरम् ॥ प्रश्नचतुष्टय-श्रवणानन्तरम् । सर्वेषां वेदान्तानामेकत्र समन्वयं समीक्ष्य ह स्फुटं-उवाच तेषां प्रश्नानां क्रमेणोत्तरचतुष्टयमुवाच-ब्राह्मणः ब्रह्मतत्त्वदर्शी हिरण्यगर्भइत्यर्थः । "य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः" बृ. उ. ८-१ । "विष्णुक्रान्तं वासुदेवं विजानन् विप्रो विप्रत्वं गच्छते तत्वदर्शी" । शा. उ । "योब्रह्मणं विदधाति पूर्वंयो वै विद्याश्चतस्मैगोपायतिस्म-कृष्णः, इत्यादिश्रुतेः "कृष्णो वै परमंदैवतमिति" । अत्र वै शब्द एवकारार्थकः॥ "तस्मात्कृष्ण एव परमो देवः" इत्युपसंहारेणैकवाक्यत्वात् । उपक्रमोपसंसारयोरकवाक्यत्वस्य परमावश्यकत्वात् । तथाचात्र वै इत्यव्ययस्यान्ययोगव्यवच्छेद एवार्थः । परमशब्दो दैवतशब्दश्च निरुक्तार्थ-कावेव । तथाच कृष्ण एव पूर्वोक्तलक्षणस्वसमानाभ्यधिकशून्यो देवो नान्यः कश्चित् इतिनिर्धारणगर्भितः प्रथमवाक्यार्थः । एवमुत्तरवाक्या-न्तरेष्वपि बोध्यम् । वै शब्दस्य समानन्यायेन उत्तरचतुष्टयेऽन्वये तात्प-र्यप्रतीतेः । देहलीदीपन्यायोऽत्रानुसंन्धेयः । तथाच कृष्ण एव परमोदेवः । गोविन्दादेव मृत्युर्बिभेति॥ गोपीजनवल्लभविज्ञानेनैवाखिलंविज्ञातंभवति । स्वाहयैवेदंविश्वं संसरति । इत्युत्तरवाक्यचतुष्टयार्थः । यथा च गोपी-जनवल्लभविज्ञानेनाखिलविज्ञानं तथाऽग्रे गोपीजनाविद्याकलाप्रेरकः, इति-व्याख्यानावसरे व्यक्तोभविष्यति-इति ॥

**मू० तदु होचुः । कः कृष्णः । गोविन्दश्च कोऽसाविति । गोपीजनवल्लभश्च कः । का स्वाहेति**

ननु प्रश्नचतुष्टयेन सर्वेषां वेदान्तानामेकत्र समन्वयो जिज्ञासितः । भवद्भिस्तु कृष्णादिचतुष्टये तानि समन्वीयन्ते॥ तर्हिकिं वेदान्तवाक्यान्य-नेकनिष्ठान्येव नैकनिष्ठानि । तर्हि-"सर्वे वेदा यत्पदमामनन्ति" । क. ठ.

उ. ।। "एकमेवाद्वितीयम्" । छा. उ. इत्यादिश्रुतीनां का गतिः । सर्ववेद-वेद्यैकाद्वितीयतत्त्वाभावात् । उत प्रवृत्तिनिमित्तभेदेन नाममात्रं भिद्यते-धर्म्मितत्त्वं तु नामचतुष्टयप्रतिपाद्यमेकमेवाद्वितीयम् । तथापि नामचतुष्टये-नैकवस्तुप्रतिपादने किंप्रयोजनम् । किंच कथं कृष्णः परमोदेवः कथं च गोविन्दान्मृत्युर्बिभेति कथं च गोपीजनवल्लभविज्ञानेनाखिलं विज्ञातं भवति इत्यप्युपपादनीयमित्यादिकं हृदि निधाय प्रतिवचनपरिशुद्धये मुनयः पप्रच्छुः—"कः कृष्णः" इत्यादि । प्रवृत्तिनिमित्तभेदेन नाममात्रंभिद्यते प्रतिपाद्यं धर्म्मितत्त्वं त्वेकमेव नामभेदेनोत्तरचतुष्टयप्रदानं प्रतिपाद्यतत्त्व-परिशुद्धय एवेत्यभिप्रायेण तत्तन्नामधेयानामंशतः प्रवृत्तिनिमित्तानि कथयन्नुत्तरमाह—"पापकर्षणः" इत्यादि । इह निखिलं हेयतत्त्वं पापशब्दे-नोच्यते ।। हेयतत्त्वमात्रस्यैव पतनहेतुत्वेन दुःखहेतुत्वेन च पापपातकादिपद-वाच्यत्वात्, वृत्तिसंकोचे कारणाभावात् । निरुक्तलक्षणपरमदेवत्वप्रत्य-नीकधर्म्ममात्रस्यैवात्र पापशब्देन ग्रहितुमुचितत्वाच्च । तथाच निरुक्त-लक्षणदेवत्वप्रत्यनीकभूताः—"अविद्याऽस्मितारागद्वेषाभिनिवेशाः पंच-क्लेशाः इतियोगसूत्रोक्ताः पंचक्लेशाः । तन्मूलका असर्वज्ञत्वासत्यकाम-त्वासत्यसंकल्पत्वासमर्थत्वादयो निरनुकोशत्वनिष्ठुरत्वादयोऽसत्यत्व-जडत्वदुःखत्वादयः सातिशयत्वास्वतंत्रत्वानीश्वरत्वादयश्च दोषा यथायथं स्वभावतोनिर्दोषत्वाशेषकल्याणगुणशक्तिस्वभावत्वसच्चिदानन्दघनत्वसमा-नाभ्यधिकशून्यत्वस्वतंत्रत्वसर्वेश्वरत्वादिप्रत्यनीकभूताः प्रकृते पापशब्दे-नोच्यन्ते । तेषांकर्षणः, तेषां—साक्षाद्विरुद्धस्वभावतया तमसःसूर्य्यप्रकाश इव साधनान्तरमनपेक्ष्यैव निजस्वरूपमहिम्नैव स्वतोऽस्पृष्टस्वभावः भ-क्तानां तन्निराशकश्चेत्यर्थः । एतेन कृष्णपदवाच्यत्वेनैव प्रकृते परमदेवत्वा-भिधाने बीजमपि सूचितम् । नहि पापतत्फलयुक्तो देवो भवति सुतरां परमदेव इत्यप्यनुसंधेयम् ।। अत्र "कृषिर्भूवाचकः शब्द" इतिमंत्रव्या-ख्याने पूर्वमुक्ताःसर्वाःसखंडाखंडव्युत्पत्तयस्तात्पर्य्येणान्तर्भूताः । त-थाहि पापकर्षणः, इत्यस्य निजानादिसिद्धस्वरूपमहिम्नैव स्वतोविरुद्धस्व-

भावतया साधनान्तरमनपेक्ष्यैवाविद्याऽस्मितादिपापानां विनाशकतयातैर-स्पृष्टस्वभावत्वमेवार्थः । तच्चाविद्यादिसर्वदोषविरुद्धस्वभावं निजानांदिसि-द्धस्वरूपमाहात्म्यमपहतपाप्मात्वादियुक्तसच्चिदानन्दत्वसर्वात्मत्वसर्वादि-त्वसर्वज्ञत्वसर्वशक्तिमत्त्वसत्यसंकल्पत्वसर्वकारणत्वादिकमेव । एवंच पूर्वनिरुक्तार्थानां सर्वेषामत्रैवान्तर्भावात् तादृशसर्वविधव्युत्पत्तीनामप्य-न्तर्भावः सुवच एवेति । श्रीकृष्णस्य सर्वदोषविरुद्धस्वभावस्वरूपधर्मादि-कमिह–"एको वशी सर्वगः कृष्णः ।" "नित्यो नित्यानाम्" ततो विशुद्धं विमलं विशोकम् ।" "नमो विज्ञानरूपाय परमानन्दरूपिणे" इत्यादिवा-क्यैः संक्षेपतो दर्शयिष्यति विशेषतस्तु प्रकरणविभागेन उत्तरतापिन्यां– "साक्षात्प्रकृतिपरोयमात्मा गोपालः' । उ. ता. । "..ाग्रत्स्वप्नसुषप्तिमती-त्य तुर्यातीतो गोपालः" । उ. ता. । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गु-णश्च । ( गो. उ. ता. ) इत्यादौ सोपपत्तिकं निरूपयिष्यति । इह तु सूत्र-मात्रमुक्तम्–इति नात्र शंकावसरइति ।

अथ गोविन्दपदार्थविचारः । "गोभूमिवेदविदितो विदि-ताचेति' अत्र "योऽसौ सूर्य्ये तिष्ठ त । योऽसौ गाः पालयति । योऽसौ सर्वेषु गोपेषु तिष्ठति । योऽसौ सर्वेषु वेदेषु तिष्ठति । योऽसौ सर्वैर्वेदं-र्गीयते । योऽसौ सर्वेषु भूतेष्वाविश्य भूतानि विदधाति' इति उत्तरता-पिन्यांवक्ष्यमाणाः श्रुतयोऽनुसन्धेयाः । "स्वर्गेषु पशुवाग्वज्रदिग्नेत्रघृणि-भूतले । लक्ष्यदृष्ट्यास्त्रियां पुंसि गौः" इति नैघण्टुकोक्तेः—"गोविंदप-दघटकगोशब्देन सर्वे एते सूर्यादयोऽर्थाः संग्रहीताः भवन्ति । तथाच– "गोभूमिवेदविदतः' इत्यत्र भूमिवेदातिरिक्ता उत्तरतापिन्युक्ता सर्वे सूर्य्यादयोऽर्थागोशब्देन क्रोडीकृता वेदितव्याः । "गोभूमिवेदशब्दाश्च पंचविंशतेरपि तत्त्वानां समष्टिव्यष्टिभूतानामुपलक्षकाः । तथाच तेष्वन्तर्या-मितया प्रकाशकतया च विदितः वेदवाक्यैर्ज्ञातः इति । 'विदिता" इति– तत्तदात्मतया साक्षित्वेन तेषु तेषु विद्यमानतया विदिता ज्ञाताच यतोऽतः

स एव परमोदेवः कृष्णो गोविन्दशब्देनाप्युच्यत-इतिभावः। "शब्द-वानाकाशः शब्दाकाशाभ्यांभिन्नस्तस्मिन्नाकाशस्तिष्ठति। आकाशे तिष्ठति स ह्याकाशस्तं न वेद स ह्यात्माऽहं कथं भोक्ता भवामिः" "द्वौ सुपर्णौ भवतो ब्रह्मणोंऽशभूतस्तथेतरोभोक्ताभवति अन्योहि साक्षी भवति" "योऽसौ सूर्ये तिष्ठति" इत्यद्युत्तरतापिनीवाक्यानुसंधानेन सुबालबृहदारण्यकाद्युक्तान्तर्यामिवाक्यानां जडचेतनात्मकनिखिलप्रपंचस्य भगवन्नियम्यत्वनिरूपकानां-"यस्य पृथिवी शरीरं यः पृथिवीमन्तरे संचरन्यं पृथिवी न वेद। यस्यापः शरीरम्०। यस्य तेजः०। यस्य वायु०। यस्याकाशः०। यस्य मनः०। यस्य बुद्धिः०। यस्याहंकारः०। यस्य चित्तम्०। यस्या व्यक्तम्०। यस्याक्षरम्०। "यस्य मृत्युः शरीरंयो मृत्युमन्तरे संचरन् यं मृत्युर्न वेद॥ एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" (सुबा. उ. ६) यः पृथिव्यांतिष्ठन् पृथिव्यां अन्तरो यं पृथिवी न वेद-यस्य पृथिवी शरीरं-यः पृथिवीमन्तरोयमयत्येष त आत्मान्तर्याम्यमृतः" "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्तिमन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतः।बृ उ. ७। तथा-"भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः। "भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पंचमः।" तै. ब्र.। "यस्य ब्रह्म क्षत्रंचोभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः। कठ.१। ३।२०॥ इत्यादिवाक्यानामनुसंधानेन च पृथिव्यादिमृत्युपर्यन्तानामचेतनानां चेतनानां च भगवदायत्तास्थितिप्रवृत्तिकत्वं सुज्ञातं भवति। तथाच वस्तुतो भगवानेव संसारबन्धस्थितिमोक्षहेतुः। तदज्ञानादेव जीवाः संसारिणो भवन्ति भगवदधिष्ठित एव मृत्युर्देहिनं ग्रसति नहि केवलाऽविद्या मृत्युश्च जीवान् व्यामोहयितुं मारयितुं वा शक्तः इति। एतेन सर्वाण्येवान्तर्यामिवाक्यानि साद्यादिवाक्यानिच "सर्वे वेदा यत्पदमामनन्ति" "तं त्वौपनिषदपुरुषंपृच्छामि" इत्यादिसर्ववेदवेद्यत्वप्रतिपादकानि वाक्यानि विभिन्नोपनिषत्प्रतिपाद्यत्वे [illegible] सूचितम्।

"गोभूमिवेदविदितोविदिताचे" तिकर्म्मप्रत्ययान्तकर्तृप्रत्ययान्ताद्वर्थयनिर्द्देशेन गोविन्दपदे कर्मप्रत्ययान्तं कर्तृप्रत्ययान्तं च व्युत्पत्तिद्वयं सूचितम्। तत्रोभयत्र नुमागमश्छान्दसः। अथवा-"विदिर्लाभे"-इति धातुरेवात्र विद ज्ञाने-इतिधात्वर्थे प्रयुक्तः धातूनामनेकार्थत्वात् इति बोध्यम्। सर्ववेदवेद्यत्वं सर्ववेदवेतृत्वंचाभमपि भगवतः शास्त्रसिद्धम् "सर्वे वेदा यत्पदमामनन्ति"-"तंत्वौपनिषदं पुरुषं पृच्छामि"। वेदाँश्च प्रहिणोति, वेदैश्च सर्वैरहमेववेद्यो वेदान्तकृद्वेदविदेवचाहम्, इति शास्त्रवाक्येभ्यः।

निरुक्तमृत्युपर्य्यन्तसर्वान्तर्य्यामिलक्षणगोविन्दपदप्रवृत्तिनिमित्तनिरूपणेन, गोविन्दपदवाच्यःजेनैच-मृत्युनिष्ठभयहेतुत्वमिधानेबीजमप्युक्तं भवति। तथाहि सर्वेषां कार्य्याणां भगवदायत्तप्रवृत्तिस्थितिकत्वात् मृत्योरपिस्वतोनि ऽँ शक्तित्वमस्वतंत्रत्वंच। दर्शितं चैत्तकेनोपनिषदि देवयक्षप्रसंगे यद्भगवदिच्छामन्तरा तृणमपि दाहयितुँ चालयितुं वाऽग्निवाय्वपि न समर्थौ वभूवतुरिति। अतएव गीतायां—"यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्। गामाविश्य च भूतानि धारयाम्यहमोजसा पुष्णामि चौषधीःसर्वा सोमो भूत्वा रसात्मकः। अहं वैश्वानरो भूत्वा प्राणिनांदेहमास्थितः प्राणापानसमायुक्त्वा पचाम्यन्नं चतुर्विधम्। सर्वस्य चाहं हृदि सन्निविष्टो मत्तःस्मृतिर्ज्ञानमपोहनं च' इत्यादि भगवद्वाक्यानि॥ तथाच मोचयितापि स एव—"संसारमोक्षस्थितिवन्धहेतुः" "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, "यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वामित्यादिश्रुत्यन्तरेभ्यश्चेति। तथाच यदा सर्वविहाय तमेव सर्वभावेन शरणं गच्छंति तदा तेन प्रसन्नो भगवान् स्वात्मप्रकाशनेन सर्वदन्धात् प्रमोच्य स्वात्मभावं सम्पादयति तदैव मृत्युतो निर्भयो भवन्ति नान्यथेतिभावः। तथाचाग्रे वक्ष्यति "यो-ब्रह्माणं विदधाति पूर्वंयोवै विद्यास्तस्मैगोपायतिस्म कृष्णः। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणं व्रजेत्" इति। स्वप्रपत्त्यैव प्रसन्नो

भगवान् स्वरूपं दर्शयति इत्यभिप्रायेणाह–"ओङ्कारेणान्तरितं ये जपन्ति पंचपदं मनुम्। तेषामसौ दर्शयेदात्मरुपं तस्मान्मुमुक्षुरभ्यसेन्नित्यशान्त्यै" इति। "एष पंचपदमंत्रः प्रपत्तिगमक एवेत्यग्र एतन्मंत्रव्याख्यानावसरे दर्शयिष्यामि। भगवच्छरणमंतरा न निस्तारइत्याह"–एकोवशी सर्वगः कृष्ण ईडयः एकोऽपि सन् वहुधा यो विभाति तं पीठगंयेऽनुभजन्ति धीराः तेषां सिद्धिः शाश्वती नेतरेषाम्। नित्यो नित्यानाम० इति। ये तु सर्वभावेन प्रपन्नास्तेषामवश्यं भावीत्यभिप्रायेणाह–"एतद्विष्णोः" परमं पदं ये नित्योद्युक्तास्तं यजन्ते न कामान्। तेषामसौ गोपरुपः प्रयत्नात्प्रकाशयेदात्मपदं तदेव" इति। सर्वभावश्चात्र शरणेऽङ्गभूतं ध्यानरसनभजनयजनादिकमेव–"यो ध्यायति रसयति" इत्यादिसमानप्रकरणोक्तं वोध्यम्। तच्चाग्रे "शरणंव्रजेत्" इति मंत्रव्याख्यानावसरे विशेषतो निरूपयिष्यामि॥ भवन्तिचात्रान्यान्यपि श्रुतिस्मृतिवाक्यानि॥ "यो ब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मवुद्धिप्रकाशं मुमुक्षुर्वैशरणं प्रपद्ये। श्वे.उ.॥ "अणारणोयान्महतो महीयानात्मास्यजन्तोर्निहितं गुहायां तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमात्मनः। नायमात्मा प्रवचनेन लभ्यो न मेधया न वहुधा श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्माविवृणुते तनुं स्वाम्। क. मु उ.॥ यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं। तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति। मु उ.। "दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते। ईश्वरः सर्वभूतानां हृद्देशेर्जुऽन तिष्ठति। भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया। तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात्परांशान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥ मन्मनाभव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजानेप्रियोऽसिमे। सर्वधर्म्मान्परित्यज्य मामेकं शरणं व्रज। अहंत्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः। नाहं वेदैर्न तपसा न दानेनचेज्यया शक्यएवंविधोनद्रष्टुं दृष्टवानसि मां यथा। भक्तयात्व-

नन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ "वन्धनको भवपासेन भवपाशाच्च मोचकः । कैवल्यदः परंब्रह्म-विष्णुरेव न संशयः । भागवतेऽपि एकादशेभगवदुक्तिः" । "तस्मात्त्व-मुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ॥ प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ मा हि सर्वात्मभावेन यास्यसे ह्यकुतोभयम् ॥ हरिवंशे—"घण्टाकर्णम्प्रतिशिवोक्तिः" मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः इत्यादि । तस्माद्भगवतःशरणगमने तत् प्रसादेन तद्दर्शनात्तत एव मुक्तिरिति-भावः । विशेषस्तु मुमुक्षुर्वैशरणंव्रजेत्—इत्यत्र दर्शयिष्यामि ॥ एवंच भगवतोमृत्युनिवारकत्वलक्षणामृतत्वप्रापकत्वस्य सोपपत्तिकत्वसूचना-यैव सूत्रभूतेन गोविन्दपदेनात्र भगवतो मृत्युभयहेतुत्वाभिधानमितिध्ये-यम्—गोविन्दपदव्याख्यानमिषेणैव सर्वाण्येव पूर्वोक्तानि मुक्तिवाक्यानि परमदेवे कृष्णे समन्वितानि इत्यपिबोध्यम्

एवमेव गोविन्दपदार्थः श्रीसुन्दरभट्टपादैरपि रहस्यषोडशीव्या-ख्यायां गोविन्दाय इतिमन्त्रावयवव्याख्यानावसरे व्याख्यातः । "गोवि-न्दायेति गां वेदलक्षणां भारतीं स्वस्मिन्प्रमाणतयासमन्वितां विन्दते-इतिगोविन्दः ॥ वेदएवात्र प्रमाणमितियावत् सर्वे वेदा यत्पदमामनन्ति । "नामानिसर्वाणियमाविशन्ति ।" "तंत्वौपनिषदं पुरुषं पृच्छामि ।" "नमो येदान्तवेद्याय ।" "वेदे रामायणे चैव पुराणे भारते तथा । आदौ मध्ये तथाचान्ते हरिः सर्वत्र गीयते ।" वेदैश्च सर्वैरहमेववेद्यः ॥ "शास्त्र-योनित्वात्" इत्यादिश्रुतिस्मृतिसूत्रेभ्यः । "यद्वा गोभूमिवेदविदितः" इत्यादिश्रुत्या गवि सूर्ये तत्प्रकाशकत्वेन तदन्तरात्मत्वेन वा विदित इति गोविन्दः । "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद" इति श्रुतेः । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ इति श्रीमुखोक्तेश्च । गवि भूमौ तदाधार-शक्त्यात्मना विदित इति गोविन्दः "यः पृथिव्यांतिष्ठन्-इतिश्रुतेः । "गामाविश्यच भूतानि धारयाम्यहमोजसा" इतिगानाच्च ॥ 'गोषु

वेदेषु तत्प्रतिपाद्यतया विदित" इति गोविन्दः "वेदैश्च सर्वैरहमेव वेद्यः" इतिगानात् ॥ इत्याद्यन्या अपि श्रौतव्युत्पत्तयोऽत्रानुसंधेयाः । "योऽसौ सूर्य्येतिष्ठति योऽसौ गोषु तिष्ठति योऽसौ गाः पालयति योऽसौ गोपेषु तिष्ठति योऽसौसर्वेषु वेदेषु तिष्ठति योऽसौ सर्वैवदैर्गीयते" इत्यादिश्रुतेः । ताः श्रुत्यादय एवात्र मानमित्यर्थः । इतिगोविन्दपदार्थः" इत्यन्तसन्दर्भेण ॥ इतिवृत्ता गोविन्दपदव्याख्या ॥

अथ गोपीजनवल्लभपदव्याख्यानम् । "गोपीजनाऽविद्याकलाप्रेरकः" इति । गोपी त्रिगुणात्मिका सकार्य्या प्रकृतिः "काश्च विष्णुपत्न्यो गोप्यो नाम ॥ या आत्मना ब्रह्मानन्दैकरूपं कृष्णंधामाऽजयंस्ता जगत्सृष्टिस्थित्यन्तकारिण्यः प्रकृतिमहदाद्या महामायाः" इति गोपीचन्दनोपनिषच्छ्रुतेः । "गोपीं तु प्रकृतिंविद्यात्" इतिगोतमीयतंत्रोक्तेश्च । जनस्तया सम्पादितदेहादिसंघातो जीवसमूहः । गोप्या प्रकृत्या जन्यन्ते देहादिसंघातैरुत्पद्यन्ते इति व्युत्पत्तेः ॥ तेषामविद्याकलाऽविद्यांशभूतं ज्ञानाऽवरणं ययाऽवृतस्वाभाविकनिजचैतन्यो जीवः सर्वज्ञस्वभावोऽपि मौढ्यमापन्नो देहदैहिकातिरिक्तं किमपि न जानाति ॥ सेयमविद्याकला व्याख्येयगोपीजनवल्लभपदे वल्लशब्देनोच्यते वल्ल संवरणे, इति धातुपाठात्–संवरणं संवृत्तिकरणं चैन्यावरणमिति यावत् ॥ वल्लभः, तादृशाविद्याकलानां प्रेरकः । निरतिशयप्रकाशानन्दस्वरूपनिजसाक्षात्कारेण सर्वाविद्यापनोदक इत्यर्थः । एवमेव व्याख्यातं श्रीसुन्दरभट्टपादाचार्य्यैरपि–"गाः इन्द्रियाणि स्वस्वविषयेषु पातीतिगोपो प्रकृतिः तया जन्यन्ते देहादिभिः संयुज्यन्ते इति गोपीजना जीवात्मानः तेषु मुमुक्षूणां स्वप्रपन्नानां वल्लं-अज्ञानावरणं तस्माद्भातीति तथा ल्यब्लोपे पंचमी तेषां वल्लमज्ञानंब्रह्मविद्ययापराकृत्य स्वपरत्वविषयकं ज्ञानं प्रकाशयतीति स गोपीजनवल्लभः इत्यन्तग्रन्थेनेति । "भादीप्तौ" इतिधातुपाठात्–वल्लभ इति व्याख्येयवाक्यघटकभशब्देनाज्ञानविरोधिस्वरूपसाक्षात्काररलक्षणज्ञानलाभ–इत्यपि बोध्यम् । गोपीजनवल्लभपदव्याख्यानमुखेनैव

कथं गोपीजनवल्लभविज्ञानेनाखिलं विज्ञातं भवति-इत्यपि जिज्ञासा समाहितेति।

तेन एतदुक्तं भवति भगवान् हि निजाज्ञापालनमिषेण तोषितो यदा निजस्वरूपं परिपूर्णतमं सर्वताभावेनानुभावयति तदा "जुष्टं यदा पश्यत्यन्यमीशमस्यमहिमानमिति वीतशोकः ॥ इत्यादिश्रुत्यनुसारेण भगवत्साक्षात्कारेण सहैवानाद्यविद्यातिरोहितं निजस्वरूपमाहात्म्यं सर्वज्ञत्वसत्यसंकल्पत्वसत्यकामत्वापहतपाप्मत्वादिकं भगवत्स्वरूपसाक्षात्कारमहिम्नाऽविद्याऽवरणनाशे विस्मृतकण्ठमणिन्यायेन भगवदनुग्रहादाविर्भवति। सहैव च निखिलवस्तुतत्त्वं युगपदेवानुभवति। यथा-श्रीभागवते प्रथमस्कन्धे-"भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले। अपश्यत्पुरुषंपूर्णं मायां च तदपाश्रयाम्। यया सम्मोहितो जीव आत्मात्मानं त्रिगुणात्मकं परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते॥ इति-श्रीव्यासेनानुभूतं। एवंच न किंचिदपिज्ञातव्यमवशिष्यते-इति ॥ ० ॥

यद्वा गोपीपदेन अन्तरंगा वहिरंगा तटस्थाच-"पराऽस्य शक्तिर्विविधव श्रूयते स्वाभाविकी ज्ञानवलक्रिया च" श्वेता उ अ. ६॥ शक्तयः सर्वभावनामचिन्त्यज्ञानगोचराः। यतोऽतोब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः। भवंति तपताश्रेष्ठ पावकस्य यथोष्णता। वि. पु। इत्यादि श्रुतिस्मृत्युक्ताः सर्वाः शक्तयो विवक्षिताः। जनपदेन तेषां समूहः अविद्याकलापदेन आवरणशक्तिः, भगवत इच्छाशक्तयन्तर्भूताःप्रापंचिकलोलानिर्वाहिका। तासां सर्वासां शक्तीनामनन्याश्रयोऽनन्याधिपतिश्च श्रीभगवानेव। तेनैव स गोपीजनवल्लभशब्देनोच्यतेइति। एवंच तादृशसर्वशक्तिविशिष्टस्यैव भगवतस्तत्त्वतोऽनुभवे न किञ्चिदपि ज्ञातव्यमवशिष्यते। यथा "अपश्यत्पुरुषं पूर्णं मायां च तदपाश्रयाम्" इत्यत्रव्यासेनानुभूतम्। सर्वेषामेव प्रापंचिकाप्रापंचिकवस्तुतत्त्वानां भगवतस्तत्तच्छक्तिविक्षेपरूपत्वेन तादृशभगवत्स्वरूपकुक्षिनिविष्टत्वात् ॥

एतदुक्तंभवति ॥ "पराऽस्य शक्तिर्विविधैव श्रुयते स्वाभाविकी ज्ञा-

नवलक्रिया च" इत्यादिश्रुतिसिद्धाभगवच्छक्तय:सामान्यतस्त्रिधा। अन्तरंग-वहिरंगतटस्थभेदात्। "विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा। अविद्याकर्म्मसंज्ञाऽन्या तृतीयाशक्तिरिष्यते॥ इतिविष्णुपुराणोक्तेः॥ तत्र या सच्चिदानन्दरूपस्य श्रीभगवतः स्वरुपाशक्तिः सा-अन्तरंगा इत्युच्यते" स्वरुपानुवन्धित्वात्। साऽह्लादिनी सन्धिनी संविद्भेदात्-त्रिविधा, "एवंहिशक्तयस्त्वनेकधा ह्लादिनीसन्धिनीज्ञानेच्छाक्रियाद्या वहुविधाःशक्तयः; इतिराधोपनिषच्छ्रुतेः॥ "ह्लादिनी सन्धिनी संवित् त्वय्येका सर्वसंश्रये ह्लादतापकरो मिश्रा त्वयिनो गुणवर्जिते" इतिविष्णुपुराणोक्तेश्च। तदेतत्सोपपन्नमुपपादितंमया युग्मतत्वसमीक्षायामिति तत एवालोचनीयम्। वहिरंगा जगत्कारणभूता त्रिगुणमयी मायाशक्तिः॥ सा-इच्छाशक्त्यन्तर्भूता। तस्याएवांशभूताऽविद्याजीववन्धनहेतुभूता।" इच्छाशक्त्यन्तर्भूतामायासत्वरजस्तमोमयीजगत्कारणभूता सैवाऽविद्यारूपेण जीववन्धनहेतुभूता—"इतिराधोपनिषच्छ्रुतेः॥ अजामेका लोहितशुक्लकृष्णां वह्वीः प्रजाः सृजमानासंरुपाइतिश्रुतेश्च। "सैषा वटवीजसामान्यवदनेकवटवीजशक्तिः" इत्यादि नृसिंहतापिनीश्रुतेश्च। "एकदेशस्थितस्येन्दोर्ज्योत्स्नाविस्तारिणीयथा परस्यब्रह्मणःशक्तिस्तथेदमखिलं जगत्"—इतिविष्णुपुराणोक्तेः—"प्रकृतिपुरुषं चैवांविद्ध्यनादी उभावपि" इतिगीतोक्तेश्च। तटस्था शक्तिर्जीवनिकायः। तस्यापि 'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतांमहावाहो ययेदं धार्य्यते जगत्—। इतिगीतादौ प्रकृतित्वकथनेन भगवच्छक्तित्वोपगमात्। तस्य संसारदशायांवहिर्मुखत्वेन तद्दृष्ट्यातटस्थत्वात्स्वरूपशक्त्यपेक्षयाऽनन्तरंगत्वाच्च तटस्थत्वोक्तिः। एवं कालोऽपि शक्तिरेव भगवतोवहिरंगभूता—"कालसंज्ञांतदादेवींविभ्रच्छक्तिमुरुक्रमःइतितृतीयस्कन्धेभागवतोक्तेः॥ एवमन्याअपिऽअनन्ताःशक्तयः। "सत्यंज्ञानमनन्तंब्रह्म" इतिश्रुतेः—भगवतःस्वरूपतो गुणतःशक्तितश्चानन्तत्वात्—। ताश्च सर्वाःशक्तियोभगवतोभिन्नाभिन्नस्वभावाभगवदात्मिकाः प्रकाशाश्रयवत् "एतदात्म्यमिदं ँ सर्वं-

तत्सत्यम्" छा. ६-॥ पुरुष एवेदं विश्वम् ॥ मु. ॥ इत्यादिश्रुतेः । "प्रकाशाश्रयवद्वा तेजस्त्वात्" इत्यादिवेदान्तसूत्राच्च । भेदाभेदस्तादात्म्यमित्यनर्थान्तरम् ॥ तच्चाभेदप्रधानगुणीभूतभेदं क्वचित् क्वचिद्भेदप्रधानगुणीभूताभेदमितिस्वरूपादिशक्तिषूह्यम् । यथा साधर्म्याधिक्यात्स्वरूपशक्तिषु-अभेदाधिक्यं—बहिरंगशक्तिषु वैधर्म्याधिक्याद्भेदाधिक्यं जीवशक्तिषु बहिरंगशक्त्यपेक्षया-ज्ञत्वादिसाधर्म्याधिक्यात् तदपेक्षयाऽभेदाऽधिक्यमित्याद्यूह्यम् ॥ ताश्च सर्वाःशक्तयः प्रकृते गोपीजनपदेन संगृह्यन्ते । गोपीपदस्य प्रकृते शक्तिवाचकत्वाज्जनपदस्य तत्समूहवाचकत्वाच्च । अविद्यायाः पृथगुक्तिस्तु जीवनिष्ठस्वाभाविकापहतपाप्मत्वसर्वज्ञत्वादिधर्माणामावरकत्वेन विशेषतः सर्वविज्ञानपरिपंथित्वबोधनाय । यथा "अपश्यत्पुरुषं-पूर्णंमायांच तदपाश्रयाम् । यया सम्मोहितो जीवआत्मानं त्रिगुणात्मकं परोऽपि मनुते ऽनर्थंतत्कृतचाभिपद्यते ॥ इति भागवतपद्ये पूर्णपुरुषपदेन पूर्णपुरुषशक्त्यन्तर्गतया मायायाःसंग्रहेऽपि तस्याः पृथगुक्तिः तथाऽत्रापि बोध्यम् । एवंच तादृशीभिः सर्वाभिः शक्तिभिः स्वाभाविकगुणधर्म्मैश्च यथायथमुपेतमेव ब्रह्म पूर्णब्रह्म समग्रंब्रह्म पूर्णपुरुषः साक्षाद्भगवान् स्वयंभगवान् इत्यादिशब्दैरुच्यते । एवं च प्रकृते तादृशं समग्रमेव ब्रह्म भगवत्स्वरूपं गोपीजनवल्लभपदेन विवक्षितम् । यथा गीतायां 'मय्यासक्तमनाःपार्थ योगं युजन्मदाश्रयः । असंशयं समग्रं मां । यथा ज्ञास्यसि तच्छृणु, इत्यनेन समग्रनिजस्वरूपज्ञानं प्रतिज्ञाय 'भूमिरापोऽनलोवायुः खं मनो बुद्धिरेवच, इत्यादिना सर्वशक्त्युपेतमेव निजस्वरूपं ज्ञेयत्वेनोपदिष्टम् । तादृशनिजस्वरूपज्ञानेनैवच सर्वज्ञानस्य परिसमाप्तिः "यज्ज्ञात्वानेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते" इत्यनेनोपदिश्यते । इति तेन सर्वशक्त्युपेतस्यैव भगवतः समग्ररूपत्वं तादृशसमग्रस्वरूपविज्ञानस्यैव च सर्वविज्ञानत्वंमित्युक्तं भवति तथा । एवं च यदा भगवान् निजासाधारणभक्त्या तुष्टो व्यासस्येव 'भक्तियोगेन मनसि' इत्याद्युक्तदिशा सर्वतः परिपूर्णं निजस्वरूपं प्रकटयति तदा न किंचिदपि ज्ञातव्यमवशिष्यते

सर्वस्यैव विश्वस्य शक्तिरूपेण तत्रैव तादात्म्येन स्थितेः। तदुक्तं 'यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते' इति। इत्येकस्यैव गोपीजनवल्लभपदार्थस्य तत्त्वतो ज्ञानेऽखिलं विज्ञातं भवतीति न किंचिदप्यनुपपन्नमिति॥

अथैवमपि–"उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति" इत्यादि श्रुतीनामत्र समन्वयो न यथावन्निरूपितो भवति–तत्र "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारंभणं विकारो नामधेयम् मृत्तिकेत्येव सत्यम्।" इत्यादि दृष्टान्तेनोपादानोपादेयभावमूलक एवैकविज्ञानेनाखिलविज्ञानप्रतिज्ञानिर्वाहस्योपपादितत्वात्। अत्रतु न तथेतिचेन्न॥ उपादानोपादेयभावमूलकैकविज्ञानेनाखिलविज्ञानस्याप्येतद्विज्ञानएवान्तर्भूतत्वात्। तथाहि। ब्रह्मैव स्वात्मकनिजशक्तिविक्षेपेणैव निखिलजगदुपादानं जगच्च तथैव ब्रह्मण उपादेयम्। यथा आकाश स्वात्मकसूक्ष्मतमशब्दरूपनिजशक्तिविक्षेपेणैव–स्थूलशब्दनिकायस्य। एवंच यथा योगादिमहिम्ना भगवत्प्रसादविशेषेण वा पूर्णाऽकाशसाक्षात्कारे जाते भूतवर्तमानभविष्यसन्निकृष्टविप्रकृष्टस्थूलसूक्ष्मनिखिलशब्दराशिः तदानीमेव साक्षात्कृतो भवति, निखिलस्थूलशब्दानां तत्त्वतो निजोपादानसूक्ष्मतमशब्दानतिरिक्तत्वात् सूक्ष्मतमशब्दशक्तेश्च निजधर्म्याकाशानतिरिक्तत्वात्। सत्कार्यवादे कार्य्यमात्राणां सूक्ष्मतमशक्त्यात्मना निजकारणे सर्वदैव विद्यमानत्वात्। तथा भगवत्प्रसादविशेषेण समग्रभगवत्स्वरूपसाक्षात्कारे जाते सर्वस्यैव साक्षात्कारः। समग्रस्यैव विश्वस्य तत्रैव तादात्म्येनैव सर्वदैव विद्यमानत्वात्। तस्यैवोपादेयत्वाच्च।

अयंभावः। यदि कार्य्यं सूक्ष्मतमशक्त्यात्मना कारणे निजोत्पत्तेः प्राक् पश्चाच्च प्रलयात् विद्यमानं न स्यात्–तर्हि निश्शक्तिकोपादानमात्रसाक्षात्कारे भूतं भविष्यं च कार्य्यजातं तत्तद्विशेषात्मना योगिभिः कथं साक्षात्कृतं स्यात्। स्मर्य्यते किल योगिनां सनकादीनां भूतभविष्याणामपि कार्य्याणां तत्तद्विशेषात्मना साक्षात्कारः। स चोपादाने किंचिदपि विशेषमनन्तर्भाव्य सोपपादयितुं शक्यते। यथा मृन्मयानां मृत्तिकासाक्षा-

त्कारेहि मृन्मात्रत्वेनैव निखिलमृत्कार्य्यजातं विज्ञातं भवति नतु द्राक्षादाड़िमसीतोपलाद्यात्मनाऽपि । इतितावदंशसाक्षात्कारेऽपि विशेषजिज्ञासा वर्तत एव । अतएवाहर्निशंमृत्तिकां साक्षात्कुर्वन्तोऽपिलौकिकसमीक्षकाः तत्तद्वस्तूनांविशेषतोजिज्ञासायां प्रवर्तमाना दृश्यन्ते ॥ तथापि न मृत्तिकाकार्य्याणतत्तद्वस्तुतत्त्वानि साक्षात्कुर्व्वन्ति । इति न केवलोपादानसाक्षात्कारो निखिलसाक्षात्कारजनक इति निश्चीयते । योगिनस्तु उपादानसाक्षात्कारेण भूतं भविष्यं च सर्वं कार्य्यं साक्षात्कुर्व्वन्ति । तस्माल्लौकिकोपादानसाक्षात्कारात् योगजोपादानसाक्षात्कारे वैलक्षण्यंवक्तव्यं तच्च वैलक्षण्यमन्यथानुपपत्त्यातत्तत्कार्यसूक्ष्मरूपात्मकशक्तिमत्त्वेनोपादानसाक्षात्कारएवपर्य्यवस्यति । इतिकार्य्योत्पत्तेः प्राक्पश्चाच्च प्रलयात् तत्तत्कार्य्यसूक्ष्मशक्तीनामुपादाने तादात्म्येनावस्थनं सिद्ध्यति ॥ तथाच तत्तत्कार्य्योपादानत्वमपि तत्तत्कार्य्यसूक्ष्मशक्तिमत्त्वमेव । अतएव न दाडिमादिबीजानांजंबीराद्युपादानत्वम् । तत्र जंबीरादिकार्य्यशक्त्यभावात् ॥ एवंच तत्तत्कार्य्यशक्तिमत्वेन मृत्तिकादिसाक्षात्कार एव तत्त्वत उपादानसाक्षात्कारः, नतु स्वरूपमात्रतो मृत्तिकादिसाक्षात्कारोपि तत्त्वतःसाक्षात्कारः । तथाचप्राकृतानांस्वरूपतोमृत्तिकादिसाक्षात्कारेऽपि तत्तत्कार्य्यशक्तिमत्वेन साक्षात्काराभावात् तत्त्वत उपादानसाक्षात्काराभावेन न निखिलमृत्कार्य्यसाक्षात्कारः । योगिनस्तु तत्तत्कार्य्यसूक्ष्मशक्तिमत्त्वेन मृत्तिकादिसाक्षात्कारात् तत्त्वत उपादानसाक्षात्कारसत्त्वेन भूतभविष्याणां मृत्कार्य्याणांद्राक्षादाडिमादीनामपि साक्षात्कारोभवति भूतभविष्याणामपि कार्य्याणांनिजसूक्ष्मशक्त्यात्मना तादात्म्येन उपादाने सर्वदा विद्यमानत्वात् ।

एवंचोपनिषत्सु यत्रोपादानसाक्षात्कारेण सर्वसाक्षात्कारो निरूप्यते तत्र सर्वत्र निखिलकार्य्यजातस्यसूक्ष्मशक्तिमत्त्वेनोपादानसाक्षात्कारादेव सर्वसाक्षात्कारेतात्पर्य्यम् । अतएवताद्दशप्रकरणे "सदेव सोम्येदमग्र आसीत्" इत्यादौ इदंपदेन निखिलस्यनामरूपात्मकप्रपंचस्यसृष्टिप्राक्का-

लेऽपितादात्म्येनसत्त्वंततएवच उद्भवः, उद्भवावस्थायामपि "ऐतदात्म्यमिदं सर्वम्" इत्यादिना कारणतादात्म्यंप्रतिपाद्यते। एवंच स्वशक्तिविशेषविक्षेपेणैव ब्रह्म निखिलजगदुपादानम्। साच निखिलजगद्बीजरूपाशक्तिः सर्वादिसृष्टेः प्राक् पश्चादपिच सर्वप्रलयात् आकाशेऽनभिव्यक्तशब्दराशिरिव नामरूपविभागानर्हतया तादात्म्येन परेदेवे तिष्ठति। सृष्टिदशायां क्रमेण प्रस्फुटितसर्वांगतया तदुपयुक्तधर्माऽत एव स्थूलजगद्भावमापन्नाऽपि ब्रह्मात्मकतया तिष्ठति, उभयावस्थायामपि ब्रह्मात्मकत्वं न विजहाति ॥ एतच्च स्फुटमुपपादितं सुबालोपनिषदि, तत्र प्रथमखण्डे "किंतदासीत्तस्मै सहोवाच न सन्नासन्नसदसत्। इतितस्मात्तमः संजायतेतमसोभूतादिर्भूतादेराकाशमाकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यःपृथिवी" इत्यादिना जडजीवात्मकनिखिलप्रपंचसृष्टिं निरूप्य द्वितीयेन प्रलयक्रम उच्यते-"पृथिव्यप्सु प्रलीयते आपस्तेजसि प्रलीयन्ते तेजो वायौविलीयते-वायुराकाशेविलीयत आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ भूतादिर्महतिविलीयते महानव्यक्ते विलीयतेऽव्यक्तमक्षरे विलीयते अक्षरं तमसिविलीयते तमः परेदेवेएकीभवति परस्तान्नसन्नासन्नसदसदित्येतन्निर्वाणानुशासनमितिवेदानुशासनमिति वेदानुशासनमिति" इतिसृष्टितः प्राक्पश्चाच्च सर्वप्रलयात् नामरूपविभागानर्हतया तादात्म्येनैव सर्वकार्य्यबीजरूपायाः तमःपदवाच्यायाः नितान्तत्रिगुणसाम्यावस्थापन्नया प्रकृतेः परेदेवे स्थितिमाह श्रुतिः। एकीभावस्तादात्म्य मेवनतुसर्वथाभेदाभावःभेदाभेदएवःच्युप्रत्ययविधानात्-अतएव-दिवाभूतारात्रिःइत्यादितदुदाहरणम्-इति॥ सृष्ट्यवस्थायामपि सर्वजडजीवात्मकप्रपंचस्यब्रह्मतादात्म्यमाह-"दिव्यो देव एको नारायणः चक्षुश्च द्रष्टव्यंच नारायणःश्रोत्रं चश्रोतव्यं चनारायणः" इत्यादिना "वरुणोऽर्यमा चन्द्रमा कला कलिर्धाता ब्रह्मा प्रजापतिर्मघवा दिवसाश्चार्धदिवसाश्च कलाकल्याश्चोर्ध्वं चदिशश्चसर्वं नारायणः। पुरुषएवेदं सर्वं यद्भूतंयच्चभाव्यम्"-इतिषष्ठखण्डेनेति ॥

व्याख्याता चैषा श्रुतिः काश्मीरिकेशवभट्टाचार्य्यपादैः वेदान्तकौस्तुभप्रभायां "विपर्य्ययेण क्रमोऽत उपपद्यते" इतिब्रह्मसूत्रवृत्तौ समुद्धृतं चात्रोत्तरतापिन्यां मया 'एकमक्षरंयद्विश्रुतमनेकाक्षरं कथमभूत् ॥" इत्यत्रेति तत्रैव द्रष्टव्यम् ॥ दर्शितश्चायं सिद्धान्तो वेदान्तकौस्तुभप्रभायां "आत्मकृतेः परिणामादि" तिब्रह्मसूत्रवृत्तौ केशवकाश्मीरिपादैरेव—"सर्वज्ञत्वसर्वाचिन्त्यानन्तशक्त्यादिनिलयः परब्रह्मभूतः श्रीपुरुषोत्तमः स्वात्मकस्वाधिष्ठितनिजशक्तिविक्षेपेण जगदाकारं स्वात्मानं परिणामयति। यथाऽप्रच्युतस्वरूपादिभ्य एवाकाशोर्णनाभ्यादिभ्यः शब्दवाय्वोस्तन्त्वादेश्च जन्मादिकमि" त्यादिनेति। विस्तरस्तु तत्रैवानुसंधेयः। येषां स्वरूपपरिणाम एवाभिमतः तैरप्यंशत एव स वाच्यः। अन्यथाऽपरिणतब्रह्मविलोपापत्तेः। एवंच फलतः शक्तिविक्षेपपरिणामवाद एवायाति शब्दमात्रंभिद्यते। एवं चिदचिच्छरीरब्रह्मवादेऽपि बोध्यम्। सूक्ष्मसमीक्षायां तेषां मतानामैकत्वावगमात् सम्प्रदायभेदमात्रस्यैव मतभेदापादकत्वात्। अतएवाणुभाष्यप्रकाशे "अहिकुण्डलाधिकरणे प्रकाशाश्रयवद्वा तेजस्त्वा" दित्यत्र गोस्वामिश्रीपुरुषोत्तममहानुभावचरणैः। "तथाचोक्तं विष्णुपुराणे प्रथमांशसमाप्तौ "एकदेशस्थितस्येन्दोर्ज्योत्स्नाविस्तारिणी यथा परस्य ब्रह्मणःशक्तिस्तथेदमखिलंजगत्। तत्राप्यासन्नंदूरत्वबहुत्वस्वल्पतामयः ज्योत्स्नाभेदोऽस्ति तच्छक्तिस्तद्वन्मैत्रेय वर्तते" इति विष्णुपुराणसिद्धान्तः शक्तिविक्षेपपरिणामवादपरः स्वीकृतः। भेदाभेदाख्यंतादात्म्यमपि किंचित्प्रकारभेदेन तैः -स्वीकृतमेव तत्र-इति। अतएव च चिदचिच्छरीरवादिभिःश्रीरामानुजाचार्य्यचरणैः "स्मरन्तिच" इति सूत्रभाष्ये "एवं प्रभाप्रभावद्रूपेण शक्तिशक्तिमद्रूपेण शरीरात्मभावेन चाशांशिभावं जगद्ब्रह्मणोः पराशरादयः स्मरन्ति "एकदेशस्थितस्याग्नेर्ज्योत्स्नाविस्तारिणी यथा। परस्य ब्रह्मणः शक्तिः तथेदमखिलंजगत् (विष्णुपु.) १-२२-५६—यत्किंचित् सृज्यते येन सत्त्वजातेन वै द्विज। तस्य सृज्यस्य संभूतौ तत्सर्वं वै हरेस्तनु। वि. पु. १-२२-३८। इति

विष्णुपुराणवाक्योदाहरणेन जगद्ब्रह्मणोः शक्तिशक्तिमद्भावेनांशांशिभावः। "प्रकाशाश्रयवद्वातेजस्त्वात्" ब्र. सू. इत्यत्र। यथा प्रभातदाश्रययोरपि तादात्म्यम्–एवमचित्प्रपंचस्य ब्रह्मणोरूपत्वमिति तादात्म्यं च समर्थिते। एवं सूत्रान्तरभाष्येष्वपि तत्रतत्र तथा तेषांप्रतिपत्तिर्दृश्यते इति। तथाच निखिलस्य प्राकृताप्राकृतस्य जीवकालादिसहितस्य प्रपंचस्य, चिदचिच्छक्तिकस्य पुरुषोत्तमस्यैव शक्तिविशेषविलासरूपत्वेनोपादेयत्वात् तादृशपुरुषोत्तमस्यैवोपादानत्वात्–तादृशपुरुषोत्तमस्वरूपस्यैव तत्त्वतो ज्ञाने समस्तविश्वस्य विज्ञानम्-उपादानोपादेयभावमूलकत्वमपि निजकुक्षीकरोत्येवेति न किंचिदनुपपन्नम्। एवंच एकविज्ञानेन सर्वविज्ञानस्य सोपपत्तिकत्वायैव सर्वविज्ञानजनकभगवज्ज्ञाने-तादृशनिरुक्तार्थकगोपीजनवल्लभत्वं विशेषितं न कृष्णत्वं गोविन्दत्वंवा तयोःस्फुटतः तादृशोपपत्त्यसमर्पकत्वात् इति।

नन्वेतावताऽपि न छान्दोग्यसमन्वयः? निरुक्तप्रक्रिययोपादानोपादायविषयाप्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञायानिर्वाहेऽपि दृष्टान्तासमन्वयात्। तत्रहि "वाचारंभणं विकारोनामधेयंमृत्तिकेत्येव सत्यम्" इत्यनेनविकारपदवाच्यस्योपादेयस्य वाचारंभणत्वकथनेनमृत्तिकापदोपात्तस्योपादानमात्रस्य सत्यत्वकथनेनचोपादेयांशस्य मिथ्यात्वसूचनमुद्रयाऽखिलस्यैव कार्य्यप्रपंचस्य मिथ्यात्वसूचनादितिचेन्न। तत्रोपादेयस्य सर्वथा मिथ्यात्वे तात्पर्य्याभावात्। अपितु सर्वथा विशेषभेदानांस्वतन्त्रसत्त्वप्रतिषेधेन ब्रह्मात्मकत्वप्रतिपादनेतात्पर्य्यात्, अन्यथा मृदादिकंदृष्टान्ततया नोच्येत उच्येत च शुक्तिमरुमरीच्यादि॥ ब्रह्मात्मकत्वमेवोपपादितं तदुपपादकग्रन्थेनापि। यदि विशेषाणांमिथ्यात्वे तात्पर्य्यंभवेत्तर्हिप्रतिज्ञावाक्ये "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतंभवत्यमतं मतं भवति" इत्यादिना एकविज्ञानेन सर्वविज्ञानं नोच्येत विशेषाणां कारणविज्ञानानन्तरं मिथ्यात्वस्यैव निश्चयेन सर्वपदार्थाभावेन सर्वविज्ञानासंभवात् प्रतारकत्वापत्तेः। "उत तमादेशमप्राक्ष्योयेनविज्ञातेनतदन्यत सर्वं मिथ्या-

त्वेनज्ञातंभवति" इत्येवंप्रतिज्ञाया उचितत्वापत्तेः सुलभत्वापत्तेश्चेति ।

नन्वेवमपि, "वाचारंभणम्, "मृत्तिकेत्येवसत्यम्"–इत्यादेःकोऽर्थः, अत्रेदमवधेयम् । द्विविधानि किल वाक्यानि जगद्विषये शास्त्रे पठ्यन्ते कानिचित्सत्यत्वप्रतिपादनानुगुणानि कानिचित्मिथ्यात्वानुगुणानि तत्र-कारणवाक्यानि प्रायः जगत्सत्यत्वानुगुणान्येव पठ्यन्ते यथाऽत्रैव "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" । अत्र हि इदंपदगोचरस्य नामरूपात्मकदृष्टश्रुतप्रपंचस्य सृष्टिप्राक्कालेऽपि सदात्मकत्वप्रतिपादनेन तस्य सत्यमेव निश्चितं भवति नत्वनिर्वचनीयत्वलक्षणंमिथ्यात्वम्—। अतएव "तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम् । तस्मादसतः सज्जायते"—इत्यनेनासत्कार्य्यकारणवादिमतमनूद्य "कुतः खलु सोम्येवं स्यात् ॥ इति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीत्" इति तन्मतं प्रतिक्षिप्य सत्कार्य्यवादं सिद्धान्तयति । यदि जायमानस्य-प्रपंचस्यमिथ्यात्वमभिप्रेतं स्यात् तर्हि कथं सतः, पूर्वं सद्भावसाधनाय "कथमसतःसज्जायेत" इतिकार्य्यप्रपंचं सत्त्वेन हेतुं कुर्य्यात्, स्वयमसतः कार्य्यप्रपंचस्य सत्त्वसाधकत्वासंभवात् । असतः कार्य्यप्रपंचस्य सत्त्वेन हेतूकरणे स्वरूपासिद्धेर्वंचकत्वापत्तेश्च । नच 'सज्जायेत' इति कार्य्यस्य सत्त्वकथनं न परमार्थसत्त्वाभिप्रायेणापि तु, अनिर्वचनीयत्वापरपर्य्याय-व्यावहारिकसत्त्वाभिप्रायेणेतिवाच्यं, तर्हिकारणेऽनुमेयस्यापिसत्त्वस्यानि-र्वचनीयत्वमेव सिद्ध्येत, नतुपरमार्थिकत्वं तथैवहेतुत्वानुपपत्तेः—। नचा-निर्वचनीयतत्त्वस्याध्यस्तत्वादध्यासस्याधिष्ठानमन्तराऽसिद्धेः,-अधिष्ठानस्य लोके सत्यत्वेनैवोपलब्धे ब्रह्मणि परमार्थसत्त्वसिद्धिरिति वाच्यम्–भव-न्मतेपरमार्थसद्भिन्नमपि शुक्तिकादिकमवलंब्याध्यासस्वीकारात् 'सर्वमते-ऽपि स्वप्नाद्यवस्थायामध्यस्तेऽपि नगरादौ हस्तितुरगाद्यापणाद्यध्यासबा-हुल्यदर्शनात्,–अध्यासाधिष्ठानस्य परमार्थसत्यत्वानियमेनाध्यासमुद्रया ब्रह्मणि परमार्थ-सत्त्वासिद्धेः । नचैवमपि-अध्यासपरम्परायाः क्वचिद्विश्रामो-वाच्यः, तथाच यत्र विश्रामः तदेव परमार्थसद्वस्तु तदेव परमकारणम-

द्वितीयं ब्रह्म इति व्यावहारिकसद्वस्तुजगतो हेतूकरणेऽपि परमार्थसद्वस्तुसिद्धिरिति वाच्यम्। तर्कस्यानवस्थितत्वान्माध्यमिकानां नये शून्य-एवाध्यासपरंपराविश्रामांगीकारात्, नैकाततःसद्वस्तुसिद्धिः। न वा शून्यकारणवादनिरासः। प्रकृतश्च "तद्धैक आहुरसदेवेदमग्र आसीत्" "कथमसतः सज्जायेत" इतिशून्यवादनिरास इति। यदपि "तत्सत्यं स आत्मा" इत्यंशेन पुनः पुनः सत्यत्वकथनं तदपि कुतार्किककल्पितस्यात्मन्यप्यसत्यत्वस्य निरासायैव नतु जगतोमिथ्यात्वबोधायेति।

तस्मात्–कारणस्य ब्रह्मणः परमार्थसत्त्वसाधनान्यथाऽनुपपत्या कारणनिष्ठपरमार्थसत्त्वसाधनीभूतकार्यनिष्ठश्रुत्युक्तसत्त्वस्य पारमाथिकत्व एव श्रुतेस्तात्पर्य्यंनिश्चीयते। तस्माच्छान्दोग्यस्थमिदं कारणवाक्यं जगतः सत्यत्वप्रतिवादनानुगुणमेव।

एतेन–"आत्मा वा इदमेक एवाग्र आसीत्"–"आत्मैवेदमग्र आसीत्" ब्रह्म वा इदमग्र आसीत् "असद्वा इदमग्र आसीत्–इत्यादीन्यपि ऐतरेय-बृहदारण्य-तैतरीयादिकारणवाक्यानि जगत्सत्यत्वानुगुण्येन व्याख्यातानि। तेष्वपि वाक्येषु इदंपदेन निखिलकार्य्यप्रपञ्चं परामृश्य सृष्टेः प्रागपि ब्रह्मात्मकत्वबोधनात्॥ नासद्वस्तु कदाचिदपि सदात्मकं भवितुमर्हति तथासति तस्याऽसत्वस्वरूपहानात्॥ तैत्तर ये तु "तदात्मानं स्वयमकुरुत" इति स्वस्यैव ब्रह्मणो जगद्रूपेण परिणामकथनात् स्फुटंजगतः सत्यत्वं सूचयति। अत एव "यदिदं कञ्च तत्सत्यमित्याचक्षते" इतिस्वशब्देनापि सत्यत्वं "तत्सुकृतमुच्यते" इतिसुकृतत्वं चोच्यते। इति। एवं "स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्ति एवमेतस्मादात्मनः सर्वे प्राणाः सर्वेलोकाः सर्वेदेवाः सर्वाणि भूतानि सर्वेऽएत आत्मानोव्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणावै सत्यं तेषामेव सत्यम्"–इति इयंश्रुतिः काण्वपाकेबृहदारण्ये–"सर्व एव आत्मानः"इत्येतावदंशहीना पठ्यते माध्यंदिनपाठे तु तत्सहिता वर्तते इति बोधियतव्यम्॥ एवं मुण्डके–"तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फु-

लिंगाः सहस्रशः प्रभवन्ते सरूपाः॥ तथाऽक्षराद्विविधा सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति॥ मु० १॥ इतिसृष्टिश्रुतिः पठ्यते॥ उभावपि वाक्यौ जगत्सत्यत्वानुगुणौ तथैव दृष्टान्तसंगतेः दृष्टान्तवाक्येऽग्निः कारणस्थानीयो विस्फुलिंगः कार्य्यस्थानीयः। उर्णनाभिः कारणस्थानीयः तंतुः कार्य्यस्थानीयः। तथा मुण्डकेप्रथमें, "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्या ओषधयः संभवन्तिः यथा सतः पुरुषात्केशलोमानि जायन्ते तथाऽक्षरात्संभवतीह विश्वम्" इत्यपि वाक्यं पठ्यते तत्राप्युक्ताः कारणदृष्टान्ताः कार्य्यदृष्टान्ताश्च सजातीया एव नतु शुक्तिरजतादिवद् विजातीयाः। तथाच तादृशसजातीयकार्य्यकारणदृष्टान्तकथनेन दार्ष्टान्तिकयोः कारणकार्य्यभूतयोर्ब्रह्मजगतोरपि तिलतैलयोरिव समानसत्ताकत्वस्यैव प्रतिपादने श्रुतेस्तात्पर्य्यं प्रतीयते नतु शुक्तिरजतवद् विषमसत्ताकत्वप्रतिपादने। अतएव 'प्रभवन्ते सरूपा' इति कार्य्यकारणयोः सारूप्यं स्वशब्देनैवोक्तम्। जगतोमिथ्यात्वे सारूप्यमपि सुदूरपराहतम्। एवमन्यान्यपि कारणवाक्यानि तत्त्वतः पर्य्यालोच्यमाने जगत्सत्यत्वानुगुणान्येव। एवं "पुरुषएवेदं सर्वं यद्भूतंयच्चभाव्यम्" इत्यादि वाक्यान्यपि तदनुगुणान्येव। अर्थान्तरकल्पने यथाश्रुतार्थत्यागात्। एवं लयवाक्यान्यपि निरुक्तसुबालाद्युक्तानि तथाभूतान्येव सर्वान्तिमलयदशायामपि ब्रह्मणा सह-"एकीभवति" इत्येकीभावस्यैव कथनात् बाधाकथनाच्च 'इति निर्वाणानुशासनमिति' तत्रैव विद्यापरिसमाप्तेः सूचनाच्च। एवं नियम्यनियामकभावादिबोधकानि "नित्योनित्यानां" इत्यादि वाक्यानिच जगत्सत्यत्वानुगुणानि॥ तथास्मृतयोऽपि-"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। अपरस्परसम्भूतं किमन्यत्कामहैतुकम्" ॥ गी. १६॥ "तदेतदक्षयं नित्यं जगन्मुनिवराखिल। आविर्भावतिरोभावजन्मनाशविकल्पवत्। शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः यतोऽतोब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः। भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता। विष्णुपु.॥ एकदेशास्थितस्येन्दोर्ज्योत्स्ना विस्तारिणी

तथा। परस्य ब्रह्मण: शक्तिस्तथेदमखिलं जगत्। यत्किंचित्सृज्यते येन सत्त्वजातेन वै द्विज। तस्य सृज्यस्य संभूतौ तत्सर्वं वै हरेस्तनु''इत्याद्या: जगत: सत्यत्वानुगुणा:। अत्र प्रथमे गीतावाक्येजगतोऽसत्यत्वाप्रतिष्ठित-त्ववादिनामासुरत्वमाह–"एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धय" इत्या-दिना। तेन जगत्सत्यत्ववादस्य दैवसिद्धान्तत्वं सुतरामायाति॥ द्वितीये विष्णुपुराणवाक्ये जगत: सत्कार्य्यवादमाश्रित्य–अक्षयत्वंनित्यत्वंचाह। नच जगत: उत्पत्त्यादिदर्शनात् शास्त्रे तथा श्रवणाच्च कथमक्षयत्वं नित्यत्वं चेत्याह "आविर्भावतिरोभावजन्मनाशविकल्पवत्" इति तेन जन्म आ-विर्भाव:, विनाश: तिरोभावो नतु नैयायिकादीनामिव तद्विलक्षणमिति न नित्यत्ववादव्याघात इति। तृतीयविष्णुपुराणवाक्ये सर्गादिभाव-शक्तीनां वह्नौष्ण्यदृष्टान्तेन स्वाभाविकत्वकथनात् सृज्यस्य जगत: सत्यत्वमेव सूचयति। चतुर्थेऽपि विष्णुपुराणवाक्ये अग्ने: प्रभाया इव ब्रह्मजगतोर्नित्यसम्बन्धसूचनात् भगवत्तनुत्वकथनात्त्व सत्यत्वंसूचयति।

एवं सर्ववेदानांतात्पर्य्यावधारणार्थप्रवृत्तेषु वेदान्तसूत्रेष्वपि ज-गत्सत्यत्वानुगुणान्येव प्राय:सूत्राणि दृश्यन्ते यथा "प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुरोधात्"। १। ४। २२॥ आत्मकृते: परिणामात्।१।४।२३॥ योनिश्चहि गीयते। १। ४। २४॥ इत्यादि। अत्रहि ब्रह्मण उपादानत्व-लक्षणं प्रकृतित्वं जगतश्चोपादेयत्वलक्षणं परिणामत्वं साधयति: नत्वधिष्ठा-नत्वं विवर्तत्वंवा, दृष्टान्ततयाऽपि श्रौतं मृत्पिण्डाद्येव दर्शयति नतु शुक्ति-रजतादि। यदि च प्रकृतिपदाच्छुक्त्यादिवदधिष्ठानं परिणामपदेन रजता-दिवद्विवर्तोऽभिप्रेत: स्यात्-सूत्रकृतां, तदा "अधिष्ठानं च कार्य्यस्य वाचा-रंभणमात्रत्वात्, 'आत्मकृतेर्विवर्तनात्' 'इत्येवं सूत्रौ प्रणयेत्' तथासति भ्रमाभावेन बोधसौकर्य्यात्। किंचाधिष्ठानस्य प्रकृतित्वकथनं विवर्तस्य परिणामत्वकथनंच भवतांपरिभाषामात्रं लोके तथाऽप्रसिद्धे:। तस्मादत्र सूत्रेषु मृद्घटादिवत्कनककुण्डलादिवत् क्षीरदध्यादिवच्च प्रकृतिपरिणा-मभाव एवाभिप्रेतो नतु शुक्तिरजतादिवदधिष्ठानविवर्तभाव:। एवं 'दृश्यते

तु' "नतु दृष्टान्तभात्" 'स्वपक्षदोषाच्च" इत्यत्र-वृश्चिकगोमयादि दृष्टान्तं-पुरुषकेशलोमादिदृष्टान्तं पृथिव्यादौ केशकर्पटादिलयेऽपि विक्रियाभावः इतिदृष्टान्तंच वदन्वास्तविकपरिणामवादमेव दृढ़ी करोति नतु विवर्त-वादं, तथा तात्पर्य्ये तदनुसारिशुक्तिरजतादिदृष्टान्तमेव दद्यात् तथासति वोधसौकर्य्यात् । एवं "तदन्यन्वमारंभणशब्दादिभ्यः,' 'भावेचोपलब्धेः', ' सत्वाच्चावरस्य ' "असद्व्यपदेशादितिचेन्न धर्म्मान्तरेण वाक्यशेषात्" 'युक्तेःशब्दान्तराच्च'– पटवच्च'–यथाच प्राणादिः'–'इतरव्यपदेशात्‌द्धिताऽ-करणादिदोषप्रसक्तिः ' अधिकं तु भेदनिर्देशात्" 'अस्मादिवच्च तदनुपपत्तिः "उपसंहारदर्शनान्नेतिचेन्नक्षीरवद्धि" "देवादिवदपिलोके" "कृत्स्नप्रसक्ति निरवयवत्वशब्दव्याकोपो वा" "श्रुतेस्तु शब्दमूलत्वात्" "आत्मनि चैवं विचित्राहि" स्वपक्षदोषाच्च नप्रयोजनवत्त्वात्" लोकवत्तु "लीलाकैवल्यम्" इत्यादि सूत्राणां स्वातंत्र्येण पर्य्यालोचनायांविवर्तवादस्य व्यासाशय-विरुद्धत्वमेव निश्चीयते । अत्रहि ' तदनन्यत्वमारंभणशब्दादिभ्यः" इत्य-नेन कार्य्यजातस्य ब्रह्मानन्यत्वमेव साध्यते । अनन्यत्वमभेदस्तादात्म्यं मृद्धटयोरिव नतु तदत्यन्ताभावो रजतादेरिव । एतेन कार्य्यस्य वाचारंभ-णत्वकथनात् "मृत्तिकेत्येव सत्यम्" इति कारणमात्रस्य सत्यत्वकथनाच्च कार्य्यमिथ्यात्वमेव श्रुत्यभिप्रेतमितिशंकानिराकरणद्वारा, तथा ये केचि-त्कार्य्यप्रपंचस्य सत्यत्वमंगीकुर्व्वन्तोऽपि नित्यभिन्नत्वंस्वतंत्रसत्त्वंच मन्य न्ते तान् प्रति ब्रह्मानन्यत्वब्रह्मात्मकत्वप्रतिपादनद्वाराच पूर्वोक्तस्य ' प्र-कृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्' 'आत्मकृतेः परिणामात्' इत्यादि–सूत्रोक्त-वास्तविकपरिणामवाददृढ़ीकारणायैवात्रसूत्रकारणांप्रवृत्तिः, नतु विवर्त-वादसाधनाय, तथासति "तद्विवर्तत्वमारंभणशब्दादिभ्यः" इत्येव सूत्रं-कुर्य्यात्-वोधसौकर्य्यात् । किंच "भावे चोपलब्धेः" "सत्वाच्चावरस्य" इत्यादिसूत्राणां शांकरभाष्यदिशापि पर्य्यालोचनायां कारणात्मकतया कनककुण्डलपटादिवत् कार्य्यसत्यत्व एव तात्पर्य्यंप्रतीयते-नतु मिथ्या-त्वे "यच्च आत्मनि चैवं विचित्रा हि ब्र. सू० ।" इतिसूत्रस्य स्वप्नदृष्टान्तेन

विवर्ते तात्पर्य्यं विवर्तवादिभिर्वर्ण्यते तत्रापि न स्वप्नदृष्टान्तेनविवर्ते तात्पर्य्यं यदि चैवं स्यात्-तर्हि "भावेचोपलब्धेः" "सत्वाच्चावरस्य" पटवच्च "क्षीरवद्धि" इत्यादि न वदेत् किंच "वैधर्म्याच्च न स्वप्नादिवत्" न भावोऽनुपलब्धेः "इति विज्ञानवादिमतखण्डने जगत्सृष्टौ स्वप्नादिदृष्टान्तं न खण्डयेत् । किंच यदिकार्य्यप्रपंचस्य स्वप्नादिवद्विवर्तत्वे सूत्रकाराणां तात्पर्य्यं स्यात्तर्हि यथा स्वप्न-प्रपञ्चस्य "मायामात्रंतुकार्त्स्न्येनानभिव्यक्तरूपत्वात्" इत्यधिकरणेन मायिकत्वमुक्तं 'तथा जगतोमायामात्रत्वसाधनायापि" स्पष्टशब्दार्थकस्पष्टदृष्टान्तकमधिकरणं रचयेत् न रच्यतेऽपितु तद्विपरीतं "प्रकृतिश्च दृष्टान्तानुरोधात्"-इत्याद्यधिकरणं रचयति तस्मान्न सूत्रकाराणां शंकराचार्य्याणामिव जगतःस्वरूपतोमिथ्यात्वे तात्पर्य्यंप्रतीयते-इति ।

तथापि-कानिचित्वाक्यान्यंशतो जगन्मिथ्यात्वपराण्यपि प्रतीयन्ते यथा नृसिंहोत्तरतापनीये नवमखण्डे 'न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिव स वा एष आत्मा परएवैष सर्वं तथाहि प्रज्ञैनैषऽविद्या जगत्सर्वमात्मा परमात्मैव स्वप्रकाशोऽप्यविषयज्ञानत्वाज्जानन्नेव ह्यन्यत्रान्यन्नविजानात्यनुभूतेर्मायाच तमोरूपानुभूतिःस्तदेतज्जडंमोहात्मकमनन्तमिदंरूपमस्यास्य व्यंजिका नित्यनिवृत्ताऽपि मूढैरात्मेव दृष्टास्य सत्त्वमसत्त्वंच"-इत्यादि। यद्यप्यत्र "मायां तु प्रकृतिं विद्यान्मायिनं तुमहेश्वरम्" इत्यादिश्रुतिसिद्धाया पूर्वं व्याख्याताया भगवतोबहिरंगशक्तिरूपायावैभवमेव वर्ण्यते। तथा "जीवेशावाभासेन करोति मायाचाविद्याच स्वयमेव भवति, इत्यंशेन जीवस्य वैराजाख्येश्वरस्यचाभासत्वकथनमपि चिदंशत्वबोधनपरमेव नतु शांकरमतप्रसिद्धप्रतिबिम्बपरं नवा मूलरूपेश्वरपरं "तमीश्वराणां परमंमहेश्वरं तंदेवतानांपरमंचदैवतं पतिं पतीनां परमं परस्तात् विदाम देवंभुवनेशमीड्यम । न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते पराऽस्यशक्तिर्विविधैवश्रूयते स्वाभाविकी ज्ञानबलक्रियाच, "मायां तु प्रकृतिंविद्यान् मायिनं तु महेश्वरम्" "मामेव

ये प्रपद्यन्ते मायामेतां तरन्तिते" इत्यादिश्रुतिस्मृतिषु भगवत ईश्वरादिपदवाच्यस्य सर्वतः स्वतंत्रत्वस्य मायायास्तु भगवदेकतंत्रत्वस्य बहुधा निरूपणात् ।

तथापि अंशविशेषे जीवाज्ञानकल्पितत्वनिरूपणेऽपि नृसिंहतापिनीश्रुतेस्तात्पर्य्यंप्रतीयते–"एवं मृत्तिकेत्येवसत्यम्" इत्यत्रापिकार्य्यांशेकिंचिदंशस्य जीवाज्ञानकल्पितत्त्वे तात्पर्य्यंप्रतीयते। येतु "अथातआदेशानेतिनेति" "एकमेवाद्वितीयम्" इत्याद्यपिश्रुतिवाक्यं जगन्मिथ्यात्वे उदाहरन्ति तान् प्रति पश्चाद्वक्तव्यम् । एवं जीवानां स्वात्मविषये, अविद्याऽस्मितारागद्वेषाभिनिवेशाः स्वाज्ञानकल्पितास्तु प्रसिद्धा एव सर्वशिष्टसम्मताः । एवंमीश्वरविषयेऽपि जीवानामज्ञानं प्रसिद्धतरमेव ययोरर्थेः उपनिषदुपदेशः, ते सर्वेऽपि जगत्यंशविशेषे जीवाज्ञानकल्पितत्त्वंप्रथयन्ति । जागतिकपदार्थेऽन्यथाबुद्धिरेव जीवेश्वरस्वरूपेप्यन्यथाबुद्धिंजनयति, अन्यथाबुद्धिसंभिन्नजगद्बुद्धिरेव जगत्कारणं ब्रह्मस्वरूपं तिरोधापयतिच । यदिंजगद्बुद्धिः शुद्धास्यादन्यथाबुद्धिसमवेता न स्यात् तर्हि जगत्कारणंब्रह्मस्वरूपं याथातथ्येन ज्ञापयेदेव नतु तिरोधापयेत् नहि कार्य्यभूतस्य प्रभादेर्ज्ञानं वह्निस्वरूपं कारणं तिरोधापयति, अपितु ज्ञापयत्येव, अतएव "यतोवाइमानि भूतानि जायन्ते"इतिश्रुतौ "जन्माद्यस्ययतः" इतिसूत्रेच कार्य्यं जगत् ब्रह्मस्वरूपप्रतिपत्तौज्ञापकतयाप्रदर्शस्यते इति ।

तस्मादस्तिजगति, अंशद्वयं पूर्वोदाहृतश्रुतिसिद्धं सत्यत्वं तथाऽनुपदमुपपादितोपपत्तिसिद्धं जीवाज्ञानकल्पितत्वं च । तत्रेश्वरकल्पितांशे सत्यत्वं जीवाज्ञानकल्पितांशे मिथ्यात्वमिति ॥ ननु एकस्मिञ्जगति अंशभेदेन सत्यत्वं मिथ्यात्वं च कथंप्रतिपत्तव्यम्, परस्परविरुद्धस्वभावयोस्तयोः सहावस्थानासंभवात् इतिचेत्, अत्रोच्यते-इदं रजतम्, एष भुजंगः, इत्यादिविसंवादिज्ञाने, रजतांशे भुजंगांशे च तावदंशद्वयं भासते, उद्देश्यांशो विधेयांशश्च, तावेव च क्रमेण विशेष्यांशः प्रकारांशश्चोच्येते, तत्र इदमंशः प्रथमोः रजतांशोद्वितीयः । तत्र चाकचिक्यादिविशिष्टं

विशेषापन्नं चक्षुःसन्निकृष्टं सद्वस्तु इदमंशः । लाभालाभप्रयुक्तसुख-दुःखमोहजनकं बहुमूल्यत्वादिव्यवहारप्रयोजकीभूतं रजतमितिव्यवहार-प्रयोजकतावच्छेदकरूपं रजतत्त्वं द्वितीयोंऽशः ॥ भुजंगस्थले वर्तुलत्वा-यतत्वादियुतसन्निवेशविशेषविशिष्टंचक्षुः सन्निकृष्टं वस्तु इदमंशः । भयजनकत्वप्रयोजकीभूतं द्विजिह्वत्वफणित्वादि-प्रयोज्यं सर्प इति व्यव-हारप्रयोजकतावच्छेदकं सर्पत्वं द्वितीयोंऽशः ॥ तदेतदंशद्वयं सम्मील्यैव रजतमिति वा सर्प इति वा विसंवादिव्यवहारोभवति तदेवं मिथ्यात्वेना-भिमतेऽपि इदंत्वविशिष्टरजतभुजंगादिवस्तुनि प्रथमांशः सत्य एव भवति-बाधोत्तरमपि तस्योपलंभात् ॥ किन्तु द्वितीय एव मिथ्या । सम्यक्‌दर्श-नानन्तरम् बहुमूल्यत्वलाभालाभप्रयुक्तसुखदुःखमोहजनकत्वरजतत्वादि-व्यवहारप्रयोजकत्वादीनां भयजनकत्वादीनामेव च तत्र बाधदर्शनात् ।

तदेवं व्यावहारिकमिथ्यात्वेनाभिमतेऽपि वस्तुनि, अंशविशेष एवमिथ्या भवति, तावदंशमादायैव विशिष्टेऽपि मिथ्यात्वव्यवहारः। एवं व्यावहारिकसत्यत्वेनाभिमतेऽपि पित्तलकनककुण्डलादौ, यदा कुण्डलादिकं कनकत्वकनकात्मकत्वकनकांशत्वादिना, कनकत आविर्भूतकनकात्मक-कुण्डलत्वादिना च ज्ञानविषयः तदा सत्यमित्युच्यते तथाभूतं च ज्ञानं प्रमा इत्युच्यते । तदेव च कुण्डलादि बालकविशेषादिना नेदंस्वर्णमपितु कुण्डलम्, नेदंस्वर्णांशः, अपितुस्वतंत्रं वस्तु, इत्यादिदिशा स्वर्णभिन्न-त्वेन स्वतंत्र तत्वान्तरत्वेन स्वर्णापेक्षया उचितादधिक प्रेमास्पदत्वेनोचि-तादधिकमूल्यकत्वादिना च गृहीतं तद्विषयकज्ञानं च तात्त्विकदृष्ट्या मिथ्यैव भवति । अतएव संस्थानविशेषापन्नं तत् चमत्कारविशेषमावह-न्नपि स्वर्णमेव स्वर्णांश एव स्वर्णात्मकमेव न स्वर्णभिन्नं नवा स्वतन्त्रं वस्त्वन्तरम् स्वर्णाज्जातत्वात्-स्वर्णे स्थितत्वात्-स्वर्णे पर्य्यवसा-नाच्च।अतएव च स्वर्णमात्रार्थिनां वणिक्‌विशेषाणां न शुद्धस्वर्णापेक्षया-ऽधिकमूल्यकं वा शुद्धस्वर्णभिन्नं वा बालानां तु तद्विपरितम्, इतितादृश-विशेषज्ञदृष्ट्या बालानां प्रतीतिर्मिथ्यैव । नैतावता स्वर्णस्य कुण्डला-

कारता विलक्षणकार्य्यकारिता कुण्डलत्वाख्यस्वर्णविशेषता वा मिथ्या भवति । अपि तु बालबुद्धिकल्पितं स्वर्णभिन्नत्वस्वर्णानात्मकत्वादिकमेव मिथ्या । तावन्मात्रोपचारेणैव कुण्डलमपि बालबुद्धिकल्पितं मिथ्याभूतं बालानां तादृशं ज्ञानंचान्यथाऽर्थकं विपश्चिद्भिरुच्यते ॥

तथा विवादास्पदे जगत्यपि तावदंशद्वयंभासते सामान्यविशेषभेदेन, तत्र-अस्तित्वभातित्वप्रियत्वाद्यंशः पृथिव्यादिसन्निवेशविशेषांशश्च प्रथमः, स एव सामान्यांश इत्युच्यते-तस्यापामरसर्वजनंप्रतिभासमानत्वात् सामान्यत्वम् । द्वितीयो विशेषांशोऽपि द्विविधः ब्रह्मविन्मात्रप्रतीतिगोचरतद्भिन्नमात्रप्रतीतिगोचरभेदात् । तत्र ब्रह्मात्मकत्वब्रह्ममूलकत्वब्रह्मायतनत्वब्रह्मप्रतिष्ठानत्वादिरूपःप्रथमोंऽशः ब्रह्मानात्मकत्वब्रह्मामूलकत्वब्रह्मानायतनत्वब्रह्माप्रतिष्ठानत्वाहंताममतास्पदत्वपरप्रेमास्पदत्वद्वेषास्पदत्वाद्यंशो-द्वितीयः । एवंच यदा सामान्यांशेषु जगदितिव्यवहारनिर्वाहकोमुख्यांऽशः पृथिव्यादिसन्निवेशविशेषरूपः स्वेतरसामान्यांशेनास्तित्वभातित्वप्रियत्वादिना विशेषेणच ब्रह्मात्मकत्वब्रह्ममूलकत्वादिना च स्वाभाविकेन सर्वेण समनुगतः प्रतीयते तदा सा प्रतीतिः, तादृशप्रतीतिविषयीभूततादृशसर्वधर्म्मोपपन्नं च जगत् सत्यमित्युच्यते तादृशप्रतीतेर्विषयस्य बाध्यत्वाभावात्-संवादिप्रवृत्तिजनकत्वाच्च । स एवच पृथिव्यादिसन्निवेशविशेषो यदि ब्रह्मात्मकत्वादिजगस्वाभाविकधर्मविपरीतेन ब्रह्मानात्मकत्वब्रह्माप्रतिष्ठानत्वादिना सहचरितः प्रतीयते तदा सा प्रतीतिः तद्विषयश्च पृथिव्यादिसन्निवेशविशेषरूपं जगत्, असत्यमित्युच्यते वेदान्तपरिशाधितब्रह्मात्मकत्वादिविषयकसम्यग्ज्ञानबाध्यत्वाद्विसंवादिप्रवृत्तिजनकत्वाच्च । तथाच एकमेव जगत्, ब्रह्मात्मकत्वाद्युक्तस्वाभाविकधर्मविशिष्टतया सत्यमितिशास्त्रेषु सत्यमित्युच्यते । ज्ञायमानंच सत् "जन्माद्यस्य यतः" इतिसूत्रोक्तदिशा ब्रह्मानुभवोपयोगि च भवति । अविद्यापिहितसदसद्विवेकरहितप्राकृतजनप्रतीतिसिद्धतादृशविपरीतधर्मविशिष्टतयाऽसत्यमित्यप्युच्यते ब्रह्मस्वरूपपिधायि च भवति । इति युगपदेव जगति सत्यत्वमस-

त्यत्वं ब्रह्मज्ञानोपयोगित्वं ब्रह्मज्ञानप्रतिबन्धकत्वंच भवति । अतएव जगत् , सदसदपिक्वचिदुच्यते। तदेवमज्ञकल्पितब्रह्मानात्मकत्वादिपूर्वोक्तविशेषणांशमादायैव मिथ्यात्वं तावदंशमादायैव शास्त्रेषु क्वचिज्जगतोमिथ्यात्वकथनम्, शुक्तिरजतादिदृष्टान्तश्च । दृश्यते हि 'शिखीनष्टः' इत्यादौविशेषणांशे यादृशधर्म्मवत्त्वंविशिष्टांशेऽपितादृशधर्म्मवत्वव्यवहारःनैतावता विशेष्यांशेऽपि तथात्वम् । तथा पृथिव्यादिसन्निवेशविशेषरूपे जगति निरुक्तविशेषणांशस्य मिथ्यात्वात्-विशिष्टे ब्रह्मानात्मकत्वादिविशिष्टतयाकल्पिते जगति मिथ्यात्वव्यवहारः । तथाचायं निर्गलितोऽर्थः। एकमेव जगत् तस्य ब्रह्मात्मकत्वब्रह्मप्रतिष्ठानत्वब्रह्माधिष्ठितत्वादिः स्वाभाविको धर्मः । ब्रह्मानात्मकत्वब्रह्माप्रतिष्ठानत्वस्वतंत्रत्वाहंकारममकारास्पदत्वादिकमस्वाभाविको धर्मः । तथाच यदि स्वाभाविकधर्मोपपन्नतया ज्ञायते तदा ज्ञायमानं जगत् ज्ञानं च सत्यमित्युच्यते तावदंशमायैव वेदान्तेषु जगत्सत्यत्वादिवादः परिणामवादश्च । यदा विपरीतधर्मवत्तया ज्ञायते तदा विशेषणांशस्य सम्यक्ज्ञानबाध्यत्वात्-व्यामोहकत्वाच्च जगन्मिथ्यात्ववादो विवर्तवादश्च । इत्युभयोः श्रुत्योः विषयभेदान्नविप्रतिषेधः । नैतावतापि जगतः स्वरूपांशे स्वाभाविकधर्म्मांशे वा मिथ्यात्वम् । अपितुब्रह्मानात्मकत्वादिविशेषणांश एवेति ॥

इदंपुनरिहावधेयम् यद्वस्तु यावत्स्वाभाविकधर्म्मोपपन्नंभवति तद्वस्तु तावत्स्वाभाविकसर्वधर्मोपपन्नतया ज्ञातं सदेव सर्वथा सत्यं भवति-तथासत्येव तद्वस्तुन अंशतोऽपि बाध्यत्वाभावात् । यदि च किंचिदपि तादृशस्वाभाविकधर्म्मविहीनतया परकीयधर्मसम्पन्नतया वा ज्ञायये तदा तावदंशमादाय मिथ्यापि भवत्येव तावदंशस्य सम्यज्ज्ञानबाध्यत्वात् । यथा स्वर्णखण्डे पलपरिमितं पीतं सुन्दरं पंचशतमूद्रामूल्यकमिति वस्तु स्थितिः । तच्च यदि स्वर्णखण्डं पलपरिमितंपीतंसुन्दरंपंचशतमूद्रामूल्यकम् इत्येवंरूपेण यावद्धर्म्मोपपण्नतया ज्ञायते तदा अंशतोऽपि बाध्यत्वाभावात्सर्वथा सत्यमित्युच्यते यदिच-अंशतोऽपि

हीनतया परधर्म्मोपपन्नतया वा स्वर्णखण्डमपीतमसुन्दरंवा पल-परिमितं पंचशतमुद्रामूल्यक मित्यादिरूपेण रजतखण्डादिरूपेण वा ज्ञायते तदा स्वर्णखण्डं पीतं सुन्दरं पंचशतमूद्रामूल्यकमित्येवं रूपसम्यक्ज्ञानवाध्यत्वात्तदंशेनमिथ्याऽपि भवत्येव । तथा जगदपि यावत्स्वाभाविकब्रह्मात्मकत्वादिधर्म्मोपपन्नं तावत्सर्वधर्म्मोपपन्नत्वेन ज्ञायमानमेव सर्वथा सत्यम् । ब्रह्मात्मकत्वादिकिंचिद्धर्मविहीनतया वा स्वतंत्रत्वादिपरधर्मवत्तया वा ज्ञायमानमंशतो मिथ्याऽपि भवत्येव तावदंशमादाय सम्यक्ज्ञानबाध्यत्वात्, इति जगतःसत्यत्वेप्युभयश्रुतिसामंजस्यमिति। विसंवादिप्रवृत्तिजनकत्वादिलक्षणजीवब्रह्मात्मस्वरूपविधायकत्वादिलक्षण-मोहकत्वाद्युक्तिसामञ्जस्यं चेति ॥

ननु तदेवैतद् व्यवस्थाया युक्तत्वं स्याद्यदा सत्यत्वासत्यत्वावेदकयोः प्रमाणयोः समबलत्वं भवेत् । विषमबलत्वे तु दुर्बलस्य सत्यत्वावेदकप्रमाणस्य मुख्यार्थात्प्रच्याव्य सवलमिथ्यात्वश्रुत्यनुगुणतात्पर्य्यकल्पनमेव युक्तम् । नच श्रुतित्वाविशेषाद्द्वयोः समबलत्वं युक्तम् । मिथ्यात्वावेदकवाक्यस्य प्रमाणान्तरानधिगतार्थविषयकत्वेन नित्यशुद्धमुक्तस्वभावात्मस्वरूपस्य प्रतिपत्तेः प्रत्यनीकाशुद्धत्वादिज्ञाननिरसनमुखेनोपयोगित्वेन च बलवत्त्वात् । प्रपञ्चसत्यत्वावेदकशास्त्रस्य प्रत्यक्षादिप्रमाणसिद्धार्थावेदकत्वादनुवादकत्वेनापूर्वत्वाभावात् । तादृशनिर्विचिकित्सात्मस्वरूपप्रत्यनीकार्थग्राहकत्वाच्चेति ॥ तथाच सृष्टिवाक्यं प्रपञ्चसत्यत्ववाक्यंच न प्रपञ्चसत्त्वपरमपितु निषेधार्थमनुवादमात्रपरम् । तदुक्तम्–"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपच्यते" इति। अयंभावः। यदि लौकिकप्रमाणसिद्धजगतः, स्वशब्देन ब्रह्मकार्य्यत्वेनानुवादमकृत्वा निषेधति-तदा नास्त्यत्र घटः इत्यादौ यथा एकत्र निषिद्धयमानोऽपि घटोऽन्यत्र सिद्ध्यति तथा जगदपि ब्रह्मणि निषिद्धयमानमन्यत्र क्वचित्सिद्ध्येत्। तथाच ननिर्विकित्साद्वितीयब्रह्मात्म्यैक्यप्रतिपत्तिः । यदितु जगतो ब्रह्मजत्वब्रह्मायतनत्वब्रह्मपर्य्यवसानत्वादिना सम्यगनूद्य प्रतिषिद्ध्यते तदा ब्रह्मा-

पादेयत्वेन ब्रह्मण्यध्यस्तस्य जगतो ब्रह्मणि प्रतिषेधे सर्वथा मिथ्यात्वमेव सिद्ध्येन्नान्यत्र सत्यत्वम् । यथा मृदादिकार्य्यत्वेनाध्यस्तस्य घटादेः मृदादावसत्वे सिद्धेऽन्यत्राप्यसत्वमेव सिद्ध्येत्, कार्य्यस्योपादाने सत्त्वाभावेऽन्यत्र सत्त्वासंभवात् । तथाच निर्विचिकित्साद्वयब्रह्मात्म्यैक्यप्रतिपत्तिरितिचेन्न ।

प्रपंचसत्त्वावेदकवाक्यानामपि तथैवापूर्वत्वात् । तत्त्वदृष्ट्या विचार्य्यमाणे तु मिथ्यात्वावदेकवाक्यादपि विशेषतोऽपूर्वत्वात् ब्रह्मस्वरूपप्रतिपत्तावधिकमन्तरङ्गत्वात् मिथ्यात्वावेदकवाक्यस्यैव सत्यत्वावेदकवाक्यांगतानिर्णयाच्च । तथाहि यादृशं जगत्, श्रुत्या आवेद्यते न तादृशंजगत् प्रत्यक्षाद्वा—अनुमानाद्वासिद्धयतियेन श्रुतीनामनुवादकत्वम् । श्रुतिर्हि—“आत्मन आकाशः संभूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी” इत्येवं जगत्सृष्टिं वदति नह्येतत्प्रत्यक्षेण सिद्धयति अग्निजलयोरुपादानोपादेयभावस्य नितरांप्रत्यक्षविरुद्धत्वात् । एवमितरेषामपिवाय्वाकाशादीनां तथाभावः प्रत्यक्षासिद्ध एव । नाप्यनुमानसिद्धः परमाणुकारणवादक्षणिकविज्ञानवादशून्यवादमायावादादीनामेव नैयायिकबौद्धाद्युद्भावितत्तर्कसिद्धत्वत् ॥ यद्यनुपदोक्तश्रुत्युक्तव्योमादिकारण वादस्य तर्कसिद्धत्वं भवेत्तदा नैयायिकबौद्धादि-तार्किकैः साध्येत, नत्वारंभवादमिथ्यात्ववादादिः । तथाच त्वदुक्तमिथ्यात्ववाद एव तर्कसिद्ध इति त्वदुक्तश्रुतिरेव तदनुवादिकेति । नच त्वदुक्ताकाशादिसृष्टिवादोऽपि सांख्यैस्तर्केण साद्ध्यत एवेति तस्यापि तार्किकत्वं सिद्धयत्येति वाच्यम् । तथापि न तस्य तर्कसिद्धा सृष्टिः ब्रह्मकारणवादपर्य्यवसन्ना यदि च श्रुतिसिद्धब्रह्मपरिणामवादस्य प्रत्यक्षसिद्धत्वं वा तर्कसिद्धत्वं वा सांख्यतर्कसिद्धत्वं वा भवेत् तर्हि सांख्यादिभिः नैयायिकादिभिश्च “कृत्स्नप्रसक्तिनिरवयवत्वशब्दव्याकोपो वा” इत्यादिना तर्कविरोधो नोद्भावयेत व्यासश्च “श्रुतेस्तु शब्दमूलत्वात्” इत्यादिना श्रुत्येकसमधिगम्यत्वं तर्कागोचरत्वं च न वदेत् । तस्मात् ब्रह्मपर्य्यवसन्ना-आका-

शादिसृष्टिः श्रुतिमात्रसिद्धा "अपूर्वैव इति तत्प्रतिपादिकाश्रुतिरप्यपूर्वैव नानुवादिका । नन्वस्तु सृष्टिश्रुतेरपूर्वत्वम् तथापि जगत्सत्यत्वश्रुतेः कथमपूर्वत्वम् इतिवाच्यम् । सृष्टिश्रुतेरपूर्वत्वेन सृष्टेः सत्यत्वे सिद्धे तदनुगृहीतजगत्सत्यत्वश्रुतेरपूर्वत्वाभावेऽपि न जगत्सत्यत्वव्याघातः । इति तद्बोधकत्वश्रुतेरपि न स्वार्थबाधः ।

वस्तुतस्तु जगत्सत्यत्वश्रुतेरप्यपूर्वत्वमस्त्येव । बौद्धाद्युद्भाविततर्कप्रसक्तमिथ्यात्वनिषेधकत्वात् । अयंभावः बौद्धादिभिर्हितर्कबलमाश्रित्य जगतः क्षणिकपरमाणुपुञ्जमयत्वं क्षणिकविज्ञानमयत्वं मिथ्यात्वं च मतभेदेन कल्प्यन्ते तस्य च प्रामाणिकत्वे निर्विचिकित्सब्रह्मप्रतिपत्तिर्न संभवति। वस्तुतस्तु अंशतोऽपि ब्रह्मप्रतिपत्तिर्न्न संभवति-ब्रह्मणोजगदात्मकलक्षणलक्ष्यत्वात् "यतोवाइमानिभूतानिजायन्ते" इतिश्रुतेः। जगतःसत्यत्वेसत्यब्रह्मणः सुतरां प्रतिपत्तिः। आहच श्रुतिः स्वमुखेनैव "तद्धैक आहुरसदेवमग्रआसीदेकमेवाद्वितीयम् । तस्मादसतःसज्जायत । कुतः सोम्यैवंस्यादितिहोवाच कथमसतःसज्जायेतेति-सत्त्वेव सोम्येदमग्रआसीत्-एकमेवाद्वितीयमिति" व्यख्यातंपूर्व्वम् । दर्शयतिचोपादानोपादेयभावमुद्रयाजगतोब्रह्मप्रतिपत्त्युपायत्वम् "अन्नेनशुंगेन सोम्यापोमूलमन्विच्छाद्भिः सोम्य शुगेन तेजोमूलमन्विच्छ तेजसा सोम्य शुगेन सन्मूलमन्विच्छ सन्मूला सोम्येमा प्रजाः सदायतनाः सत्प्रतिष्ठानाः" इति ॥ अतएव च "जन्माद्यस्य यतः" इतिसूत्रंप्रणयति । महता प्रबन्धेन च जगतो ब्रह्मोपादेयत्वं व्यवस्थापयति प्रतिषेधतिच प्रधानकारणवादंपरमाणुकारणवादमविद्याकारणवादंच "रचनानुपपत्तेश्च नानुमानम्" "महद्दीर्घवद्वा ह्रस्वपरिमंडलाभ्याम्" "वैधर्म्याच्च न स्वप्नादिवत्" इत्यादिभिः । तस्मात् ब्रह्मप्रतिपत्तौ जगत्प्रतिपत्तेरावश्यकत्वात्, जगतश्च बौद्धाद्युद्भावितकर्ततोमिथ्यात्वप्रसक्तेः प्रसक्तमिथ्यात्वप्रतिषेधाय जगत्सत्यत्वश्रुतिः । तथाच यथा रागप्रसक्तभोजनप्रतिषेधकत्वात् "न कलंजं भक्षयेत्" इत्यादिश्रुतेरपूर्वत्वं स्वार्थेप्रामाण्यं च तथा जगत्सत्यत्वश्रुतेरपि तार्किकप्रसक्तमिथ्यात्वप्रतिषेधकत्वात्, अपूर्वत्वं स्वार्थेप्रा-

माण्यं च निर्वाधम्। सत्यश्रुतेः, ब्रह्मप्रतिपत्तावुपयोगित्वमपि व्याख्यातमेव पूर्वोक्तेनेति॥ एवंचमिथ्यात्वावेदकश्रुतिरेव सत्यत्वावेदकश्रुतेरङ्गमित्यपिव्याख्यातम् सत्यश्रुति हिं जगतः सत्यत्वं ब्रह्मोपादेयत्वं ब्रह्माधिष्ठितत्वं ब्रह्मजत्वादिंचव्यवस्थापयदभिन्ननिमित्तोपादनकंनिखिलचिदचिदात्मकजगदात्मभूतंस्वतन्त्रसत्ताश्रयं स्वसामानाभ्यधिकशून्यं तादृशसर्वशक्त्युपेतं ब्रह्म वोधयति। मिथ्यात्वश्रुतिस्तु तादृशप्रतिपत्तिविरोधिभूतं जगति स्वतन्त्रसत्ताश्रयत्वं ब्रह्मानात्मकत्वादिच सांख्यादितर्क्कसिद्धंप्रतिषेधयन्नुपकरोति। इति सुतरां मिथ्यात्वश्रुतेः सत्यत्वश्रुतेरंगत्वमिति॥

ननु "अथात आदेशो नेति नेति नह्ये तस्मादन्यदिति नेत्यन्यत्परमस्त्यथ नामधेय ँ सत्यस्य सत्यमितिप्राणा वै सत्यं तेषामेष सत्यम्" इति वृ. २-३-वृहदारण्यके मूर्तामूर्तब्राह्मणे मूर्तामूर्तात्मकंद्विविधप्रपञ्चस्वरूपमनूद्य प्रतिषेधात् प्रपञ्चस्य स्वरूपत एव सत्त्वप्रतिषेधे मिथ्यात्वश्रुतेस्तात्पर्य्यं निर्धारयितुं शक्यते इतिचेन्न। "नेति नेतीति श्रुतेः पूर्वोक्तमूर्तामूर्तप्रपञ्चप्रतिषेधे तात्पर्य्याभावात्। अपि तु "द्वेवाव ब्रह्मणो रूपे मूर्तंचामूर्तंच, इत्यादिनोक्तं मूर्तामूर्तप्रपञ्चमात्रं नहि ब्रह्मस्वरूपमपि तु एतस्मादधिकमपि प्रपंचातीतं सत्यज्ञानानन्दलक्षणम्। तादृशधामवैभवपरिकरपरिच्छदसहितम्–"आदित्यवर्णतमसः परस्तात्" इत्यादि-श्रुतिप्रसिद्धम्। एवंच "द्वेवावब्रह्मणोरूपे"-इत्युक्ततावन्मात्रब्रह्मस्वरूपत्वभ्रमनिरासार्थं ततोऽप्यधिकब्रह्मस्वरूपबोधनार्थं च "नेति नेति" इति श्रुतिः। तथाच" "एतावानस्य महिमा ततो ज्यायांश्च पूरुषः पादोऽस्यविश्वाभूतानि त्रिपादस्यामृतंदिवि" इतिमन्त्रवर्णेन यदुक्तं तदेवात्रविचारितम्॥ अत्रापि" "पुरुषएवेदं, इत्यंशेन परमात्मनस्तावन्मात्ररूपत्वशंकासंभवात् "ततोज्यायांश्च पुरुषः" इतिप्रपञ्चातीतस्वरूपम्पुनरुक्तम्। तेन न त्वदुक्तार्थसिद्धिः। तदुक्तं सूत्रकृता "प्रकृतैतावत्त्वंहिप्रतिषेधति ततो ब्रवीतिचभूयः ब्र. इ. ३-२२–प्रकृतं यन्मूर्तामूर्तप्रपंचवस्तु तावदेव ब्रह्म न भवति इति "नेतिनेतिवाक्येनप्रतिपाद्यते नतु प्रपंचस्वरूपंनिषिद्ध्यते" अतत्परत्वाद्वाक्यस्य। द्वौ नञौद्वित्व-

संख्यावच्छिन्नरूपमेतावत्त्वं प्रतिषेधतः॥ "भोक्ताभोग्यंप्रेरितारं च मत्त्वा सर्वं प्रोक्तं त्रिविधंब्रह्ममेतत्"। इतिश्वेताश्वतरेऽपि ब्रह्मणस्त्रिरूपत्वप्रतिपादनात् न द्विरूपत्वमात्रम्। तदेवाह "ततो ब्रवीति च भूयः"। ततः पूर्वोक्तात् मूर्तमूर्तरूपद्वयाद् भूयस्त्वं ब्रवीति च वाक्यम्–इतिशेषः। "नह्येतस्मादिति," नेत्यन्यत्परमस्तीति"। एतस्मात्पूर्वोक्तात् मूर्तामूर्तरूपद्वयात् अन्यत् ब्रह्मस्वरूपं नहीति न वक्तव्यम्। यतः अन्यत्परमस्तीति एतस्मात्परमुत्कृष्टमिद्रियाग्राह्यमेतद्रूपद्वयनियंतृ सत्यज्ञानानन्दलक्षणम् पुरुषोत्तमाख्यमन्यद्द्रूपमस्तीति। स्वयंश्रुतिरेव तत्र ब्रवीति इतिसूत्रार्थः। एतेन 'अन्यत्परमस्ति, एतत्पर्य्यन्ताश्रुतिरपि व्याख्यातैव-॥ "अथनामधेयंसत्यस्य सत्यमितिप्राणा वै सत्यं तेषामेष सत्यम्" इत्यस्यार्थ उच्यते-अत्र 'प्राणा' इत्याद्युत्तरार्धं पूर्वार्धस्य निर्वचनम् तथाचायमर्थः– सत्यस्य जीवस्यापि सत्यं ब्रह्म तदेवाह प्राणा इत्यादि प्राणशब्देन-प्राणवन्तो जीवा उच्यन्ते-तेहि ब्रह्माधीनसत्ताका अपि नित्यत्वाच्चेतनत्वाच्चा नित्याचेतनवियदाद्यपेक्षयाऽधिकस्वतंत्रसत्ताश्रयत्त्वात् वियदाद्यपेक्षया-सत्या उच्यंते। तेऽपि ब्रह्मांशाः अंशिभूतब्रह्मसत्ताधीना इति सर्वतः स्वतंत्र-सत्ताश्रयंनिरतिशयज्ञानानन्दघनम्, इति जीवनामपि सत्यंतदिति॥ तदेतद्विस्पष्टं व्याख्यातं वेदान्तकौस्तुभप्रभायामत्रैव वृत्तिकृद्भिः। तेन न जगतः स्वरूपतोमिथ्यात्वसिद्धिः॥

ननु तथापि "एकमेवाद्वितीयम्" छा: ६॥ "सलिल एको द्रष्टाऽद्वैत," बृ. ४. "मनसैवानुद्रष्टव्यम् नेह नानाऽस्ति किंचन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"। इत्याद्यद्वैत-श्रुतिविरोधादुःपरिहरः। तत्र सजातीयविजातीयस्वगताख्यस्य त्रिविधस्यापि भेदस्य प्रतिषेधात् तथाचांशतोऽपि जगत्सत्यत्वस्वीकारासंभवः। तदुक्तं "वृक्षस्य स्वगतोभेदः पत्रपुष्पफलादिभिः वृक्षान्तरात्सजातीयो विजातीयः शिलादितः। तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्य्यते एकावधारणद्वैतप्रतिषेधैस्त्रिभिःक्रमात्।" इति व्याख्यातं चाद्वैतसिद्धौ–स्वगतभेदोनानात्वरूपो जीवेश्वरभेदः। सजा-

तीयभेदोऽत्र द्रव्यत्वादिना पृथिव्यादिभेदः। विजातीयभेदो गुणादिभेदः अथवा जडभेदो विजातीयभेदः। चैतन्यभेदः सजातीयभेदः। ज्ञानानन्दादिधर्मभेदः स्वगतभेदः। ते च एकावधारणाद्वितीयप्रतिषेधैर्निवार्य्यते। अथवा अद्वितीयपदेनैव भेदत्रयनिषेधः, एकावधारणपदे तु संकोचशंकापरिहाराय" इति। तथाच भेदत्रयनिषेधान्यथानुपपत्त्यैव जगतो मिथ्यात्वसिद्धिः॥ एवं "नेह नास्ति किंचन" इत्यत्र ब्रह्मणि नानात्वदर्शननिन्दनाच्चान्यथानुपत्या जगतो मिथ्यात्वसिद्धिरिति चेन्न॥

शृणु तत्त्वग्राहिदृष्ट्या शृणु "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"। इत्यत्र प्रथम एवकारः-अन्ययोगव्यवच्छेदार्थको वैशेषिकमाध्यमिकाभ्यां तर्कितमसत्कार्य्यवादमसत्कारणवादं च व्यवच्छिनत्ति तथाच वक्ष्यति स्वयमेव श्रुतिः। "तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम्। ततोवैसदजायत कुतः खलु सोम्येवं स्यात्कथमसतः सज्जायेत। सत्त्वेव सोम्येदग्र आसीदेकमेवाद्वितीयम्"॥ (छः. ६।२।२) व्याख्यातं च पूर्वम्। तथाच "सदेव" इत्यत्रैवकारःक्रमेण माध्यमिकवैशेषिकमतप्रसिद्धमसत्कारणवादासत्कार्य्यवादरूपंमतद्वयं "तद्धैक आहुरसदेव" इत्यादिना स्वयमनूद्यनिराकरिष्यमाणं व्यवच्छिनत्ति। नच तस्य सन्मात्रम्,-इत्येव कथ नार्थ इतिवाच्यम्। प्रतिज्ञावाक्यनिगमनवाक्ययोरेकार्थत्वभंगापत्तेः। "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति प्रतिज्ञावाक्यम्।'सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इतिनिगमनवाक्यम्। निगमनवाक्यैवकारस्य "तद्धैक आहुः" इत्याद्यनूदितासत्कारणासत्कार्य्यवादव्यवच्छेदकत्वमेव। तथाहि एवकारस्यैवं स्वभावो यत्स्वप्रकरणोक्तविरुद्धानेकपक्षसंभवे स्वसमभिव्याहृतवाक्यसिद्धपक्षविरुद्धस्वप्रकरणोपपादितपक्षमेव नियमतः प्रतिक्षिपति। अत एव "ममैवेदं गृहं न द्वितीयस्य कस्यचित्, केचन वदन्ति देवदत्तस्येदं गृहमिति कथं मम नित्यनिवासभूतं देवदत्तस्य स्यान्ममैवेदं गृहं न द्वितीयस्य कस्यचित्" इति वाक्ये गृहे न देवदत्तस्वामिकत्ववत् वक्तु रनुजपुत्रादिस्वामिकत्वमपि प्रतिषिद्ध्यते,

इति। तथाच सत्त्वेव सोम्य' इतिनिगमनवाक्यस्थ एवकार:स्वसमभिव्याहृतं "सदेवेत्यादि वाक्यसिद्धसत्कारणवादसत्कार्य्यवादसिद्धान्तात् विरुद्धं तत्प्रकरणोक्तमसत्कार्य्यवादासत्कारणवादाख्यंमतद्वयमेव व्यवच्छिनत्ति, नतु 'सदेव सोम्येदम्" इति स्वशब्देनैव सदात्मकतयोक्तं जगदपि । एवंच निगमनवाक्यैकवाक्यतया प्रतिज्ञावाक्येप्येवकारोऽसत्कारणकार्य्यवाद-व्यवच्छेदक एव । एवमप्येवकारस्य स्वभावो यदग्रेऽनुपदं प्रतिपक्षत्वे-नोद्भाव्य निषेध्यंभवति। तदेव पूर्वं स्वपक्षसमभिव्याहृततयोक्तेनैव-कारेण व्यवच्छिद्यते। अत एव उक्तनिदर्शनवाक्य एव प्रथमेनाप्येकारेण न गृहे भ्रातुर्वापुत्रस्य वा स्वस्वामिकत्वं प्रतिषिद्धयते इति। तथाच 'सदेव' इत्येवकारेणासत्कारणकार्य्यवादावेव व्यवच्छिद्येते। यदिच निगमन-वाक्ये 'सत्त्वेव' इति तुशब्दघटित: पाठ: तदा तु-शब्देनासत्कारणवाद: एवकारेणासत्कार्य्यवादो व्यवच्छिद्यते। प्रतिज्ञावाक्ये तु तुशब्दाभावात् एवकारेणैव वादद्वयंव्यवच्छिद्यते। यदि तुशब्देनापि वादद्वयव्यवच्छे-दसंभवात्, एवकारस्यापि तदर्थकत्वमनर्थकमित्येवकारस्य निगमन-वाक्यस्थस्य व्यवच्छेद्यान्तरमेव मृग्यमितिविभाव्यते तदापि एवकारस्य निगमनवाक्यस्थस्यासत्कार्य्यवादासत्कारणवादान्यतरव्यवच्छेदकत्वमेव। अत्र'तद्धैक आहु' रित्यनेनासत्कार्य्यवादं केचिदवतारयन्ति केचिदसत्कारण वादमवतारयन्ति एवंच तदन्तरं निषेधकतयोक्तस्य तु शब्दस्याप्यन्यतर व्यवच्छेदकत्वमेव तथाचैवकारोन्यतरं व्यवच्छिनत्ति। एवंच इदंकार्य्यं अग्रे सृष्टे: प्रागपि सदेव सद्भूतमेव आसीत्। नतु वैशेषिणामिव कारणव्यापारात्प्रागसद्भूतमिति वा, इदंकार्य्यं अग्रे सृष्टे: प्रागपि सदेव सद्रूपकारणतादात्म्यापन्नमासीत् नतु माध्यमिकानामिव कारण-व्यापारात्प्राक् असद्भूतं शून्यभूतमिति वा एवकारान्वितसत्पदार्थ:।

एवंच प्रथमैवकारेण कार्यस्य कारणस्य च, तुशब्दपक्षेऽपि-अन्य-तरस्यैव वा सत्त्वमेव निर्धारितं नतु तयोरेकत्वमपि, संभवति च वैशे-षिकसांख्यादिवत् कार्यकारणयो: चिदचितोश्च:स्वतंत्रसत्ताद्वैतेऽपि कार्य्य-

कारणयोः चिदचिदोश्च सत्त्वमिति । तदर्थमाह एकमिति-नामरूपविभागानर्हतया तन्तूच्चारात्प्रागूर्णनाभिवत्, शब्दाभिव्यंजनात्प्राक् आकाशवत् औषध्युद्भवात्प्राक् पृथिवीवत् एकीभूतमित्यर्थः । कार्य्यं तु सर्वविधवैचित्र्यसम्पन्नमपि तत्र तथैवैकीभूतमासीत् यथोर्णनाभ्यादौ तन्त्वादि यथा वा व्यजनादिव्यापारात्प्राक् सर्वस्वाभाविकगुणसम्पन्नमपि वाय्वादि प्रज्वालनात्प्राक् पश्चाच्च निर्वाणात् वायौ वह्न्यादि । वाय्वग्नी सर्वत्र व्याप्तौ, अतएव व्यजनादिना सर्वत्राभिव्यज्यते, एवमपि व्यजनादिव्यापारात्प्राक् अएवप्याकाशभिन्नतया स्वरूपतो वा नानुभूयते तथा चिदचिदात्मकः प्रपंचः विविधवैचित्र्यविशिष्टः कारणे ब्रह्मणि सृष्टिप्राक्काले विद्यमानोऽपि, अननुभूयमानत्वान्न कारणे स्वसद्भावप्रयुक्तं भेदांशं प्रत्याययति । तदुक्तं प्रलयावस्थामधिकृत्य सुबालोपनिषदि " सः परे देवे एकीभवतीति" एकीभावः "सत्यपि भेदे भेदाप्रतीतिः, नतु सर्वथा भेदविलोपः, अभूततद्भाव एव च्युप्रत्ययविधानात्- दिवाभूता रात्रिः इत्यादि तदुदाहरणादपि तथैव निश्चयात् । तथाच सर्वथा भिन्नप्रतीत्यगोचरीभूतं निलीनसर्वस्वकार्य्यप्रपञ्चमिति 'एकम्' इत्यस्यार्थः । एवमपि ब्रह्माण्डान्तरीयगोलकान्तरीयकार्य्यजातमप्येवंभूतमेव नानैवंभूतमिति न निर्धार्य्यते इति तादृशसंभावनाव्यवच्छेदायाह 'एवेति । तथाच किंचिदपि कार्य्यजातं ततो विभक्तं नासीदित्यर्थः । अथवा एतादृशमविभक्तप्रपञ्चात्मभूतमन्यदपि सद्वस्तु स्यात् इति सजातीयद्वितीयं व्यवच्छिनत्त्येवकारः । अद्वितीयशब्दस्तु तादृशाविभक्तप्रपञ्चात्मतोऽन्यदुत्कृष्टं तस्यापि कारणभूतं तटस्थं ततोऽपकृष्टं वा स्वतंत्रं वा ततो विजातीयं स्यादितितत्सदृशविजातीयतत्त्वं व्यवच्छिनत्ति ॥ तथाच तन्तुशब्दवायुदहनादीनामूर्णनाभ्याकाशवाय्वादिवत् सर्वप्रपञ्चबीजं सजातीयविजातीयभेदद्वयशून्यंसदात्मकं ब्रह्मासीत् इति वाक्यार्थः पर्य्यवस्यति । तथाच न तेनापि जगतोमिथ्यात्वसिद्धिः स्वगतभेदनिषेधकपदाभावात् । चिदचिदात्मकप्रपञ्चस्य ब्रह्मशक्तित्वेन ब्रह्मण्येव निविष्टत्वस्योपपादितत्वाच्चेति

यदिच सदेव इत्यत्रैवकारस्य कार्य्यकारणयोरैक्यावधारणमेवार्थ इत्यत्रैवाग्रहः। तदाप्यैक्यं मदुक्तमेवावधारणीयं नतु मायावाद्युक्तं प्रपञ्चमिथ्यात्वमूलकं मायासवलब्रह्मकार्य्यत्वप्रयुक्तं वा इदानींप्रपञ्चमिथ्यात्वस्यानिर्णयेन तथा वक्तुमशक्यत्वात् तथाच शब्दमर्य्यादया कार्य्यस्य कारणरूपत्वमात्रं प्रतीयते इति तावदेव ग्राह्यं तथाच कारणस्य सत्यत्वात्तद्रूपस्य कार्य्यस्य सत्त्वमेव सिद्धयति। कारणरूपत्वंतु भेदगर्भिततादात्म्यपर्य्यायमिति "ऐतदात्म्यमिदंसर्व" मितिवक्ष्यमाणग्रन्थादवसेयम्।

यद्वा एकशब्दस्तु उत्कर्षातिशयबोधकः। एवशब्दः स्वोत्कृष्टनिषेधपरोऽद्वितीयशब्दः स्वसामाननिषेधपरः॥ तथाच क्षराक्षराभ्यामुत्कृष्टः स्वसमानाभ्यधिकशून्य इत्यर्थः। तदुक्तं श्रीकेशवभट्टकाश्मीरिचरणैः "यथाच प्राणादि"रितिसूत्रविवृत्तौ "श्रुत्यर्थस्तु सदेवेत्यत्र स्वतंत्रसत्ताश्रयः सत्पदार्थः" "आत्मा हि परमः स्वतंत्रोऽधिगुणः" इतिश्रुतेः एकपदं ब्रह्मणः क्षराक्षराभ्यामुत्कुष्टरूपंप्राधान्यंविधत्ते 'एके मुख्यान्यकेवलाः, इत्यमरोक्तेः। एकशब्दोऽयमन्यप्रधानासहायसंख्याप्रथमसमानवाची- इति–"एकोगोत्रे" इतिसूत्रे कैयटोक्तेश्च सहायान्तरशून्यत्वोत्कर्षपरो वा "ष्णान्ता षट्" इतिसूत्रे "एकशब्दोऽयं वह्वर्थः" इतिमहाभाष्यकारोक्तेश्च। तथांच क्षराक्षराभ्यामुत्कृष्टमन्यसहायहीनमेकसंख्याकमेकपदार्थः। "प्रधानक्षेत्रज्ञपतिः" "अक्षरात्परतःपरः" इतिश्रुतेः॥ "यस्मात्क्षरमतीतोऽहम्" "मत्तः परतरं नान्यत्" इतिश्रीमुखोक्तेश्च। अन्ययोगव्यवच्छेदार्थः प्रथम एव शब्दः। तदधिकोत्कृष्टव्यवच्छेदपरो द्वितीयः स्वातिशयवस्तुशून्य इत्यर्थः॥ अद्वितीयशब्दश्च समाननिषेधपरः। "न तत्समश्चाभ्यधिकश्च दृश्यते" इतिश्रुतेः। 'न त्वत्समश्चाभ्यधिकः कुतोऽन्यः" इति स्मृतेश्च। यद्वा "एकशब्दः संख्यापरः" एवाद्वितीयशब्दयोश्चेतनाचेतननिषेधपरत्वम्" उभयोरपि ब्रह्मसमस्वतंत्रसत्ताकत्वाभावात्। किंच स्वगतानन्तासंख्येयज्ञानादिधर्म्माणामपि स्वरूपेतरस्वतंत्रसत्ताभावेन तद्गतस्वतंत्रसत्तानिषेधोऽप्यविरुद्धः। "तदासीत्तदधीनमासीत्' इतिश्रुतेः।

तथाच चेतनाचेतनानां स्वगतधर्म्मणांच तदात्मकत्वाद्यविशेषेण तदपृथक् सिद्धत्वात् "ऐतदात्म्यमिदꣳ सर्वमि" तिवाक्यात् 'वासुदेवात्मकान्याहुः, इतिस्मृतेश्च । "एक एव स्वतंत्रसत्ताश्रयः सत्पदार्थः आत्मा यस्य सदात्मा तस्य भावत्वमित्यर्थः सदात्मकमितियावत्" इत्यन्तग्रन्थेन ।

एवमत्राप्युत्तरतापिन्याम्—"एकमेवाद्वितीयं ब्रह्म" इत्यत्र तथैवार्थः। तथा "तदाहुः किं तस्मै सहोवाच न सन्नासन्न सदसदिति तस्मात्तमः संजायते" इति सुबालश्रुतौ सत् स्थूलं तेजोऽवन्नात्मकं नासीत् । असत्सूक्ष्मं प्रधानादिरूपं च नासीत् सदसद्वायुरूपंच नासीत्-तर्हि किमासीदिति-चेत्?तत्तद्विलक्षणं सूक्ष्मचिदचिच्छक्तिकं ब्रह्म वासीदिति शेषः । यथा श्रुतार्थग्रहणेतु सतोऽपिप्रतिषेधात् शून्यवादप्रसक्तेः । तथाच "तमः परेदेवे एकीभवति परस्तान्न सत् नासन्नसदसत् इतिनिर्वाणानुशासनम्" इत्यग्रिमवाक्यविरोधः तत्र परमदेवस्यैव सर्वपर्य्यवसानतत्त्वताभिधानात् । नैतावता जगन्मिथ्यात्वसिद्धिः एकीभावस्याप्रतीयमानभेदांशकतादात्म्यार्थकत्वस्योक्तत्वात् च्युप्रत्ययस्य तत्रैव विधानात् दिवाभूतारात्रिरित्यादिवदित्युपपादितम् ।

इदन्त्विहाधेयम् । यथा सुबाले प्राक्सर्वसृष्टेः पश्चाच्च सर्वलयात्—"तमः परे देवे एकीभवति" इत्यनेनैकत्वसम्पत्त्यपरपर्य्यायं निगूढभेदांशं तादात्म्यं कार्य्यकारणयोरभिहितं–'न सत्" इत्यादिभिश्च त्रिभिः क्रमेण स्थूलानि तेजोन्नानि सूक्ष्माणि प्रधानादीनि स्थूलसूक्ष्मात्मको वायुश्च निषिद्धयते । तथा छान्दोग्येऽपि प्रथमेवकारेण सत्पदोक्तकारणेदंपदोक्तकार्य्ययोस्तादृशतादात्म्यमवधारयति । तथापि कार्य्यमात्रस्य तादृशतादात्म्यमवधारितमुत इदंपदोक्त्या पुरतोदृश्यमानमात्रस्य वा इति संशयनिरासाय एकैवाद्वितीयपदैः क्रमेण सूक्ष्मं प्रधानादि स्थूलंक्षित्यादि वायुश्च स्वतंत्रसत्याद्वयवच्छिद्यन्ते इत्यपि वक्तुं शक्यते इति । अत एव "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्" इत्यैतरेयके "मिषत्, इतिविशेषितं यद्येकावधारणादिपदानां जगन्मिथ्यात्वे तात्पर्य्यं

स्यान्मिषदिति न वदेत्प्रयोजनाभावाद्भ्रामकत्वापत्तेश्च ।। तस्मादपिचैका-वधारणादिपदानां नामरूपप्रतीत्यनर्हनिरुक्तैकत्वसम्पत्तावेव तात्पर्य्यमव-सेयमिति ।। छान्दोग्यश्रुतिव्याख्यानेनैव अन्येऽपि कारणवाक्यस्था एका-वधारणवाचकशब्दा व्याख्याता इति पृथक्क तन्यते इति ।।

इदन्त्विहावधेयम् । "एकमेवाद्वितीयम्" इत्यादि—वाक्यं स्वशब्द-शक्त्या जगन्मिथ्यात्वंबोधयति इति जगन्मिथ्यात्ववादिभिरपि नोच्यते। तत्र जगन्मिथ्यात्ववाचकपदाभावात् अपि तु तद्वाक्यघटकैकाद्वितीया-दिपदानां स्वगतादिभेदत्रयनिषेधपरत्वे निश्चिते तस्य जगन्मिथ्यात्वमन्तरा-ऽनुपपत्तौ श्रुतार्थापत्त्या जगन्मिथ्यात्वं कल्प्यते। यथा "पीनोऽयं देवदत्तो दिवा न भुंक्ते" इत्यादौ पीनत्वान्यथानुपपत्त्या रात्रिभोजनं कल्प्यते। तथाच एकादिपदानां जगन्मिथ्यात्ववाद्युक्त-प्रकारकस्वगतादिभेदत्रय-निषेधपरत्वनिर्णय एव जगन्मिथ्यात्वकल्पनाबीजम्। नच तादृशनिर्णयः निरुक्तदिशा प्रकृतैकादिपदानामर्थान्तरसंभवेपि संभाव्यते इति न नि-र्विचिकित्सश्रुतार्थापत्तिसंभवः, येन जगन्मिथ्यात्वं निश्चितं भवेत्। किंच श्रुतार्थापत्तिः श्रुतितो दुर्बलैव श्रुत्युपजीवित्वात्। तथाच "यदिदं किंच तत्सत्यमित्याचक्षते" इत्यादिपूर्वोदाहृतश्रुतिभिर्जगतः सत्यत्वब्रह्मात्म-कत्वेच निश्चिते श्रुतार्थापत्तिः सुतरामकिंचित्करैवेति। एवमेव "नेह नाना-ऽस्ति किंचन" इत्यादावपि बोध्यम्। तत्रापि नानात्वनिषेधस्य कथंचिद-प्यन्यथोपपत्तौ न जगन्मिथ्यात्वप्रसंगावसरः। तथाहि "मनसैवानुद्रष्टव्यं नेह ना-नास्ति किंचन, इत्यादौ इहपदोपस्थापिते प्रक्रान्ते कारणे ब्रह्मणि नानात्वं प्रतिषिद्ध्यते। नच तत्र नानात्वाप्रसक्तेः निषेधप्रयोजनाभाव इति वा-च्यम्। "एको वै नारायण आसीत्।। "एको रुद्रो न द्वितीयाय तस्थुः" "ब्रह्मा देवानां प्रभवश्चोद्भवश्च" सदेव सोम्येदमग्रआसीत्" "असद्वाइद-मग्रआसीत्" इत्यादिवाचकभेदाद्वाच्यस्य कारणस्य भेदशंकासौलभ्यात्। तथाच तादृशशंकासत्त्वे मनसश्चांचल्यान्न मनसा ब्रह्मदर्शनं स्यादिति का-रणब्रह्मनानात्वभ्रमो निरस्यते। यद्वा 'नि ~ कलम्' इत्यादिश्रुतिवत् स्वरूपे

ऽवयवावयविकृतभेदो निरस्यते-अवयवावयविकृतभेदो ब्रह्मस्वरूपे कुतः प्रसक्त इति न वाच्यम्। "तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः-प्रमोद उत्तरः पक्ष आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा" इतितैत्तरीयश्रुतेरेव तत्प्रसक्तिसंभवात् ।। अत एव-एवं सूत्रितंश्रीबादरायणाचार्यैः—"प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" ब्र. इ. ३ । १२ । इति । किंच सच्चिदानन्दादिकृतोऽपि नानात्वशंकासंभवः इतिसर्वंहृदिकृत्याह-"नेह नानास्ति किंचन"-इति "एकधैवानुद्रष्टव्यम्" इत्यादिचेति। उपबृंहितंच नारदपञ्चरात्रे लक्ष्मीतन्त्रे-"निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः। आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा"-इति ।। वेदान्तरत्नमंजूषायां श्रीपुरुषोत्तमाचार्य्यैरपि-' सर्वगन्धः सर्वरसः" "आप्रणखात्सर्व एव सुवर्णः" इत्यादि-श्रुतिभ्यः सर्वदर्शनस्पर्शनगमनादिशक्तिमत्त्वान्न तत्रेन्द्रियादिविभागकल्पनापेक्षा गौरवात् । श्रुतिः "अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति यस्मादनीन्दियोपि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्ते" इत्यादिना तदेवोक्तम्। नैतावता तस्य "आत्मैवेदमग्र आसीत्पुरुषविधः"-"अन्वयं पुरुषविध," इतिश्रुत्युक्तपुरुषाकारत्वबाधः ।। अपितु प्राकृतपुरुषाकारत्वस्यावयवावयविविभागसापेक्षत्वस्यैव बाधः ।। नचावयवावयविविभागमन्तरा पुरुषाकारत्वं संभवत्येव नहीति वाच्यम् । प्राकृतविग्रहस्यावयवसंयोगजन्यतया तत्र तत्सत्वस्यावश्यंभावेपि अप्राकृतभगवत्स्वरूपस्य तु पुरुषाकारत्वेनैवानादिसिद्धत्वस्य वक्ष्यमाणश्रुतिसिद्धत्वात् तत्र तदसंभवात् । अतएवोक्तं पञ्चरात्रे ब्रह्मसंहितायांब्रह्मस्तवे— "अंगानि यस्य सकलेन्द्रियवृत्तिमन्ति पश्यन्ति पान्ति कलयन्ति चिरं जगन्ति । आनन्दचिन्मयसमुज्वलविग्रहस्य गोविन्दमादिपुरुषं तमहं भजामि" इति । इदं यथा तथाऽनुपपदं निरूपयिष्ये ।।८।।—यत्तु-"सहाय गीत्तांचक्रे यन्मदन्यन्नास्ति कस्मानुविभेमीति ततएवास्यभयंवीयायकस्माद्भ्येष्यद्वितीयाद्वैभयंभवति" इतिवृहदारण्यके पुरुषविधब्राह्मणे द्वितीय-

निषेधेन भयाभावबोधनं प्रपंचमिथ्यात्वे पर्य्यवस्यति । तदपि तुच्छम् । 'आत्मैवेदमग्रआसीत् पुरुषविधः' इत्युपक्रम एव इदम्पदेन निखिलचिज्ज-ड़ात्मकप्रपञ्चस्य तदानीं परमात्मना सह छान्दोग्योक्तदिशा एकीभाव-बोधनेन सत्यत्वकथनात् । तथाच निखिलस्यैव चिदचिदात्मकप्रपञ्चस्य तच्छक्तित्वात्तदधीनस्थितिप्रवृत्तिकत्वेन तदात्मकत्वेन स्वात्मकोटिनिविष्टत्वे नान्यत्वाभावात् । अत एव तस्य भयजनकत्वाभावादन्यस्य च स्वतन्त्र सत्ताकस्य द्वितीयस्याभावात्भयाभाव इत्यर्थस्तत्र बोध्यः ॥ नचेदं न परमात्म-प्रकरणमपि तु कर्म्मज्ञानसमुच्चयलब्धविग्रहहिरण्यगर्भाख्यजीवप्रकरणं त-थाच त्वदुक्तदिशा तस्य सर्वात्मत्वाभावान्न तादृशद्वितीयाभावकृतभयाभाव ऽपितु ब्रह्मात्मैक्यज्ञानजन्यजगन्मिथ्यात्वानुभवप्रयुक्त एवेति वाच्यम् । अस्य प्रकरणस्य "सदेव सोम्येदमग्र आसीत्' "आत्मा वा इदमेक एवाग्र आसीत्" "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः" इत्यादि-श्रुतिसमानयोगक्षेमत्वेन परमात्मपरत्वात् ॥ नच पुरुषविध इति पुरुषा-कारत्वविशेषभियाफलायनंयुक्तं परमात्मनो मूर्तरूपस्य पुरुषाकारत्वस्यो-पपादयिष्यमाणत्वात् ॥ सर्वतंत्रसिद्धत्वाच्च, आत्मपदप्रयोगोऽपि परमात्म-न्येव मुख्यः । प्रजापतौ क्वाप्यात्मपदस्योपनिषदि सूत्रे च प्रयोगादर्शनात् ॥ अग्रे "तस्मादयमाकाशः स्त्रिया पूर्य्यते" इतिवक्ष्यति । तत्राप्याकाशशब्द-प्रयोगः प्रजापतौ न घटते । भूताकाशे परमात्मनि चैवाकाशशब्दस्य लोकतः "आकाशस्तल्लिंगात्' इतिसूत्रतश्च सिद्धेः ॥ "तदेतत्प्रेयः पुत्रा प्रेयो वित्तात्प्रेयोन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा" "आत्मानमेव प्रिय-मुपासीत" इत्यग्रे तस्यात्मनः सर्वाधिकप्रेमास्पदत्वकथनं प्रियत्वेनात्मत्वेन चोपासनविधानमपि च तदैव संगच्छेते परमात्मन एव निरतिशयप्रियत्वात्, निरतिशयप्रेमाप्रदत्वेनात्मत्वेन चोपास्यत्वाच्च । नचात्रात्मपदं न पुरुषविधा-त्मपरमपितु तद्व्यतिरिक्तपरमात्मपरमेवेतिशंक्यम्, अत्रात्मपदस्य निरुक्तपुरु षविधात्मपरत्वाभावे, आकस्मिकत्वापत्तेः पूर्वं कचिदप्यात्मत्त्वस्य तदतिरि-क्तस्थलेष्वनिरूपणेन "आत्मेत्येवोपासीत" इत्यादि न घटितितदुपास-

सनस्यैव विधानस्याप्रवर्तकत्वापत्तेश्च ॥ तथा मध्ये "स नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत्-सहैतावानास यथा स्त्रीपुमांसौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधा पातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यः तस्मादयमाकाशः स्त्रिया पूर्य्यत एव ताँ समभवत् । ततो मनुष्या अजायन्त," इतिपूर्वं निरतिशयाश्लिष्टयुगलात्मकत्वाद्वाह्यरमणाभावः।ततोवाह्यरमणेच्छया "स हैतावानास यथा स्त्रीपुमांसौ" इत्युक्तलक्षणानादिसिद्धयुगलात्मकनिजरूपस्य स्फुटयुगलात्मतया प्रकटीकरणम्-उभययोर्मिलितस्यैव पूर्णात्मत्वं च सर्वं परमात्मनः श्रीपुरुषोत्तमस्य "रसो वै स" इतिश्रुत्युक्तरसरूपतया समुपपद्यत एवेति न कश्चिद्विरोधः। यथा चैतत्प्रकरणस्य श्रीराधाकृष्णयुगलपरमात्मपरतया पुराणपञ्चरात्रादौ व्याख्यातं तथा सर्वं सोपस्करमिदं प्रकरणं युग्मतत्वसमीक्षायामुत्तरार्धे मया व्याख्यातमिति तत्रैव द्रष्टव्यम् । तस्मान्नैतावतापि जगन्मिथ्यात्वसिद्धिरिति-॥-॥ "यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इतिवृहदारण्यके ज्योतिर्ब्राह्मणश्रुतिस्तु सुषुप्तिप्रकरणीया, सुषुप्तिदशायां करणलयात् करणजन्यं बाह्यपदार्थज्ञानं नास्ति इत्येव वक्ति । तथाच स्वयं ज्योतिःस्वभावात्-विभक्तान्यकरणग्रामो नास्ति इतिस्वयंज्योतिरूपोऽपि जीवः सुषुप्तिदशायामन्यन्न पश्यति नैतावता तस्य स्वयंज्योतिष्ट्वबाध इति तदर्थः ॥ "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति इत्यादिना "यत्रत्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्यनेनापि ब्रह्मसायुज्यप्राप्तस्य जीवस्य विध्वस्तसमस्तस्वयंज्योतिष्ट्वसंकोचकारणकर्मवन्धनस्यानवच्छिन्नस्वयंज्योतिष्ट्वाविर्भावेन-"नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् नहि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वा" दित्यादिज्योतिर्ब्राह्मणोक्तानां स्वरूपात्मिकानां दर्शनघ्राणनरसनादिशक्तीनामाविर्भावात्, निजस्वरूपमहिम्नैव तदानीं सर्वं ज्ञातंभवति। तदानीं सर्वस्यैव ब्रह्मात्मकत्वेनानुभवात् स्वस्य च ब्रह्मसायुज्यप्राप्तत्वा-

दनुभूयमानब्रह्मात्मकत्वेनात्मस्वरूपमहिम्नैव स्वरूपात्मकत्वेनैव सर्वानुभव:, इत्येव प्रतिपाद्यते न जगत् प्रतिषिध्यते। अन्यथा-"येनेदं सर्वं विजनाति" इत्यत्र सर्वं न विशेषयेत्॥ एतस्य मुक्त्यवस्थापरत्वं तु-"प्रज्ञानघन एवैतेभ्यो भूतेभ्य: समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्य:" इति पूर्वोक्तवाक्यादेवावसीयते। अत्रैवानुविनाशकथनात्संज्ञाभावकथनाच्च स्वरूपतोधर्म्मतश्च 'जीवस्वरूपविलोपशङ्का जाता।' इति मैत्रेयी पृच्छति-"सा होवाच मैत्रेय्यत्रैव मा भगवान् मोहान्तमापीपिवन् न वा अहमिमं विजानामीति" तच्छङ्कामपनुदति याज्ञवल्क्य: "स होवाच न वा अरेऽहं मोहं प्रवीम्यविनाशी वारेयमात्माऽनुच्छित्तिधर्म्मा" इति एवंचात्र आत्मान्तपदेन स्वरूपतो धर्मान्तपदेन धर्मतश्चात्मनो नित्यत्वं निगमितं तत्र "अनुच्छित्तिधर्म्मा" इत्यनेन-'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्" इत्यादिना ज्योतिर्ब्राह्मणे दर्शनघ्राणनरसनस्पर्शनादिस्वरूपशक्तीनां यदविनाशित्वमुक्तं तदेवात्र मुक्तिदशायामपि निगमितन्तदुपपादकश्चाग्रिमग्रन्थ:। तथाच, "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योति रुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तम: पुरुष: स तत्र पर्येति जक्षन् क्रीडन्रममाण: स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रयोज्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्त:॥ अथ यत्रैतदाकाशमनुविषण्णं चक्षु: स चाक्षुष: पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रं॥ अथ यो वेदेदंमन्वानीति स आत्मा मनोऽस्यदैवं चक्षु: स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन् रमते" इतिछान्दोग्येऽन्तिमाध्यायान्तिमश्रुत्या यदुक्तं तदेवात्रापि प्रकारान्तरेणोक्तमिति न जगन्मिथ्यात्वसिद्धिरिति॥

वस्तुतस्तु "न प्रेत्य संज्ञास्तीति" इति प्रकरणं मुक्तौ स्वरूपाविर्भावप्राक्कालीनसम्पत्तिपरम्। नतु सम्पत्त्यनन्तरमाविर्भूतमुक्त-

स्वरूपपरम् । तथाच चतुर्थस्य चतुर्थे ब्रह्मसूत्रम् "स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतंहि" इति । अत्र कौस्तुभभाष्यं द्रष्टव्यम् । विस्तृतं विवेचितं मया भगवत्त्वसुधानिधौ उपोद्घाततरङ्ग इति तत्रैव द्रष्टव्यम् ।

तथाच–"वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यत्र यथा घटवृक्षादिविविधकार्य्यशक्तिसम्पन्ना मृत्तिका इत्येव 'सत्यमिति । स्वतन्त्रसद्भवतीति सत्यमिति व्युत्पत्त्या सत्तावति कार्य्ये साधुः तादृशसर्वकार्य्यशक्तिविशिष्टत्वात् । तथा सर्वकार्य्यबीजचिदचिदात्मकशक्तिविशिष्टं ब्रह्मैव सत्यं स्वतन्त्रसत्ताश्रयः सत्तावति कार्य्यजनने तादृशशक्तिविशिष्टत्वात्साधुः ।। विकारो घटादि दार्ष्टान्तिके व्योमादि, नामधेयं च वाचारंभणं वाचा एवारभ्यते कारणपार्थक्येन स्वतंत्रसत्त्वेन चेति । वस्तुतस्तु कारणापृथक्सिद्धत्वात्कारणात्मकमेव तत् नतु स्वतंत्र सत्यमित्यर्थो बोध्यः इति न तत्कृतकश्चिद्विप्रतिषेधः । इति । एतेनैव "कस्मिन्नु भगवो विज्ञाते सर्वं विज्ञातं भवति" इत्यादिमुण्डकोक्ताः "आत्मनि खल्वरे द्रष्टे श्रुतेमते विज्ञात इदँ्सर्वं विज्ञातं भवति" इतिवृहदारण्यकोक्ताचसर्व विज्ञानप्रतिज्ञाः समाहिताः । "प्रजायंते तत्र चैवापियन्ति "यथा सतःपुरुषात्केशलोमानि जायन्ते, पुरुष एवेदंसर्वम्" इत्यादिना मुण्डके–"अयंच लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानिसर्वाणि श्वसितानि "ब्रह्म तं परादादन्यत्रात्मनो ब्रह्म वेद" इत्यादिना "इदं सर्वं यदयमात्मा" इत्यन्तेन वृहदारण्यके च सर्वस्यैव प्रपञ्चस्य ऊर्णनाभितः तन्त्वादिवत् पुरुषादितः श्वासादिवच्चोद्गमकथनात् सर्वस्य मिथ्यात्वमनुक्त्वैवात्मरूपत्वकथनाच्च ब्रह्मात्मकत्वेनैव ब्रह्मज्ञानवेद्यत्व निरूपणादुक्तार्थ एव पर्य्यवसानादित्युरमे । भेदाभेदस्वरूपविचारविस्तरस्तु मद्विरचितद्वैताद्वैतविवेके द्रष्टव्यः इति संक्षेपेण प्रपञ्चविचारः ।

इति श्रीमैथिलझोपाख्यभगीरथशर्मविवेचितायां श्रीगोपालतापिन्युपनिषद्व्याख्यायां वेदान्ततत्त्वसमीक्षायां 'गोपीजनवल्लभविज्ञानेनाखिलंविविज्ञातं भवति'' इत्यस्योपपादनम् ।

## मू० तन्माया चेति सकलं परम्ब्रह्मैव तत्।

"तन्माया चेति" ॥ "का स्वाहेति" पूर्वजिज्ञासायामाह तन्माया चेति। माया चात्र नाविद्याद्यपरपर्य्याया व्यामोहिका शक्तिरित्येतावन्मात्रम्। तस्या मुक्तामुक्ताज्ञानिसुज्ञानिजडचेतननिखिलविश्वसंसरणहेतुत्वोभावात्। नित्यमुक्तानाङ्कालादीनांचाविद्यापरतंत्रत्वाभावात्। नच नित्यमुक्ताख्यं ब्रह्मातिरिक्तं वस्त्वेव नास्ति कालादीनांचाविद्यात्मकत्वेनाविद्यातंत्रत्वमस्त्येवेतिवाच्यम्। यथा न कालादिपदार्थानामविद्यात्मकत्वमपि तु परिणामादिसर्वविक्रियानर्हनित्याचेतनभगवच्छक्तयन्तररूपत्वमेव तस्यैव च मायाऽविद्यादिपदार्थपरिणामकत्वं च तदुपपादितं प्राक्सर्वविज्ञाननिरूपणे इति। वेदान्तमंजूषादिग्रन्थतश्च नित्यमुक्तानामपि पृथक्सत्त्वंज्ञातव्यमिति। तत्त्वदीपिकाकृद्भिराप्येवमेवोक्तम्—"तस्य माया संकल्परूपा शक्तिः स्वाहाशब्देनोक्ता "स्वाहयेदं विश्वं संसरतीति" "पराऽस्य शक्तिर्विविधैव श्रूयते" इतिश्रुतेः। नच मायाशब्दस्य प्रधाने शक्तत्वात्प्रसिद्धत्वाच्च तदेव ग्राह्यम् इतिवाच्यम्—तस्य नित्यमुक्तादिषु प्रधाने च प्रवर्तकत्वाभावात्' इत्यन्तग्रन्थेन। तथा च मीयते परिच्छिद्यते स्वात्मसात्क्रियते इदमित्थतया यथाभिलाषं नियोज्यते यया सा माया, इति व्युत्पत्तेः सत्यसंकल्पादिपदवाच्या इच्छाशक्तिरेव माया। "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इतिश्रुतौ बलशब्देनापि प्राय इयमेव गीयते। भागवतादौ च योगमायादिशब्देनेति। अस्या एवांशभूता अन्या वा माया इतिध्येयम्। भगवदिच्छायाश्च सर्ववशित्वं सर्ववेदान्तिविप्रतिपत्तिरहितमिति नेह तन्यते इति॥ इति स्वाहाशब्दार्थविचारः।

"सकलं परं ब्रह्मैव तत्" इति॥ इतिशब्दः प्रकारे। तथा च निरुक्तलक्षणप्रवृत्तिनिमित्तभेदरूपप्रकारभेदात्—निरुक्तलक्षणाभिप्रायविशेषसूचनार्थत्वाच्च कृष्णादिपदचतुष्टयप्रतिपाद्यं सकलं वस्तुतत्त्वं परं निरतिशयोत्कृष्टं तत् "कृषिभूवाचकः शब्दः" "सच्चिदानन्दरूपाय

कृष्णाये" त्यादिमंत्रवर्णप्रतिपादितं कृष्णाख्यमखण्डमेव परंब्रह्म, नतु शब्दाभेदाद्वस्तुभेद इत्यक्षरार्थः॥ नन्वत्र 'सकलं परं ब्रह्मैव तत्' इत्यस्य तत् समग्रवेदान्तप्रसिद्धं परं ब्रह्मैव कार्य्यविशेषपुरस्कारेण कृष्णादि पदवाच्यतया व्यपदिश्यते, इत्यर्थप्रतीतेः कार्य्यविशेषबोधकत्वेन कृष्णादि पदवाच्यतया तस्य परब्रह्मणोरूपान्तरत्वमेवोक्तं भवति नतु मूलरूपत्वं समग्रब्रह्मधर्माणां कृष्णादिपदवाच्यत्वेनानुपसंहारात्परब्रह्मपदवाच्यत्वेनैवोपसंहाराच्चेतिचेन्न। समग्रतापिनीसूत्ररूपे "सच्चिदानन्दरूपाय" इत्युपक्रममंत्रवाक्ये कृष्णपदवाच्यत्वेनैव पूर्वोक्तदिशा समग्रवेदान्तप्रतिपादितसमग्रब्रह्मधर्मोपसंहारात्। तत्र कृष्णपदार्थस्यैव मुख्यविशेष्यत्वात्। तस्मात्–अग्रिमग्रन्थस्य तदुक्तार्थस्यैवोपपादकत्वेन तदानुगुण्येनैव व्याख्यानस्योचितत्वाच्च। अतएवोपसंहारेऽपि "योऽसौब्रह्म परं ब्रह्म गोपाल ओं भूर्भुवः सुवः तस्मै वै नमोनमः" इत्यत्रापि गोपालपदवाच्यत्वेनैव स्वप्रधानत्वं, ब्रह्मपदवाच्यत्वेन तत्र गुणीभूतत्वेनैव प्रतीतेः "तुरीयातीतो गोपाल" इत्यत्रापि गोपालत्वेनैव तुर्य्यातीतत्वमुपदिष्टं नतु ब्रह्मत्वेन। "एकोदेवः" इत्यत्रापि देवत्वेनैव। अत्रापि "तस्मात्कृष्ण एव परमोदेव, इत्यत्र कृष्णत्वेव स्वप्रधानत्वम्। तस्मात्तैत्तरीये नारायणानुवाके–'नारायणः परंब्रह्म तत्त्वं नारायणः पर" इत्यादौ नारायणपदवाच्यत्वेनेवात्र कृष्णादिपदवाच्यत्वेनैव स्वप्रधानत्वं विवक्षितं नान्यप्रधानत्वेनेतिबोध्यम्। तथाच तत्पदमत्र प्रकृतमंत्रे कृष्णपदवाच्यत्वेनैव समग्रधर्मोपपन्नत्वेन निरूपितपरमतत्त्वस्मारकम्, नतु पदान्तरवाच्यत्वेन, तथासति प्रकृतहानाप्रकृताभ्यागमप्रसंगात्। एवंचात्र तत्पदमेव मुख्यविशेष्यसमर्पकं परब्रह्मपदं तु परब्रह्मपदवाच्यत्वेन परमतत्त्वप्रतिपादकानां वेदान्तवाक्यान्तराणां समग्राणां प्रकृततत्पदार्थे श्रीकृष्णे समन्वयाय परब्रह्मपदस्यानुपचारतस्तदेकनिष्ठत्वबोधनाय चेति बोध्यम्।

यद्वा "परब्रह्मैव तत्" इत्यंशेन "कृषिभूर्वाचकः शब्दोणश्च निर्वृतिवाचकः। तयोरैक्यं परंब्रह्म कृष्ण इत्यभिधीयते॥" इति प्रथम-

मन्त्रोद्दिष्टं व्युत्पत्त्या कृष्णपरब्रह्मशब्दयोःसमानवाच्यतया ग्राहितं "सच्चिदानन्दरूपाय कृष्णाय" इति द्वितीयमन्त्रेण स्वरूपलक्षणकार्य्यलक्षणाभ्यां व्याख्यातमेव स्वरूपं परामृश्यते। तथाच प्रथममन्त्रेणोद्दिष्टं द्वितीयमन्त्रेण लक्षितं यत्कृष्णाख्यं परंब्रह्म तदेव निरुक्तकार्य्यभेदसूचनाय गोविन्दादि शब्दैरप्युच्यते। परब्रह्मशब्दप्रयोगस्तु प्रकृते सर्वशाखासमन्वयाय नतु कृष्णस्य ब्रह्मांशत्वसूचनाय, तथा सति-उपक्रमोपसंहारादिविघातापत्तिरित्युक्तमेवेत्यपि ध्येयम्। तथाचोपनिषदन्तरेषु बहुषु परंब्रह्मैव परमदेवादिशब्देन मृत्युनिवारकत्वादिना चोपदिश्यते, इह तु कृष्ण इति कथं सर्वसमन्वय इतिभ्रमनिरासायैव परब्रह्मपदम्। तथा सति एष एव कृष्णो विभिन्नोपनिषत्सु परब्रह्मादिशब्देनोपदिश्यते तदुक्तं तैत्तरीयारण्यके नारायणोपनिषदि प्रथमानुवाक एव 'यमन्तःसमुद्रे कवयोऽवयन्ति" इति परव्योमपयोधिशायिश्रीपुरुषोत्तमस्वरूपमधिकृत्य—"तदेवर्तं तदु सत्यमाहुः तदेव ब्रह्म परमं कवीनाम्" इति। 'गीतायां च "वेदैश्चशेषैरहमेव वेद्योवेदान्तकृद् वेदविदेव चाहम्" इत्यादि। स्कान्दे वैष्णवखण्डे वैशाखमाहात्म्ये। "स विष्णुर्ब्रह्मसंज्ञोऽसौ कवीनां सम्मतो विभुः। साक्षाद्ब्रह्मेति तं प्राहुः पश्चाद्ब्रह्मादिकानपि॥ ब्रह्मशब्दं सोपपदं ब्रह्मादिषु विदुर्बुधाः। नान्येषां ब्रह्मता काऽपि तच्छक्त्येकांशभागिनाम्॥ तदेतच्छास्त्रगम्यंहि जन्माद्यस्य महाविभोः"। इत्यादिना भाविवाल्मीकिव्याधं प्रति शंखेन महर्षिणा तथैवतैत्तरीयगतं ब्रह्मपदमनौपचारिकतया भगवदेकनिष्ठत्वेनैव निर्धारितमेवमन्यत्रापि द्रष्टव्यमिति।

तथाच शब्दमात्रभेदो वस्तुतत्वंत्वेकमेव। तदुक्तं ब्रह्मसंहितायां सूत्राध्यायोपक्रमे ब्रह्मणा "ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः। अनादिरादिर्गोविन्दः सर्वकारणकारणमिति" अत एव गीतायामपि पुरुषोत्तमादिपदार्थतयैव स्वप्रधानत्वं नतु ब्रह्मपदार्थतया। अत एव च "ब्रह्मणोहि प्रतिष्ठाहमि'ति चतुर्द्दशाध्याये पुरुषोत्तमत्वेन स्वोपस्थापकास्मच्छब्दवाच्यतयैव स्वप्रधानत्वं स्पष्टमेवोद्घोषितम्। अक्षरब्रह्मसाधारणब्रह्म-

पदार्थतया तु स्वशेषत्वमेवाभिव्यञ्जितम्। यच्च तत्र ब्रह्मपदं वेदवाचकं कार्य्य-ब्रह्म हिरण्यगर्भादिवाचकं वा तन्न "ब्रह्मभूयाय कल्पते"। इत्यत्राक्षरब्रह्मण एव ब्रह्मपदवाच्यत्वस्य युक्तत्वात्। अत्र तत्परित्यागे प्रकृतहानाप्रकृताभ्या-गमप्रसंगाच्च। अक्षरब्रह्मणः पुरुषोत्तमादवरत्वं तु "यस्मात्क्षरमतीतोहम-क्षरादपि चोत्तमः" इति पञ्चदशाध्याये स्पष्टमुक्तम्। नच तत्रापि अक्षरपदं मायाप्रधानादिवाचकमिति वाच्यम्। तस्य क्षरणस्वभावत्वेनाक्षरत्वासंभवात् "कुटस्थोऽक्षर उच्यते"। इतिवाक्ये नापेक्षिकाक्षरत्वस्य वारणात्-आपेक्षि-काक्षरत्वस्याक्षरपदेनैव लाभात्। पुनर्व्याख्यानस्य प्रयोजनहीनत्वापत्तेः मायायाः कूटस्थत्वस्यासंभवाच्च। किंच भारते मोक्षधर्मे॥ "यच्च मूर्तिमयं किंचित्सर्वं चैतन्निदर्शनं, जले भुवि तथाऽऽकाशे नान्यथेति विनिश्चयः। कृ-त्स्नमेतावतस्तात क्षरते व्यक्तसंज्ञितम्। अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः। अक्षरं ध्रुवमेवोक्तं पूर्णब्रह्म सनातनम्। अनादिमध्यनिधनं निर्द्वन्द्वं कर्तृ शाश्वतम्। कूटस्थं चैव नित्यंच यद्वदन्ति मनीषिणः। यतः-सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः। इति स्वयंभगवता वेदव्यासेनैव "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इतिगीतावाक्यस्य व्याख्या-तत्वात्—। अपिच गीतायामपि "अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गतिम्। यम्प्राप्य न निवर्तन्ते तद्धाम परमं मम"। "ये त्वक्षरमनिर्देश्यमव्यक्तं पर्य्युपासते"-इत्यादिना मायातीताक्षरब्रह्मपदार्थस्यैवाक्षरपदार्थतया निरूप-णात् तस्यैवात्रापि ग्रहणस्य युक्तत्वात् तद्विपरीतस्याप्रकृतकल्पनस्यायुक्त-त्वाच्चैतिबोध्यम्। तस्मात्तापिन्यामपि श्रीकृष्णाख्याक्षरातीतपुरुषपदार्थ-तयैव स्वप्रधानत्वमितिध्येयम्।-। पुरुषोत्तमाक्षरयोरभेदस्तु सूर्य्यतत्प्रकाश-न्यायेन प्रकाशाश्रयवद्वा तेजस्त्वादितिसूत्रानुसारेण बोध्यम्। तदुक्तं हयशीर्षपञ्चरात्रे "आनन्दो द्विविधः प्रोक्तो मूर्तामूर्तप्रभेदतः। अमूर्तस्या-श्रयो मूर्तोमूर्तानन्दोऽच्युतो मतः। अमूर्तः परमात्मा च ज्ञानरूपश्च निर्गुणः स्वस्वरूपश्च कूटस्थो ब्रह्म चेति त्रयं मतम्। अमूर्तमूर्तयोर्भेदो नास्ति तत्त्वविचारतः भेदस्तु कल्पितो वेदैर्मणितत्तेजसोरिवेतिध्येयम्॥-॥

एतावता ग्रन्थेन श्रीकृष्णस्य स्वभावत एवापास्तसमस्तदोषत्व नित्यनिरतिशयानन्तकल्याणगुणशक्तित्वनित्यनिरतिशयानन्तलीलामयत्वनित्यनिरतिशयानन्तसच्चिदानन्दरसमयफलप्रदत्वनित्यनिरतिशयानन्त सच्चिदानन्दस्वरूपत्वादिकमत एव च स्वभावत एव नित्यनिरतिशयसच्चिदानन्दात्मकधामभूषणपरिकरपरिच्छदपार्षदाद्युपपन्नत्वम्, सर्वतोभावेन स्वसमानाभ्यधिकशून्यत्वं। (१) प्रथमप्रश्नप्रतिवचनाभ्याम् परमदेवत्वनिरूपणांशेन। (२) द्वितीयप्रश्नप्रतिवचनाभ्याम् सर्वभूतवित्रासहेतुमृत्युभयहेतुत्वकथनमुखेन सर्ववशित्वादिकं परममुक्तिप्रापकत्वंचोक्तम्। (३) तृतीयप्रश्नप्रतिवचनाभ्याम् निखिलजगदुपादनत्वसर्वविज्ञानहेतुभूताखण्डैकविज्ञानविषयत्वतादृशसर्वशक्तिसमुपपन्नत्वादिकं च निरूपयता (४) चतुर्थप्रश्नप्रतिवचनाभ्याम् भगवदिच्छाशक्तेः सर्वतः प्रबलत्वंनिरूप्य सर्वसाधननिरपेक्षप्रपत्त्येकलभ्यत्वसर्वेश्वरत्वादिकं च सूचितम्। एवंच तत्तद्रूपेण नामभेदेन च परमतत्त्वनिरूपकाणां वेदान्तवाक्यानां तदेकनिष्ठत्वावधारणेन सर्वमेव वैमत्यं निरस्तमिति न किमपि जिज्ञास्यं निरूपणीयं चावशिष्यते।

तथापि यावत्सोपपन्नं तन्न निरूप्यते न तावत् सामान्यप्रश्नप्रतिवचनाभ्यां निरूपितमपि वस्तुतत्त्वं सुदृढं परीक्षकबुद्धिगम्यं च भवितुमर्हति इति तदेव सोपपन्नं निरूपयितुमवशिष्ट उत्तरतापिन्यन्तो ग्रन्थसंदर्भः। अत एव तदन्त एव 'एको देवः सर्वभूतेषु गूढः" इतिमंत्रेण परमोपसंहारः। पूर्वतापिन्यन्ते "तस्मात्कृष्ण एव परमो देवः" इति तु सूक्ष्मरूपेण सोपपन्नत्वनिरूपणस्यैवोपसंहारादवान्तरोपसंहार एव नतु परमोपसंहारः। तस्यापि परमोपसंहारत्वे पूर्वोत्तरतापिन्योः स्वतन्त्रोपनिषद्द्वयत्वापत्त्या तयोः समुदायस्यैकोपनिषत्त्वाभावापत्या च एकस्यैव दलद्वयत्वसूचकपूर्वोत्तरत्वकथनं व्यर्थं स्यात्। तस्मादुत्तरतापिन्यन्त एव परमोपसंहार इत्यपि विभावनीयम्॥ एवंच सामान्यतो निरूपितमपि परमदेवत्वादिकं विशेषतो विवेचनीयम्। तत्र निरुक्तलक्षणपरमदेवत्वं

मृत्युनिवारकत्वं च निरूपयितुं परमदेवत्वाविनाभूतेष्वनेकेषु निरुक्तलक्षणधर्मेषु निरूपणीयेषु निखिलजिज्ञासानिदानभूताभ्यां परमफलब्रह्मत्वमृत्युनिवारकत्वाभ्यामेव धर्माभ्यां निखिलं निरूपयितुं प्रक्रमते—

मू० "योध्यायति रसयति भजति सोऽमृतो भवति"

इति। तथाच "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इत्यादिश्रुत्युक्तदिशा निसर्गकरुणेन भगवता वृतः, अत एव "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः। सात्त्विकः स तु विज्ञेयो भवेन्मोक्षाय निश्चितः॥ अत्रापि स विजानाति पुरुषं ब्रह्मवित्तमम्। नारायणपरो मोक्षस्ततो वै सात्विक स्मृतः॥ एवमात्मेच्छया राजन् प्रतिबुद्धो न जायते।" इतिभारते नारायणीयोक्तदिशा जन्मकाले भगवता वीक्षितः, अतएवेहामुत्रोपाधिनिरस्तः 'मुमुक्षुर्वै शरणं व्रजेत्" इतिवक्ष्यमाणश्रुत्युक्तदिशा तदेकमात्रशरणः केवलं निसर्गप्रेम्णैव नतु साधनादिबुद्धया 'ध्यायति' वक्ष्यमाणस्वरूपं पूर्वोक्तनिखिलधर्मोपपन्नमखण्डगङ्गाप्रवाहवन्निरन्तर स्मरति,रसयति, वक्ष्यमाणलक्षणसर्वोपनिषत्सारभूतपंचपदीमन्त्रार्थानुसन्धानपूर्वकं विशुद्धप्रेमपेशलेन शान्तदास्यसख्यवात्सल्यमाधुर्य्यादिभावेष्वन्यतमभावमयेन तस्यैव परमफलतया फलान्तराभिलाषशून्येन स्वान्तेन "रसो वै सः, इतिश्रुतेः" परमानन्दरसघनं निसर्गमधुरं तमेवानुशीलयति॥ 'भजति, आन्तरेण विविधप्रेमगयोपचारेण सेवते। वाह्योपचारेण परिचरणं तु 'यत्तस्य पीठम्, इत्यादिना वक्ष्यति इति। 'सः, निरुक्तलक्षणो भगवदीयो जीवः भगवदेकमात्रशरणः क्रमेण भावनापरिपाके "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" ॥ छा. उ. अ. ७॥ इत्यादिश्रुत्यनुसारेण, ध्रुवास्मृत्यपरपर्य्यायां निरवच्छिन्नप्रेमानन्दघनां स्वप्रकाशाह्लादिनीपदव्यपदेश्यपराशक्तिभावभूतांनित्यांनिरवद्यांपरांभक्तिं प्राप्य तया सर्वग्रन्थिविनिर्म्मोके जाते 'अमृतोभवति' "निरंजनः परमं साम्यमुपैति"

"मम साधर्म्यमागताः," इतिश्रुतिस्मृतिदर्शितभगवत्परमसाम्यमवाप्य तत एव निरतिशयानन्दरूपं भगवन्तं निरन्तरं विविधभावेनानुभवन् मृत्युभयतोऽत्यन्तं विनिर्मुक्तोभवति । "तं यथायथोपासते तथैवभवति," यत्क्रतुरस्मिँल्लोके पुरुषोभवति तथेतः प्रेत्य भवति "तंयथायथापासते तदेव भवति" यो यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्, "न स पुनरावर्तते "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतं नाप्नुवन्ति महात्मानः संसिद्धिं परमांगताः "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इतिश्रुतिगीतावचनेभ्यः ॥

नचात्रामृतत्वपदेनात्रावान्तरमोक्ष आशंकनीयः । 'पञ्चपदीं जपन् ब्रह्म सम्पद्यते, इति वक्ष्यमाणवाक्येन भगवद्भावाप्तिलक्षणपरममोक्षस्य स्वशब्देनैवाभिधानात् । नचात्र तत्त्वमस्यादिवाक्यजन्यज्ञानादिव्यवधानादिशंकापि कार्य्या । नृसिंहतापिन्यादौ सामरहस्याद्युपासकादीनामिव "देहान्ते तारकं ब्रह्म व्याचष्टे । तेनासावमृती भूत्वा मोक्षी भवति" इत्यादिप्रकारेण देहान्ते तारकोपदेशादीनामत्रोपनिषद्यनुक्तत्वात् । "चिन्तयन् चेतसा कृष्णं मुक्तो भवति संसृतेः" "पञ्चपदीं जपन् ब्रह्म सम्पद्यते' इत्यादौ कारणांशे वर्तमानलडादिष्टशत्रन्तप्रयोगेन "भूञ्जन् तृप्तो भवति । "ब्रह्म वेद ब्रह्मैव भवति" इत्यत्रेव कारणान्तरव्यवधानराहित्येनैव तृप्तिरिव ब्रह्मभावाप्तिरीव च व्यवधानान्तरराहित्येनैव ब्रह्मभावाप्तिबोधने श्रुतितात्पर्य्यप्रतीतेः ॥

तत्त्वमस्यादिमहावाक्यानामपि पञ्चपदीविद्यायामन्तर्भूतत्वाच्च । तदुक्तं श्रीसुन्दरभट्टाचार्य्यपादैः रहस्यषोडश्यां "चरमेणात्महोमस्य" इतिपद्यव्याख्यानावसरे 'अनेन वाक्यार्थोऽपि व्याख्यातः । तथाहि तत्पदार्थः प्रथमपदार्थोऽभिन्नो वासुदेवः" त्वंपदार्थश्च मकारार्थोभिन्नः क्षेत्रज्ञः । तस्य ब्रह्मात्मकत्वादिना तदभिन्नत्वबोधनार्हत्वात् स्वरूपेण भिन्नत्वेऽपि तदात्मकत्वादिना ऽभिन्नः । उभयपदार्थसम्बन्धाभिधायकः, असिपदार्थोभिन्न ईकारार्थः, इतिभिन्नाभिन्नत्वंसिद्धमि' त्यादिनेति । तत्रैव विशेषतो द्रष्टव्यमिति ।

नापि "तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयन" इतिसामान्यतोमुक्तेर्ज्ञानैकलभ्यतावादिश्रुतिवाक्याद्विरोधश्चाशंकनीयः। तादृशध्यानरसनभजनादीनांपराभक्तिरूपापन्नानां "सच्चिदानन्दैकरसे-भक्तियोगे तिष्ठति" इतिवक्ष्यमाणश्रुतेः स्वप्रकाशानन्दरूपत्वेन ज्ञानत्व-स्यापि सत्त्वेन तेषामपि वेदनपदार्थत्वस्य निसर्गतः सत्त्वात, विवृतंचैतन्म-या युग्मतत्त्वसमीक्षायां भक्तिरहस्येच। अत्रापि च तत्तत्प्रसंगे विवेच-यिष्य इति ॥ अग्रे "तेषामसौ दर्शयेदात्मरूपं तस्मन्मुमुक्षुरभ्यसेन्नित्यशा-न्त्यै" इत्यत्र दर्शनं तु परमफलरूपमेव नतु साधनरूपं महावाक्यादिजन्यं वृत्त्यात्मकमिति न साधनान्तरव्यवधानं न वा कश्चिद्विरोधः। तस्मादत्रामृत-पदेन मुख्यमेवामृतत्वमुक्तलक्षणमभिप्रेतम्। नतु क्रममुक्त्यादिकम् ॥

ननूक्तलक्षणा मुक्तिःक्रममुक्तिरेव तत्र विशेषानुभवात् मुख्यमुक्तौ तु "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इतिश्रुतेःसर्वविशेषदर्शन-प्रतिषेधात्, इतिचेन्न। तत्रात्मानात्मविभागपूर्वकविशेषदर्शनस्यैव प्रति-षेधात्। ब्रह्मात्मकत्वेनापि तद्दर्शनप्रतिषेधे तात्पर्य्याभावात्। अत एव "सर्वमात्मैवाभूत्" इतिसर्वपदेन विशेषजातंश्रुतिप्रसिद्धंपरिगृह्य तत्रात्मत्वं बोध्यते एव नतु प्रतिषिध्यते। अतएवच "येनेदं सर्वंविजानाति तत्केन कं विजानीयात्" इतिस्पष्टमेव सर्वविशेषदर्शनं कथयन् करणजन्यज्ञान-मेव प्रतिषेधति ॥ माध्यन्दिनपाठे तु तत्रैव पूर्वकण्डिकासु यद्वै तन्न पश्यति पश्यन्वै तद्द्रष्टव्यं न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपोविद्यते ऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यत्पश्येत्" इतिद्वितीय-दर्शनप्रतिषेधस्य विभक्तद्वितीयदर्शनप्रतिषेधे पर्यवसानस्य स्पष्टं दर्शनात्-ब्रह्मात्मकत्वेन विशेषदर्शनं न प्रतिषेधगोचरः।

वस्तुतस्त्वत्र "न प्रेत्य संज्ञाऽस्तीति" इति याज्ञवल्क्योक्तेः, मुक्तिद शायां वैशेषिकादीनामिव ज्ञानाभावमाशंक्य चकितमैत्रेय्याः "अहमिमं न विजानामि न प्रेत्य संज्ञास्तीति" इतिभ्रमनिरासाय याज्ञवल्क्यः कर-णजन्यज्ञानस्य प्रतिषेधे स्वरूपधर्मभूतज्ञानेनापि स्वरूपेणात्यन्तविभक्त-

तयाऽनुभवस्य प्रतिषेधे एवच स्वतात्पर्य्यं नतु स्वरूपधर्मभूतज्ञानस्यापि सर्वथा प्रतिषेधेतात्पर्य्यमिति वदति ॥ तदेवं स्वरूपधर्मभूतज्ञानस्य मुक्ति दशायां सत्त्वेऽपि लौकिकज्ञानवद् विभागेनानुभावाभावः, तस्य स्वरूपतो विभागाभावादेव, इत्येवं "यत्रहि द्वैतमिव भवति तदितर इतरं पश्यति" इत्यादिना प्रतिपादयति। नतु वस्तुमात्रस्य तदानीमनुभवं प्रतिषेधति। इति-माध्यन्दिनमैत्रेयिब्राह्मणपर्य्यालोचनयाऽवसीयते। काण्वपाठेऽपि गुणोपसंहारन्यायेन तदुपसंहारस्य युक्तत्वात्। अतएव शंकराचार्य्यैरपि "आत्मन्येवात्मानं पश्यति" इत्यत्र काण्वपाठेऽपि "आत्मन्येवात्मानं पश्येत्"-इति-माध्यन्दिनपाठबलेन विधिर्निर्णीयते। इति।

वस्तुतस्तु "न प्रेत्य संज्ञास्तीति" इत्यादिप्रकरणं मुक्तिप्राक्कालीन-सम्पत्तिपरमेव। नतु सर्वविमोक्षानन्तरमाविर्भूतमुक्तस्वरूपपरम् "तदुक्तं चतुर्थस्य चतुर्थपादे—ब्रह्मसूत्रे "स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविस्कृतं हि" इत्यत्रेति। तदेतदुक्तं प्राक्विस्तृतंविवेचयिष्ये पश्चात्। एतत्सूत्रे कौस्तुभाष्यं रामानुजभाष्यं च तात्पर्य्येण द्रष्टव्यम् तथाच सुषुप्त्यवस्थामधिकृत्य "यद्वै तन्न पश्यति" इत्यादिज्योतिर्ब्राह्मणवाक्यम्। उत्क्रान्तिकालिककरणसम्पत्यवस्थामधिकृत्य "तत्केन कम्पश्येत्" इत्यादिमैत्रेयिब्राह्मणवाक्यम्। मुक्त्यवस्थामधिकृत्य वक्ष्यमाणछान्दोग्यवाक्यमितिबोध्यम्।

छान्दोग्येतु "एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्य्येति जक्षन् क्रीड़न् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजन ँ स्मरन्निद ँ शरीरम्, छा अ. ८। १२। २। इत्यत्र स्पष्टमलौकिसर्वविशेषानुभवं-निरूपयँल्लौकिकोपजनशरीरादिस्मरणादिकमेव निषेधति। इदन्त्विहावधेयम यदि परममुक्तौ विशेषज्ञानाभाव एव श्रुतेरिष्टः स्यात्तर्हि कथं छान्दोग्ये प्रकृतप्रजापतिवाक्यसन्दर्भे "स होवाच नाहं खल्वेवं भगवः संप्रत्यात्मानं जानात्ययमहमस्मि नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि" (छा. उ. अ. ८ ख. ११। २।) इत्यादिना,

विशेषज्ञानशून्यत्वेनैव हेतुना सुषुप्तापन्नमात्मस्वरूपं विनाशतुल्यत्वेनोपपादयेत्। स्वीकुर्य्याच्च तथैव "एवमेवैतन्मघवन्" इत्यादिना, अवतारयेच्च "स तत्र पर्य्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा" छा. अ. ८ ख. १२। २ इत्यादिना, अलौकिकस्त्र्यादिविशेषज्ञानसम्पन्नमेव परममुक्तस्वरूपम्, तस्माद्विशेषज्ञानसम्पन्नैव मुक्तिः श्रुतिसम्मता। विशेषज्ञानशून्यमुक्तिस्तु सांख्यवैशेषिकबौद्धादीनामेव सम्मतेति ध्येयम्। नेदं गौणमुक्तिप्रकरणम् "परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्युक्तेः, पूर्वम् "अशरीरं वाव वसन्तं न प्रियाप्रिये स्पृशतः" इत्युक्तेश्च। शंकराचार्य्यैरप्यस्यांशस्य परममुक्तिप्रकरणत्वेनैव स्वीकाराच्च। एतच्छ्रुतिस्वारस्यात् "यथेमा नद्यः-स्पन्दमाना समुद्रायमाणाः। समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे समुद्र इत्येव प्रोच्यते एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष इत्येव प्रोच्यते स एषोऽकलोऽमृतो भवति" (प्र. ६। ५) इतिप्रश्नोपनिषद्वाक्यस्य "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम" (क. २। ४। १२) इतिकठवाक्यस्य "निरंजनः परमं साम्यमुपैतिः" "गताः कलाः पञ्चदशप्रतिष्ठा देवाश्च सर्वे प्रति देवतासु कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति॥ यथानद्य स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय॥ तथा विद्वान् नामरूपेविहाय परात्परं पुरुषमुपैति दिव्यम्। स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति (मु. २। २ ८) इति मुण्डकवाक्यस्य च लौकिकनामरूपादिविशेषप्रतिषेधे एव तात्पर्य्यम्।

अत्रापि स्थलेषु जलान्तरे जलान्तरप्रवेशस्य दृष्टान्तीकरणेन तथैव तात्पर्य्यावगमात् 'नहि जलान्तरे जलान्तरप्रवेशे सर्वथा स्वरूपैक्यं भवति नवा तत्तज्जलगता क्रिया लुप्यते। एवंच यथा तत्र सर्वथा स्वरूपैक्याभावेऽपि तत्तद्गतक्रियायाः सद्भावेऽपि लौकिकनामरूपादीनां तदानीं विलोपात्-लौकिकानां पार्थक्येनानुभवाभावाज्जलीयसाधर्म्यविशेषाच्च समुद्र

इत्यादि रेव लौकिकानांतटस्थानां व्यवहारः समुद्रगतानामाधिदैविकानां गंगायमुनासमुद्रादीनां तु विशेषस्याप्यनुभवाद्विशेषव्यवहारोऽपि। तथा परममुक्तावस्थायामागन्तुकषोडशपंचदशादिविभक्तनामरूपपरित्यागपूर्वकं ब्रह्मात्मकस्वाभाविकशुद्धसच्चिदानन्दघनस्वरूपविग्रहरूपगुणशक्तिभोग्यभोगोपोपकरणादीनां "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्य्यैति जक्षन् क्रिडन् रममाणः स्त्रीभिर्वा यानैर्वा (छा. उ. अ. ८।१२।२) "तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः स एकधा भवति त्रिधा भवति पंचधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतंच दश चैकश्च सहस्राणि च विंशतिः (छा. उ अ. ७। ख. २६ क, २) इत्यादिश्रुतिसिद्धानां विशेषानां तत्तदनुभवस्य सत्त्वेऽपि सर्वषां शुद्धसच्चिदानन्दघनत्वेन ब्रह्मस्वरूपत्वादात्मभूतत्त्वात्तद्विजातीयप्राकृतपदार्थसंकीर्णत्वाभावाच्च ब्रह्म, इत्येव व्यवहारः प्राकृतजीवदृष्ट्या, तदानीं सर्वज्ञानां देवादीनां दृष्ट्यापि शुको वामदेवः, इत्यादिव्यवहारविलोपात्, तदभिप्रायेण "पुरुष इत्येव प्रोच्यते" "ब्रह्म वेद ब्रह्मैव भवति (मु० उ. ३। स ६) इत्यादि ॥ मुक्तपुरुषदृष्ट्या भगवद्दृष्ट्या तु लौकिकविशेषपरित्यागेप्यलौकिकविशेषव्यवहारो भवत्येवेत्यभिप्रायेण "सर्वं ह पश्यति" "जक्षन् क्रिडन् रममाणः" इत्यादि। एतत्सर्वमभिप्रेत्यैव "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम" इत्यत्र तादृक्त्वं साधर्म्यसूचकं प्रोक्तम्, नतु तन्मात्रत्वमिति। "परमं साम्यमुपैति" इत्यत्रापि "तदेव भवति" इति लघुशब्दं परित्यज्य "परमं साम्यम्" इति महाशब्दप्रयोगस्तदभिप्रायकमेव। ज्ञत्वादिना यत्किंचित्साम्यस्यामुक्तावस्थायामपि सत्त्वात्, निरुक्तनिखिलसाधर्म्यलाभाय परमपदविशेषणम्। "परे देवे एकीभवति" (सुवा. उ। ख. २) इत्यत्र अभूततद्भावार्थकच्युप्रत्ययोपि 'दिवाभूता रात्रि' रित्यादाविव परमैकत्ववारणेन परमसाम्य-

लाभार्थकमेव। "ब्रह्म वेद ब्रह्मैव भवति" इत्यत्र ब्रह्मभावोक्तिरपि मुक्तानां स्वरूपतो विग्रहतो गुणादितो भोग्यभोगोपकरणादितश्च ब्रह्मात्मकसच्चिदानन्दरूपत्वबोधनार्थमेव। "सत्यंज्ञानमनन्तं ब्रह्म" ( तै. ब्र. १ ) विज्ञानमानन्दं ब्रह्म ( बृ. अ. ३। ब्रा. ३। ६। २८ ) इत्यादिश्रुतिभ्यः सच्चिदानन्दघनत्वस्यैव ब्रह्मस्वरूपलक्षणत्वात्॥ तैतरीयेऽपि परममुक्तयवस्थायां "ब्रह्मविदाप्नोति परं। तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता, इत्युपक्रमे। उपसंहारे च "स इमाँल्लोकान्कामान्नीकामरूप्यनुसंचरन्॥एतत्साम गायन्नास्ते हावु हावु। "अहमन्नमहमन्नमहमन्नम्। अहमन्नादोरहमन्नादोऽहमन्नादः। अहंश्लोककृदहंश्लोककृदहंश्लोककृत्" ( तै.भृ.व.६ ) इत्यादि पठ्यते। तस्मात्परममुक्तयवस्थायामपि न सर्वथा विशेषानुभवप्रतिषेध इतिध्येयं भगवत्प्रपन्नैरिति॥ इतिमुक्तिविषयकशंकानिरासः॥

तदेवं निरुक्तलक्षणस्य परब्रह्मणः श्रीकृष्णस्य निजसंकेतितध्यानादिद्वारमिषेण निरुक्तलक्षणामृतत्त्वप्रदत्वनिरूपणात् परदेवत्वानुबन्धिपरमफलप्रदत्वमृत्युनिवारकत्वरूपाभ्यां धर्माभ्यामंशतः कार्य्यमुखेन परमदेवत्वं गोविन्दत्वं च निरूपिते॥ अथ स्वरूपतः कार्य्यतश्च विस्तरेण तथात्वं निरूपयितुं प्रक्रमते—

मू० ते होचुः किं तद्रूपं किं रसनं किमाहो तद्भजनं तत्सर्वं विविदिषतामाख्याहीति।

तदुहाचुरिति। सामान्यरूपेण स्वरूपतः कार्य्यतश्च निरुक्तलक्षणं परब्रह्मस्वरूपं श्रुत्वा अवधार्य्य च पुनर्विशेषतस्तत्स्वरूपावधारणाय जिज्ञासांचक्रुरित्यर्थः॥ अयमाशयः॥ उपनिषदन्तरेषु तावत् "सत्यं ज्ञान मनन्तं ब्रह्म" "विज्ञानमानन्दंब्रह्म" इत्यादिस्वरूपलक्षणपरैर्वाक्यैर्निरतिशयानन्तसच्चिदानन्दस्वरूपंब्रह्म इत्येव निर्णीतम्, तत्पुनराकाशादिवन्निर्विशेषमेव विग्रहादिवत् सविशेषमेव वा, इति नेदमित्थतया निर्धारितम्, यद्यपि "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" ( तै.ब्र.उ. )

इत्यनेन 'रसो वै सः। रसं ह्येवायं लब्ध्वा आनन्दी भवति को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्, (तै.ब्र.उ.) इत्यादिना च फल-वाक्येन तादृशसर्वकामभोगान्यथानुपपत्त्या ब्रह्मणः साकारत्वं श्रुतार्थापत्तिसिद्धमेव, तत एव च "अन्योऽन्तर आत्मा आनन्दमयः। अन्वयं-पुरुषविधः" इति स्वशब्देनैवानन्दघनपुरुषाकारत्वं स्पष्टमामनन्ति। एवं "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते"॥ (प्र. उ. ५) "दिव्योह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः॥ अप्राणोह्यमनाः शुभ्रो ह्यक्षरात्परतः परः (मु. उ. ३।) "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्" (मु. उ २) इतिप्रश्नमुण्डकवाक्य-गताभ्यां साभिप्रायकपुरुषपदाभ्यामपि च परब्रह्मणः सच्चिदानन्दात्मक पुरुषाकारत्वमुक्तं भवत्येव। एवं तत्पर्याधिकतया "आत्मैवेदमग्र आसीत् पुरुषविधः। सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्" "स नैव रेमे तस्मादेकाकी न रमते स हैतावानास यथा स्त्रीपुमांसौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधाऽपातयत् पतिश्च पत्नी चाभवताम् (बृ. अ. १ ब्र. ४) इतिबृहदारण्यकपुरुषविधब्राह्मणवाक्येन "एको ह वै नारायण आसीत्। न ब्रह्मा नेशानो नाग्नीषोमौ" इत्युपक्रम्य पठितेन "स एकाकी नर एव तस्य ध्यानान्तस्थस्य ललाटात्र्यक्षः शूलपाणिः-पुरुषो जायते" (महो०१) इत्याथर्वणमहोपनिषद्वाक्येन 'पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति नारायणात्प्राणो जायते मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" इति नारायणोपनिषद्वाक्येन च पुरुषविधनरपुरुषपदाभ्यां सर्वमूलरूपस्य पुरुषाकारत्वं निरूपितमेव। यथा चैतानि वाक्यानि परब्रह्मपराण्येव नापरब्रह्मपराणि तथोपपादितानि मया विस्तरेण युग्मतत्त्वसमीक्षायां साकारत्वनिरूपणावसरे, इतिग्रन्थ-गौरवभिया नेह तन्यते तत्रैव द्रष्टव्यमिति।

तथापि तानि वाक्यानि न साकारत्वनिरूपणे स्फुटतराणीति सूक्ष्मवि-चारकाणामेव तादृशार्थगमकानि। इति स्फुटं वाक्यमपेक्ष्यत एव, नच

कैवल्योपनिषदि यथा "आश्वलायनो भगवन्तं परमेष्ठिनमुपसमेत्योवाच। अधीहि भगवन् ब्रह्मविद्यांवरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम्। ययाऽचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषं याति विद्वान्। तस्मै स होवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवैहि" इत्युपक्रम्य-"अन्त्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य। हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम्। अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्। तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्। उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्। स ब्रह्मा स शिवः सेन्द्र सोऽक्षरः परमः स्वराट् स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः स एव सर्वं यद्भूतं यच्च भाव्यं सनातनम्। ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये" इतिनिर्धारणात्, त्रिलोचनादिविशिष्टमेव परब्रह्मणो- मूलरूपमिति साकारत्वं निर्णीतमेवेतिवाच्यम्। तत्र ध्येयरूपस्य त्रिलोचनत्वादिना निरूपितत्वेऽपि ज्ञेयत्वेन प्राप्यत्वेन च त्रिलोचनादिभिन्नरूपस्यैव प्रत्यभिज्ञायमानत्वेन त्रिलोचनादिवाक्यानां मूलस्वरूपनिर्णाकत्वासंभवात्। अयमाशयः। अत्र हि आश्वलायनेन मुनिना परमपुरुषप्राप्तिफलकब्रह्मविद्या जिज्ञासिता! पितामहश्च अन्यानि साधनान्युतक्त्वा गुरुप्रणामं कर्तव्यत्वेन ज्ञापयित्वा ध्येयं चिदानन्दमयं शिवस्वरूपमुक्त्वा ज्ञानानन्तर गन्तव्यत्वेन-"भूतयानिंसमस्तसाक्षिं तमसः परस्तात्" इत्यनेन "परात्परं पुरुषं याति विद्वान्" इतवाक्यजिज्ञासितं "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" इत्यादिपुरुषसूक्तोत्तरनारायणप्रतिपादितं परमपुरुषं प्रत्यभिज्ञापयामास। तस्यैव च "स ब्रह्मा स शिवः" इत्यनेन निरुक्तध्येयशिवरूपत्वमपि ब्रह्मेन्द्रादिरूपत्ववदुक्तम्, तज्ज्ञानस्यैव च "तमेव विदित्वाऽतिमृत्युमेति नान्यःपन्था विद्यतेऽयनाय" इत्युत्तरनारायणीयवाक्यसमानार्थकेन "तं ज्ञात्वा मृत्युमत्येति"

इतिवाक्येन मोक्षहेतुत्वमपि प्रतिपादितम्। एवंचैतदुपनिषदो यदि ध्येयत्वेनोपदिष्टशिवरूपस्यैव परमकाष्ठापन्नत्वे तात्पर्यं स्यात्, तदा "ब्रह्म वेद ब्रह्मैव भवति" इत्यादाविव ध्यात्वा मुनिर्गच्छति तम्'' इत्येव फलवाक्यं विशेषयेत्, नतु "भूतयोनिं समस्तसाक्षिन्तमसः परस्तात्" इति प्राप्यस्योक्तध्येयरूपादधिकत्वसूचकमधिकं विशेषणमिति। नच भूतयोनित्वादिमपि ध्येयतयोक्तरूपे विशेषणमेवेतिवाच्यम्, प्रमाणाभावात्। ध्यानकथनात्प्रागेव ध्येयस्वरूपविशेषणतया विशेषयेच्च। नच पश्चात्कथितमपि ध्येयतयोक्तरूपविशेषणमेवेतिवाच्यम्। प्रमाणाभावात्, आकांक्षापरमाच्च। उत्थापिताकांक्षया तदन्वये वाक्यदोषापत्तेश्च। किंचात्र ध्येयगन्तव्ययोरेकत्वतात्पर्ये "ब्रह्म वेद ब्रह्मैव भवति" "चिन्तयन् चेतसा कृष्णं मुक्तो भवति संसृतेः" "पञ्चपदीं जपन् ब्रह्म सम्पद्यते" इत्यादिवत् "ध्यायन् मुनिर्गच्छति तम्" इत्येवमेव वाक्यं योजयेत्। तथा सति ध्यानरूपसाधनगमनरूपफलयोरव्यवधानेन बोधो भवेदिति।

अपिच "स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः" इत्यनेन ब्रह्मादिवत्, शिवस्यापि गन्तव्यतमपरपुरुषविभूतित्वं न वदेदेव। यथा नारायणत्वेन परमतत्त्वता-प्रतिपादकमहोपनिषदि "स ब्रह्मा स ईशानः, इत्यादिना। 'ब्रह्मा च नारायणः शिवश्च नारायणः' इत्यादिना नारायणोपनिषदि च सर्वेषां ब्रह्मादीनां नारायणविभूतित्वंप्रतिपादयन्नपि नारायणपदवाच्यत्वेन तस्य विभूतित्वं "स ब्रह्मा स नारायण" इत्येवं न वदति। एवं गोपालोत्तरतापिन्यामुपसंहारे प्रद्युम्नानिरुद्धसंकर्षणवासुदेवानां, अन्येषांच "योऽसौ प्रधानात्मा गोपालः" इत्यादिवाक्योक्तानां गोपालविभूतित्वनिरूपणप्रसंगे-गोपालस्यापि तथात्वं न भवेदिति "गोपालाय निजस्वरूपाय" इत्यन्यत्र। विशेषितं निजत्वं विशेषितम्। यद्यप्यत्रान्तिमपर्यायपर्यन्तं गोपालपदवाच्यत्वेनैव विशेषस्य निर्देशात्, न तस्य विभूतित्वशंकासंभवः, तथाप्यणुमात्रमपि न शंकासंभवो भवतु, इतिनिजत्वंविशेषितम्। तथाऽत्र न निर्विचिकित्सनिर्णायकःकश्चिच्छब्दः। तस्मात्-त्रिलोचनरूपस्य मूलरूपत्वनिरूपणे न कैव-

ल्योपनि-त्तात्पर्य्यम्।अपि तु परविद्यायां क्रमेणावतारा य दत्तात्रेयहयग्रीवो-पनिषदादौ दत्तात्रेयहयग्रीवादिस्वरूपध्यानमंत्रजपादिवदिहापि त्रिलो-चनस्वरूपध्यानशतरुद्रीयजपाद्युपदेशः । किंच शिवस्य सर्वविद्यागुरुत्वेन गौरवीशक्तिरूपत्वाद् ब्रह्मविद्याप्रकरणे ध्येयत्वमुक्तम्। अयमाशयः। सर्वासु विद्यासु प्रथमंगौरवीशक्तिर्ध्येयत्वेनोपदिश्यते, इतिशास्त्रसम्प्रदायः। 'यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ इतिश्वेताश्वरश्रुतेः। तथा गौरवीशक्ते" दक्षिणामूर्तित्वमप्युपदिश्यते शास्त्रेषु–।। शिवश्च दक्षिणामूर्तिरित्यपि-प्रसिद्धम्। अत एव शिवाकारैव गौरवीशक्तिः सच्चिदानन्दविग्रहा परेऽप्राकृते धाम्नि विराजते। यथाच परेधाम्नि आधिदैविकीतत्तद्देवाद्याकारा शक्तिःतद्व्युत्युत्पादयिष्ये "रुद्रेपु रौद्री गाणेशेषु गाणेशी" इत्यादिवक्ष्यमाण-ग्रन्थव्याख्यानावसरे इति तत्रैव ध्येयम्। एवंच प्रकृते "गुरुं प्रणम्य" इति-ब्रह्मविद्याभ्यासारंभे गुरुप्रणामोविहितः। परोक्षगुरुप्रणामस्तु ध्यानविशेष रूपेणैव। ध्यानस्य च ध्येयस्वरूपज्ञानसापेक्षत्वत्, ध्येयमाधिदैविकगुरु-स्वरुपंनिर्दिश्यते 'हृत्पुण्डरीक, मित्यादिनेति नैकान्ततः परमात्मस्वरूप-निर्णयो-नवा कश्चिद्विरोधः ।।—इति ।

अथ निराकारत्वेन स्वरूपनिर्णयः स्यात् "अशब्दमस्पर्शमरूपमव्ययम्" 'अस्थूलमनण्वह्रस्वमदीर्घम्" अद्रेश्यमग्राह्यम्, अपाणिपादो जवनो ग्रहीता 'नैव स्त्री न पुमान्, इत्यादि-श्रुतिभ्य-इतिचेन्न। पूर्वोदा-हृतसाकारत्वसमर्पकश्रुतीनां". विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतोबाहु-रुत विश्वस्तपात् सं बाहुभ्यां धमति सम्प त्रैर्द्यावापृथिवीजनयन्देव एकः "त्वं स्त्रीस्त्वं पुमान् त्वं कुमार उत वा कुमारी" "सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखं सर्वतःश्रुतिमल्लोके सर्वमावृत्त्य तिष्ठति ।।" इत्यादि-श्रुस्मृतिपर्य्यालोचनया "अशब्द" मित्यादिश्रुतीनां निरतिशयस-च्चिदानन्दघनात्मत्कब्रह्मस्वरूपातिरिक्तस्य विविधभावविकारयुक्तस्य चेष्टावदन्त्यावयवीत्यादिलक्षणलक्षितस्य संघातरूपस्य "पञ्चात्मकं-पञ्चसु वर्तमानं षडाश्रयं षडगुणयोगयुक्तं तं सप्तधातुं त्रिवलिंद्वियोनिं-

चतुर्विधाहारमयंशरीरम्"-इति गर्भोपनिषदुक्तशरीरस्यैव प्रतिषेधे तात्पर्य्यमवसीयते" । ननु "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषब्रह्मयोनिम्" "अथय एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुहिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमक्षिणी" ( छा. उ. अ. १ । ६ ।६।। ) "अस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः अन्वयंपुरुषविधः" "आत्मैवेदमग्र आसीत्पुरुषविधः" स एकाकी नर एव, इत्यादिश्रुतिसहस्रप्रसिद्धस्य,

सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ।
नित्यानन्दतनुः शौरिर्य्योऽशरीरीति भाष्यते ।,
'वाय्वग्निनाकभूतीनामङ्गाधिष्ठातृदेवता ।। १ ।।
निरूप्यते ब्रह्मणोऽपि तथा गोविन्दविग्रहः ।
सेन्द्रियोऽपि यथा सूर्य्यस्तेजसा नोपलभ्यते ।। २ ।।
तथा कान्तियुतः कृष्णः कालं मोहयति ध्रुवम् ।
योगी चैवेश्वरश्चान्यः सर्वात्मा नित्यविग्रहः ।। ३ ।।
काठिन्यं दैवयोगेन कारकाघृतयोरिव ।
कृष्णस्यामिततत्त्वस्य पापपृष्ठं न देवता ।। ४ ।।

( पद्मपु. याख. वृ. मा. अ. २ ) इत्यादिगीतापुराणाद्युपबृंहितस्य,

निर्दोषपूर्णगुणविग्रह आत्मतंत्रो निश्चेतनात्मकशरीरगुणैश्च हीनः ।
आनन्दमात्रकरपादमुखोदरादिःसर्वत्र च स्वगतभेदविवर्जितात्मा ।।१।।,
अंगानि यस्य सकलेन्द्रियवृत्तिमन्ति पश्यंति पान्ति कलयन्ति चिरं जगन्ति ।
आनन्दचिन्मयसमुज्वलविग्रहस्य गोविन्दमादिपुरुषंतमहंभजामि ।।२।।,

इत्याद्यनुकूलतर्कोपबृंहितपंचरात्रवाक्यानूदितस्य सर्वविक्रियारहितस्य निरतिशयसच्चिदानन्दघनस्यावयवसंघातजन्यत्वरहितस्यावयवावयविकृतभेदशून्यस्यानन्दचिन्मयतया सर्वतोभावेनैवदर्शनस्पर्शनादिशक्तिमत्तया प्रतिनियतेन्द्रियकार्य्यकारितारहितस्य, अपरिच्छिन्नत्वेऽपि परिच्छिन्नतया नराकारतया च प्रमीयमाणस्य, आत्मानतिरिक्ततया स्व-

रूपभूतस्य "यदा पश्यः पश्यते रुक्मवर्णम्" "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' इतिश्रुतेर्मुक्तमात्रगम्यस्य विग्रहस्य निषेधे तात्पर्य्यं प्रतीयते ॥

तस्मात् तत्तच्छ्रुतिभ्यां साकारत्वेन निराकारत्वेन च सूचितस्य, अत्रापि सच्चिदानन्दरूपाय, इतिमंत्रवर्णे सूत्रितस्य परमात्मनः स्वरूपस्य तत्त्वतो निर्धारणाय ते पुनयः पप्रच्छुः–'किंतद्रूपमित्यादि" "कः परमोदेव । इत्यारभ्य" "सकलं परं ब्रह्मैव तत्" इत्यन्तेन निरूपितस्य सर्वातिशायिपरमकाष्ठापन्नस्य परब्रह्मणः परमं स्वरूपं किंलक्षणमितिजिज्ञासावाक्यार्थः । "अशरीरमि" त्यादिश्रुतिनिर्णयात् सच्चिदानन्दात्मकं सदपि व्योमवन्निर्विशेषमात्रम् 'पुरुषविधः' नर एव, 'पुरुषंब्रह्मयोनिम्' इत्युदाहृतश्रुतिभ्यः सच्चिदानन्दात्मकपुरुषाकारमन्यविधंवेति भावार्थः ॥ तथाच निरुक्तपरमदेवत्वस्य स्वरूपतः सोपपन्ननिरूपणायैव स्वरूपजिज्ञासा । इदमित्थतया स्वरूपनिर्णयं विना परमदेवत्वनिर्धारासंभवात् । तेन ध्यानांगतयाऽत्र स्वरूपजिज्ञासा निरूपणं चेत्याशंकाया नावसरः ॥ वस्तुतोध्यानादीनामपि निरुक्तपरमदेवत्वगोविन्दत्वानुबन्धिपरमफलप्रदत्वमृत्युनिवारकत्वादिद्वारतयैव प्रक्रान्तत्वेन परमदेवस्वरूपनिर्णयशेषत्वेन त त्स्वरूपनिर्णयस्य ध्यानादिशेषत्वासंभवात् । एतेन रसनादिनिरूपणस्यापि परमदेवत्वोपपादकतयैवात्रोपयोग इत्यप्युक्तमेवाधिकं त्वग्रे निरूपयिष्ये इति ।

एवं प्रश्नं श्रुत्वा प्रथमतः स्वरूपनिर्धारणमाह–"तदुहोवाच गोपवेश"मित्यादि । तत्,प्रश्नविषयभूतं स्वरूपादिकं उ-विमृश्य ह, अवधार्य्य उ वाचस्वरूपनिर्णयमुवाच, इत्यर्थः । 'गोपवेशमिति" गोपायति साक्षात्परोक्षतो वा नित्यानिरतिशयचिदानन्दनिजस्वरूपानुभावनेन सौन्दर्य्यमाधुर्य्याद्यनुभावनेन च, विषयद्वारा निजस्वरूपानन्दलेशानुभावनेन च निखिलान्मुक्तानमुक्ताँश्च जीवान् पालयति प्राणिति यः स नित्यनिरतिशयचिद्रसानन्दविग्रहो गोपः "रसो वै सः । रसँह्येवायंलब्ध्वाऽनन्दी

भवति कोह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति। (तै. ब्र. उ. २) एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति, बृ.। "तमेकं गोविन्दं सच्चिदानन्दविग्रहम्" इत्यादिश्रुतिभ्यः।

"अंगानि यस्य सकलेन्द्रियवृत्तिमन्ति पश्यन्ति पान्ति कलयन्ति चिरं जगन्ति। आनन्दचिन्मयसमुज्वलविग्रहस्य गोविन्दमादिपुरुषं तमहं भजामि॥" आनन्दचिन्मयरसात्मतया मनःसु यः प्राणिनांप्रतिफलन् स्मरतामुपेत्य। लीलायितेन भूवनानि जयत्यजस्रं गोविन्दमादिपुरुषंतमहंभजामि॥" इतिब्रह्मसंहितावाक्येभ्यः। नित्यानन्दतनुशौरिर्य्योऽशरीरीति भाष्यते" इत्याद्युदाहृतपद्मपुराणवाक्येभ्यः। तथा—  पार्वत्युवाच।

परमं कारणं कृष्णं गोविन्दाख्यं महत्पदम्। वृन्दावनेश्वरं नित्यं निर्गुणस्यैककारणम्। यत्तद्रहस्यमाहात्म्यं किमैश्वर्य्यं च सुन्दरम्। तद्ब्रूहि देवदेवेश श्रोतुमिच्छाम्यहं प्रभो—

ईश्वरउवाच।

यदन्घ्रिनखचन्द्रांशुमहिमान्तो न गम्यते। तन्माहात्म्यं कियद्देवि प्रोच्यते तं मुदा शृणु। अनन्तकोटिब्रह्माण्डे अनन्तत्रिगुणोच्छये। तत्कलाकोटिकोट्यंशा ब्रह्मविष्णुमहेश्वराः॥ सृष्टिस्थित्यादिना युक्तास्तिष्ठन्ति तस्य वैभवाः। तद्रूपकोटिकोट्यंशा कलाः कन्दर्पविग्रहाः॥ जगन्मोहं प्रकुर्वन्ति तदण्डान्तरसंस्थिताः। तद्देहविलसत्कान्तिकोटिकोट्यंशकाविधुः। तत्प्रकाशस्य कोट्यंशा रश्मयो रविविग्रहाः॥ तस्य स्वदेहकिरणैः परानन्दरसामृतैः। परमामोदचिद्रूपैः निर्गुणस्यैककारणैः॥ तदंशकोटिकोट्यंशा जीवन्ति किरणांगकाः॥ तदंघ्रिपंकजद्वंद्वनखचन्द्रमणिप्रभाः। आहुः पूर्णब्रह्मणोऽपि कारणं वेददुर्गमम्॥ तदङ्गसौरभानन्तकोट्यंशो विश्वमोहनः। तत्स्पर्शपुष्पगन्धादिनानासौरभसंभवः॥ तत्प्रिया प्रकृतिस्त्वाद्या राधिका परदेवता।

तत्कालाकोटिकोट्यंशा दुर्गाद्यास्त्रिगुणात्मिका:।। तस्या अंघ्रिरज-
स्यर्शात्कोटिविष्णुः प्रजायते ।''

इत्यादिसमुपबृंहकपद्मपुराणपातालखण्डवृन्दावनमाहात्म्यगतवाक्येभ्य-
श्चेति ।

इहमत्र बोध्यम् । श्रीभगवत्स्वरूपनिरूपणपरेषु श्रुतिस्मृतिपुराणेषु गोपशब्दोगोपवेशशब्दश्च वहुशः समायाति "यथा "त्रिणिपादाविचक्रमे-र्विष्णुर्गोपाअदाभ्य:'' इत्यादिवेदेषु । पुराणेषुच, आद्यसृष्टिप्रकरणेब्रह्मवैवर्तदेवोभागवतादिषु । तत्र सर्वत्र न तस्य शब्दस्य गवादिपशु तिपालकवेश इत्येतावन्मात्रमर्थः। अपितु गोपशब्दस्य निरुक्तलक्षणनिखिलजड़जीवात्मकमुक्तामुक्तप्रपंचपालकत्वधर्मयोगादेव तत्र प्रयोगः। तस्मादत्र गोपस्य उपयुक्तोवेशो ोपवेशः, इतिमध्यमपदलोपिसमासानन्तरं, अर्शाद्यच्-करणात्, तादृशार्थगमकवहुव्रीहिकरणाद्वा निष्पन्नो गोपवेशशब्दोऽत्र ग्राह्यः । तथाच निरुक्तलक्षणगोपस्वरूपस्य भगवतो निरुक्तलक्षणगोपनोपयुक्ताःपरमरसपोषकाः सौन्दर्य्यमाधुर्य्यसौकुमार्य्यसौगन्ध्यमार्दवादि-दिव्यविग्रहस्वरूपगुणाः, विग्रहालंकारभूता रसपोषका भूषणवसनाद्याश्च गोपवेशशब्देन संगृह्य ते। तथाच तादृशरसोद्दीपकसर्वगुणोपपन्नं निरतिशयप्रेमानन्दविग्रहमिति 'गोपवेशमि' ति वाक्यार्थः ।

एवंच गोपवेशपदेन—"अन्योऽन्तर आत्मानन्दमयः ।। तेनैष पूर्णः।। स वा एष पुरुषविध एव तस्य पुरुषविधताम् ।। मोदो दक्षिणः पक्षः ।। प्रमोद उत्तरः पक्षः ।। आनन्द आत्मा ।। ब्रह्म पुच्छं प्रतिष्ठा ।। (तै. ब्र. अ. ५) 'सोऽश्नुते सर्वात्कामान् सह ब्रह्मणा विपश्चिता, (तै. ब्र. अ. ७) "रसो वै सः । रस ँ ह्येवायं लब्ध्वाऽनन्दी भवति कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् ।" इतितैतरीयोक्ताः।, "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मात् (बृ. १।४।८) इतिबृहदारण्यकोक्ताः, "सर्वकर्माः सर्वकामः सर्वगन्धः सर्वरसः" छा. ३ । १४ । २ । "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति

स भूमा" ( छा.७।२४।१ ) "एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्मानन्दः स स्वराड् भवति" ( छा. ७ । २५ । २ ) "तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मत आशात्मतः स्मर आत्मत आकाश आत्मतस्तेजः" "इत्युपक्रम्य" न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः, इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैकादश स्मृतः । शतंच दश चैकश्च सहस्राणि च विंशतिः ।। ( छा.७ २६। ) इति छान्दोग्ये शाण्डिल्यविद्यायां भूमविद्यायांच प्रोक्ता रसधर्माः समुपसंहृता भवन्तीति। तथा नाट्यशास्त्रे षष्ठाध्याये सुखप्रायेष्टसम्पन्नऋतुमाल्यादिसेवकः । पुरुषः प्रमदायुक्तः श्रृङ्गार इति शब्दितः ।। १ ।। ऋतुमाल्याद्यलंकारैः प्रियजनगन्धर्वकाव्यसेवाभिः । उपवनगमनविहारैः श्रृङ्गाररसः समुद्भवति ।। २ ।। इत्यादिभरतमुनिनिरूपितरीत्या श्रृङ्गाररसौपयिकसर्वोपकरणोपपन्ननिरतिशयदिव्यश्रृङ्गाररसरूपत्वमप्यत्र निरूपितम् भवति ।। तच्च सर्वादिसृष्टिप्राक्कालीनरूपनिरूपणपरायणब्रह्मवैवर्तब्रह्मखण्डप्रकृतिखण्डदेवीभागवतनवमस्कन्धनारदीयस्कन्दवासुदेवमाहात्म्यपाद्मवृन्दावनमाहात्म्यवृहद्वामनपुराणपञ्चरात्र-ब्रह्मसंहिताबृहद्ब्रह्मसंहिताज्ञानामृतसंहितासनत्कुमारसंहितागौतमीयतंत्राद्यार्षनिबन्धपर्य्यालोचकानांसहृदयानां हृदयगोचरमेव । तेषु ग्रन्थेषु, अनाद्यनन्तानिर्वचनीयस्वात्मकचिच्छक्तिविलासमयतादृशानर्वोपकरणविशिष्टपरमपुरुषश्रीकृष्णरूपस्य तथैवोपवृंहणात् ।

यथाच पाद्मे पातालखण्डे वृन्दावनमाहात्म्ये गोविन्दस्य क्रिमैश्वर्य्यसौन्दर्य्याश्चर्यविग्रहं तदहं श्रोतुमिच्छामि कथयस्व दयानिधे" इतिश्रीपार्वत्या पृष्टः भगवानीश्वरउवाच—

मध्येवृन्दावने रम्ये मंजुमंजीरशोभिते । योजनाश्रितसद्वृक्षे शाखापल्लवमंडिते ।। तन्मध्येमञ्जुभवने योगपीठं समुज्ज्वलम् । तदष्टकोणनिर्माणं नानादीप्तिमनोहरम् ।। तस्योपरि च माणिक्य-

रत्नसिंहासनं शुभम्। तस्मिन्नष्टदलं पद्मं कर्णिकायां सुखाश्रयम्॥ गोविन्दस्य परं स्थानं किमस्य महिमोच्यते। श्रीमद्गोविन्दमंत्रस्थं वैष्णवीवृन्दसेवितम्॥ दिव्यव्रजवयोरूपं कृष्णं वृन्दावनेश्वरम्। व्रजेन्द्रं संततैश्वर्यं व्रजबालैकवल्लभम्॥ यौवनोद्भिन्नकैशोरं वयसाऽद्भुतविग्रहम्। अनादिमादिं सर्वेषां नन्दगोप प्रियात्मजम्॥ श्रुतिमृग्यमजं नित्यं गोपीजनमनोहरम्। परंधाम परंरूपं द्विभुजं गोकुलेश्वरम्॥ वल्लवीनन्दनं ध्यायेन्निर्गुणस्यैककारणम्। सुश्रीमन्तं नवं स्वच्छं श्यामधाममनोहरम्॥ नवीननीरदश्रेणीसुस्निग्धमञ्जुकुण्डलम्। फुल्लेन्दीवरसत्कान्तिसुखस्पर्शसुखावहम्॥ दलिताञ्जनकुञ्जाभचिक्कणं श्याममोहनम्। सुस्निग्धनीलकुटिलाशेषसौरभकुन्तलम्॥ तदूर्ध्वं दक्षिणे भाले श्यामचूडामनोहरम्। नानावर्णोज्ज्वलं राजच्छिखण्डदलमण्डितम्॥ मन्दारमञ्जुगोपुच्छचूडं चारुविभूषितम्। कचिद्वर्हदलश्रेणीमुकुटेनाभिमण्डितम्॥ अनेकमणिमाणिक्यकिरीटभूषणं कचित्। लोलालकवृतं राजत्कोटीन्दुसदृशाननम्॥ कस्तूरीतिलकं भ्राजन्मञ्जुगोरोचनान्वितम्। नीलेन्दीवरसुस्निग्धसुदीर्घदललोचनम्॥ आनृत्यद्भूलताश्लेषस्मितसाचिनिरीक्षणम्। सुचारुभूतसौन्दर्यनासाग्रातिमनोहरम्॥ नासाग्रगजमुक्तांशुमुग्धीकृतजगत्त्रयम्। सिन्दूरारुणसुस्निग्धाधरौष्ठं सुमनोहरम्॥ नानावर्णोल्लसत्स्वर्णमकराकृतिकुण्डलम्। तद्रश्मिमञ्जुसद्गण्डमुकुराभसमद्युतिम्॥ कर्णोत्पलसुमन्दारमकरोत्तंसभूषितम्। श्रीवत्सकौस्तुभोरस्कं मुक्ताहारस्फुरद्गलम्॥ विलसद्दिव्यमाणिक्यमञ्जुकाञ्चनमिश्रितम्। करकङ्कणकेयूरकिङ्किणीकटिशोभितम्॥ मञ्जुमञ्जीरसौन्दर्यश्रीमदङ्घ्रिविराजितम्। कर्पूरागुरुकस्तूरीविलसच्चन्दनादिकम्॥ गोरोचनादिसंमिश्रदिव्याङ्गरागचित्रितम्। स्निग्धपीतपटीराजत्प्रपदान्दोलिताञ्जनम्॥ गम्भीरनाभि-

कमलंरोमराजीनतस्रजम्। सुवृत्तजानुयुगलं पादपद्ममनोहरम्॥
ध्वजवज्रांकुशाम्भोजकराङ्घ्रितलशोभितम्। नखेन्दुकिरणश्रे-
णीपूर्णब्रह्मैककारणम्॥ केचिद्वदन्ति तस्यांशंब्रह्मचिद्रूपम-
व्ययम्। तद्दशांशं महाविष्णुं प्रवदन्ति मनीषिणः॥ योगीन्द्रैः
सनकाद्यैश्च तदेव हृदि चिन्त्यते। त्रिभङ्गललिताशेषनिर्माण-
सारनिर्मितम्॥ तिर्यग्ग्रीवजितानन्तकोटिकंदर्पसुन्दरम्। वामां-
शार्पितसद्गण्डस्फुरत्काञ्चनकुण्डलम्॥ सापाङ्गेक्षणसस्मेर-
कोटिमन्मथसुन्दरम्। कुञ्चिताधरविन्यस्तवंशीमञ्जुकलस्वनैः॥
जगत्त्रयं मोहयन्तं मग्नं प्रेमसुधार्णवे॥ २८। ½॥

पार्वत्युवाच।

परमं कारणं कृष्णंगोविन्दाख्यं महत्पदम्॥ वृन्दावनेश्वरंनित्यं-
निर्गुणस्यैककारणम्। तत्तद्रहस्यमाहात्म्यं किमैश्वर्यं च सुन्दरम्।
तद्ब्रूहि देवदेवेश श्रोतुमिच्छाम्यहंप्रभो।॥ ३१। ½॥

ईश्वर उवाच।

यदङ्घ्रिनखचन्द्रांशुमहिमान्तो न विद्यते॥ तन्माहात्म्यं किय-
द्देवि प्रोच्यते त्वं मुदाशृणु। अनन्तकोटिब्रह्माण्डे अनन्तत्रि-
गुणोच्छ्रये॥ तत्कलाकोटिकोट्यंशा ब्रह्मविष्णुमहेश्वराः। सृ-
ष्टिस्थित्यादिना युक्तास्तिष्ठन्ति तस्य वैभवाः॥ तद्रूपकोटिको-
ट्यंशाः कलाः कन्दर्पविग्रहाः। जगन्मोहं प्रकुर्वन्ति तदण्डान्तर
संस्थिताः॥ तद्देहविलसत्कान्तिकोटिकोट्यंको विधुः। तत्प्रका-
शस्य कोट्यंशारश्मयोरविविग्रहाः॥ तस्य स्वादेहकिरणैः परा-
नन्दरसामृतैः। परमामोदचिद्रूपैर्निर्गुणस्यैककारणैः। ३६।
तदंशकोटिकोट्यंशा जीवन्ति किरणांगकाः॥ तदंघ्रिपंकजद्वन्द्व-
नखचन्द्रमणिप्रभाः॥ आहुः पूर्णब्रह्मणोऽपि कारणंवेददुर्गमम्॥
तदंगसौरभानन्तकोट्यंशो विश्वमोहनः॥ तत्स्पर्शपुष्पगन्धादि-
नानासौरभसम्भवः॥ तत्प्रिया प्रकृतिस्त्वाद्या राधिका परदेवता॥

तत्कलाकोटिकोऽयंशा दुर्गाद्यास्त्रिगुणात्मिकाः” इति ॥ ४० ॥
पुनश्च सपरिकरम् भगवत्स्वरूपं श्रोतुं श्रीपार्वती पृच्छति ।
तत्रैवाग्रिमाध्याये— पार्वत्युवाच ।
यदा कारणमेतस्य ये वा पारिषदा प्रभो । तदहं श्रोतुमिच्छामि कथयस्व दयानिधे ॥ १ ॥ ईश्वरउवाच ।
राधया सह गोविन्दं स्वर्णसिंहासने स्थितम् । पूर्वोक्तरूपलावण्यं दिव्यभूषांबरस्रजम् ॥ २ ॥ त्रिभङ्गमञ्जुसुस्निग्धं गोपीलोचनतारकम् । तद्बाह्ये योगपीठे च स्वर्णसिंहासनावृते ॥ ३ ॥ प्रत्यङ्गरभसावेशाः प्रधानाः कृष्णवल्लभाः । ललिताद्याः प्रकृत्यंशाः मूलप्रकृतीराधिका ॥ ४ ॥ संमुखे ललितादेवी श्यामला वायुकोणके । उत्तरे श्रीमती धन्या ऐशान्यां श्रीहरिप्रिया ॥५॥ विशाखा च तथा पूर्वे शैब्या चाग्नौ ततः परम् । पद्मा च दक्षिणे पश्चान्नैर्ऋते क्रमशः स्थिताः ॥ ६ ॥ योगपीठे केशराग्रे चारुचन्द्रावली प्रिया । अष्टौ प्रकृतयः पुण्याः प्रधानाः कृष्णवल्लभाः ॥ ७ ॥ प्रधाना प्रकृतिस्त्वाद्या राधा चन्द्रावती समा । चन्द्रावली चित्ररेखा चन्द्रा मदनसुन्दरी ॥ ८ ॥ प्रिया च श्रीमधुमती चन्द्ररेखा हरिप्रिया षोडशाऽद्याः प्रकृतयः प्रधानाः कृष्णवल्लभाः ॥९॥ वृन्दावनेश्वरी राधा तथा चन्द्रावली प्रिया । अभिन्नगुणलावण्यसौन्दर्य्याश्चर्यलोचनाः ॥१०॥ मनोहरा मुग्धवेषाः किशोरी वयसोज्ज्वलाः । अग्रसरास्तथा चान्या गोपकन्याः सहस्रशः ॥११॥ शुद्धकाञ्चनपुञ्जाभाः सुप्रसन्नाः सुलोचनाः । तद्रूपहृदयारूढास्तदाश्लेषसमुत्सुकाः ॥ १२ ॥ श्यामामृतरसे मग्नाः स्फुरत्तद्भावमानसाः । नेत्रोत्पलार्चिते कृष्णपादाब्जेऽर्पितचेतसः ॥ १३ ॥ श्रुतिकन्यास्ततो दक्षे सहस्रायुतसंयुताः । जगन्मुग्धीकृताकारा हृद्वर्तिकृष्णलालसाः ॥ १४ ॥ नानासत्त्वस्वरालापमुग्धीकृतजगत्त्रयाः । तन्निगूढरहस्यानि गायन्त्यः प्रेमविह्वलाः ॥ १५ ॥ देव-

कन्यास्ततः सव्ये दिव्यवेषा रसोज्ज्वलाः। नानावैदग्ध्यनिपुणा दिव्यभावनरान्विताः ॥ १६ ॥ सौन्दर्यातिशयाढ्याश्च कटाक्षातिमनोहराः ॥ निर्लज्जास्तत्र गोविन्दे तदङ्गस्पर्शनोत्सुकाः ॥१७॥ तद्भावमग्नमनसः स्मितसाचिनिरीक्षणाः। मन्दिरस्य ततो बाह्ये श्रियया विशदावृते ॥ १८॥ समानवेषवयसः समानबलपौरुषाः। समानगुणकर्माणः समानाभरणप्रियाः ॥ १६॥ समानस्वरसंगीतवेणुवादनतत्पराः। श्रीदामा पश्चिमद्वारे वसुदामा तथोत्तरे ॥२०॥ सुदामा च तथा पूर्वे किङ्किणी चापि दक्षिणे। तद्बाह्ये स्वर्णपीठे च सुवर्णमन्दिरावृते ॥ २१ ॥ स्वर्णवेद्यन्तरस्थे तु स्वर्णाभरणभूषिते। स्तोककृष्णांशुभद्राद्यैर्गोपालैरयुतायुतैः॥२२॥ शृङ्गवीणावेणुवेत्रवयोवेषाकृतिस्वरैः। तद्गुणध्यानसंयुक्तैर्गायद्भीरसविह्वलैः॥ २३ ॥ चित्रार्पितैश्चित्ररूपैः सदाऽऽनन्दाश्रुवर्षिभिः। पुलकाकुलसर्वाङ्गैर्योगीन्द्रैरिव विस्मितैः॥२४॥ क्षरत्पयोभिर्गोवृन्दैरसंख्यातैरुपावृतम्। तद्बाह्ये स्वर्णप्राचीरे कोटिसूर्यसमुज्ज्वले ॥२५॥ चतुर्दिक्षुमहोद्यानमञ्जुसौरभमोहिते। पश्चिमे संमुखे श्रीमत्पारिजातद्रुमाश्रये ॥ २६ ॥ तत्राधस्तु स्वर्णपीठे स्वर्णमन्दिरमण्डिते। तन्मध्ये मणिमाणिक्यदिव्यसिंहासनोज्ज्वले ॥ २७ ॥ तत्रापरि परानन्दं वासुदेवं जगत्प्रभुम्। त्रिगुणातीतचिद्रूपं सर्वकारणकारणम् ॥ २८ ॥ इन्द्रनीलघनश्यामं नीलकुञ्चितकुन्तलम्। पद्मपत्रविशालाक्षं मकराकृतिकुण्डलम् ॥ २६ ॥ चतुर्भुजं तु चक्रासिगदाशङ्खाम्बुजायुधम्। आद्यन्तरहितं नित्यं प्रधानं पुरुषोत्तमम् ॥ ३० ॥ ज्योतीरूपं महद्धाम पुराणं वनमालिनम्। पीताम्बरधरं स्निग्धं दिव्यभूषणभूषितम् ॥ ३१ ॥ दिव्यानुलेपनं राजच्चित्रिताङ्गमनोहरम्। रुक्मिणी सत्यभामा च नाग्नजिती सुलक्षणा ॥३२॥ मित्रविन्दाऽनुविन्दा च सुनन्दा जाम्बवती प्रिया। सुशीला

चाष्टमहिषी वासुदेवप्रियास्ततः ॥ ३३ ॥ उद्भूजिज्योःपारिष-
दावृत्तयोर्भक्तितत्पराः । उत्तरे सुमहोद्याने हरिचन्दनसंश्रये॥३४॥
तत्राधस्तु स्वर्णपीठे मणिमण्डपमण्डिते । तन्मध्ये हेमनिर्माण-
दले सिंहासनोज्ज्वले ॥ ३५ ॥ तत्रैव सह रेवत्या संकर्षणं
हलायुधम् । ईश्वरस्य प्रियानन्तमभिन्नगुणरूपिणम् ॥ ३६ ॥
शुद्धस्फटिकसंकाशं रक्ताम्बुजदलेक्षणम् । नीलपट्टधरं स्निग्धं
दिव्यभूषास्त्रगम्बरम् ॥ ३७ ॥ मधुपाने सदाऽऽसक्तं मधुघू-
र्णितलोचनम् । प्रवीरदक्षिणे भागे मञ्जुनाभ्यन्तरस्थिते ॥ ३८ ॥
संतानवृक्षमूले तु मणिमन्दिरमण्डितम् । तन्मध्ये मणिमाणि
क्यदिव्यसिंहासनोज्ज्वले ॥ ३९ ॥ प्रद्युम्नं च रतिंदेवींतत्रोप-
रिसुखस्थितम् । जगन्मोहनसौन्दर्यसारश्रेणीरसात्मकम् ॥४०॥
असिताम्भोजपुञ्जाभमरविन्ददलेक्षणम् । दिव्यालंकारभूषाभि-
र्दिव्यगन्धानुलेपनम् ॥ ४१ ॥ जगन्मुग्धीकृताशेषसौन्दर्याश्चर्य-
विग्रहम् । पूर्वोद्याने महारम्ये सुरद्रुमसमाश्रवे ॥ ४२ ॥ तत्रा-
धस्तु स्वर्णपीठे हेममण्डपमण्डिते । तस्य मध्यस्थिते राजद्दि-
व्यसिंहासनोज्ज्वले ॥ ४३ ॥ दिव्योषया समं श्रीमदविरुद्धं
जगत्पतिम् । सान्द्रानन्दघनश्यामं सुस्निग्धं नीलकुन्तलम्॥४४॥
सुभ्रून्नतलताभङ्गं सुकपोलं सुनासिकम् । सुग्रीवं सुन्दरं वक्षो-
मनोहरमनोहरम् ॥ ४५ ॥ किरीटिनं कुण्डलिनं कण्ठभूषावि-
भूषितम् । मञ्जुमञ्जीरमाधुर्याश्चर्यसौन्दर्यविग्रहम् ॥ ४६ ॥ प्रिय-
भृत्यगणाराध्यं यत्र संगीतकप्रियम् । पूर्णं ब्रह्म सदानन्दं शुद्ध-
सत्त्वस्वरूपिणम् ॥ ४७ ॥ तस्योर्ध्वं चान्तरिक्षे च विष्णुं
सर्वेश्वरेश्वरम् । अनादिमाद्यं चिद्रूपं चिदानन्दं परं वि-
भुम् ॥ ४८ ॥ त्रिगुणातीतमव्यक्तं नित्यमक्षयमव्ययम् । स-
मेघपुञ्जामाधुर्यं सौन्दर्यश्यामविग्रहम् ॥ ४९ ॥ नीलकुञ्चितसु-
स्निग्धकेशपाशातिसुन्दरम् । अरविन्ददलस्निग्धसुदीर्घचारुलो-

जनम् ॥ ५० ॥ किरीटकुण्डलोग्दण्डं शुद्धसत्त्वात्मभिर्वृतम् । आत्मारामैश्च चिद्रूपैस्तन्मूर्तिध्यानतत्परैः ॥ ५१ ॥ हृदयारूढ-तद्ध्यानैर्नासाग्रन्यस्तलोचनैः । क्रियतेऽहैतुकी भक्तिर्हृद्वर्ति-कायभाषितैः ॥ ५२ ॥ तत्सव्ये यक्षगन्धर्वसिद्धविद्याधरादिभिः । सुकान्तैरप्सरः संघैर्नृत्यसंगीततत्परैः ॥ ५३ ॥ तदङ्गभजनं-कामंवांछद्भिः कृष्णलालसैः । तदग्रे वैष्णवैः सर्वैश्चान्तरिक्षे सुखासने ॥ ५४ ॥ प्रह्लादनारदाद्यैश्च कुमारशुकवैष्णवैः । जनकाद्यैर्लसद्भावैर्हृद्बाह्यस्फूर्तितत्परैः ॥ ५५ ॥ पुलकाकुलस-र्वाङ्गैःस्फुरत्प्रेमसमाकुलैः । रहस्यामृतसंसिक्तै रर्धयुग्माक्षरोमनुः ॥ ५६ ॥ मन्त्रचूडामणिः प्रोक्तः सर्वमंत्रैककारणम् । सर्वदेव-स्य मन्त्राणां कैशोरमन्त्रहेतुकम् ॥ ५७ ॥ सर्वकैशोरमन्त्राणां हेतुश्चूडामणिर्मनुः । जपं कुर्वन्ति मनसा पूर्णप्रेमसुखाश्रयाः ॥ ५८ ॥ वाञ्छन्ति तत्पदाम्भोजे निश्चलंप्रेमसाधनम् । तद्बाह्ये स्फटिका-द्युच्चप्राचीरे सुमनोहरे ॥ ५९ ॥ कुङ्कुमैः सितरक्ताद्यैश्च तुर्दिक्षु समुज्ज्वलैः । शुक्लं चतुर्भुजं विष्णुं पश्चिमेद्वारपाल-कम् ॥ ६० ॥ शङ्खचक्रगदापद्मकिरीटादिविभूषितम् । रक्तं चतुर्भुजं विष्णुं पद्मशङ्खचक्रगदायुधम् ॥ ६१ ॥ किरीटकुण्ड-लोद्दीप्तंद्वारपालकमुत्तरे । गौरं चतुर्भुजं विष्णुं शङ्खचक्रगदायु-धम् ॥ ६२ ॥ किरीटकुण्डलाद्यैश्च शोभितं वनमालिनम् । पूर्व-द्वारे द्वारपालं गौरं विष्णुं प्रकीर्तितम् ॥ ६३ ॥ कृष्णवर्णं चतुर्बाहुं-शङ्खचक्रादिभूषणम् । दक्षिणद्वारपालं तु श्रीविष्णुं कृष्णवर्ण-कम् ॥ ६४ ॥ श्रीकृष्णचरितं ह्येतद्यः पठेत्प्रयतः शुचिः । शृणु-याद्वाऽपि योभक्त्या गोविन्दे लभते रतिम् ॥ ६५ ॥ इति

एवमेव च गौतमीयतन्त्रे वृहद्गौतमीयतन्त्रे वृहद्ब्रह्मसंहिताया मनन्तसंहितायां च विस्तरेण प्रतिपादितम् ।

एवमेव च पुरुषार्थबोधिन्यामाथर्वणोपनिषदि सप्तमप्रपाठकमार-

भ्य श्रूयते यथा—

❀ सप्तम प्रपाठक ❀

"अथ सुषुप्तौ रामः सुबोधमाधाय इत्र किमे देवि! कासौ कृष्णो योऽयंमद्भ्रातेति, तस्य का निष्ठा ब्रूहीति। सावै वाच राम! स त्वं भूः, भुवः, स्वः, महः, जनस्तपः, सत्यं, अतलं, वितलं, सुतलं, तलातलं, रसातलं, महातलं, पातालं एवं पञ्चाशत्कोटियोजनबहुलं स्वर्णाण्डं ब्रह्माण्डमिति अनन्तवैकुण्ठमिति अनन्तकोटिब्रह्माण्डानामुपरि कारुण्यजलोपरि महाविष्णोर्नित्यस्थलं वैकुण्ठम्।

स पृच्छति कथं शून्यमण्डले निरालम्बे, साप्युक्ता पद्मा आसनासीनः कृष्णध्यानपरायणः शेषदेवोऽस्मि। तस्यानन्तरोमकूपेष्वनन्तकोटिब्रह्माण्डानि अनन्तकोटि कारणजलानि तस्य सप्तकोटिसहस्रपरिमितानि प्रफणानि फणोपरि वैकुण्ठं विष्णुलोकमिति, रुद्रलोकं, शिववैकुण्ठं, दशकोटियोजनविस्तीर्णमिति। तदुपरि शतकोटियोजनविस्तीर्णं कृष्णस्थानं, गोलोकाख्यं माथुरमण्डलं, महत्पदं सुधामयसमुद्रेण वेष्टितमिति, तथाऽष्टदलपद्मकेशरमध्ये मणिपीठे सप्तावरणकमिति।

स पृच्छति किंरूपं स्थानं? किंरूपंपद्मम्? किं यन्त्रः? किं सेवकाः? किमावरणम्? इत्युक्ते साप्युक्ता गोकुलाख्ये माथुरमण्डले वृन्दाबनमध्ये सहस्रदलपद्ममध्ये कल्पतरोमूलेऽष्टदलकेशरे गोविन्दोऽपि श्यामः पीताम्बरधरो द्विभुजो मयूरपिच्छशिरो वेणुवेत्रहस्तो निर्गुणः सगुणो निराकारः साकारो निरीहःस चेष्टते विराजते इति। द्वे पार्श्वे चन्द्रावली राधिका चेति यस्या अंशे लक्ष्मी दुर्गा विजयादिशक्तिरिति, सम्मुखे ललिता, वायव्ये श्यामला, उत्तरे श्रीमती ऐशान्यां हरिप्रिया, पूर्वे विशाला, आग्नेय्यां श्रद्धा याम्यांपद्मा, नैर्ऋते भद्रा षोडशदलाग्रे चन्द्रावली, तद्वामे चित्ररेखा, तत्पार्श्वे चन्द्रावती तत्पार्श्वे मनोहरा।

तत्पार्श्वे योगानन्दा, तत्पार्श्वे परानन्दा, तत्पार्श्वे सत्यानन्दा, तत्पार्श्वे प्रेमानन्दा, तत्पार्श्वे किशोरिवल्लभा करुणा कुशलाद्याः एवं

विविधा गोप्यः सेवां कुर्वन्ति । इत्याथर्व्वणे परमरहस्ये पुरुषबोधिन्याः सप्तमः प्रपाठकः ॥ ७ ॥

ओं साप्युक्ता तस्य वाह्ये शतदलपत्रेषु योगपीठेषु रासक्रीडानुरक्ता गोप्यस्तिष्ठन्ति । एतद्वाह्ये स्वर्णप्राचीरं चतुर्द्वारपालाश्च तिस्रोगोप्यः तिष्ठन्ति । ततः पारिजातं समुह्य ततो दलपानिव ततः प्रथमावरणे पश्चिमे सम्मुखे स्वर्णमंडपे गोपकन्या द्वितीये श्रीदामादिः ।

तृतीये स्तोककृष्णादिः चतुर्थावरणे यमुनातटे सुरभ्यादिः पंचमावरणे पारिजातमूले रुक्मिण्यादिवेष्टितो वासुदेवोऽपि षष्ठावरणेऽनन्तोऽपि यमलार्जुनवृक्षश्च सप्तमा-वरणे शुक्लोविष्णुर्द्वारपालश्च स्वरहस्य संज्ञासा सहस्रं अवताराणि भवन्ति एतद्वाह्ये ब्रह्मकुण्डं ततः स्नात्वा द्रष्टुं समर्थो भवति । उत्तरपृष्ठे प्रथमे स्वर्णमंडपे देवकन्या द्वितीये सुदामादिः तृतीये सुभद्रादि चतुर्थेश्यामलादि पंचमे हरिचन्दनमूले रेवती सहितोबलभद्रोऽपि षष्ठे सिद्धगन्धर्व्वगणोऽपि सप्तमे रक्तवर्णो द्वारपालो विष्णुरिति एतद्वाह्ये श्यामकुण्डलम् इति तत्र स्नात्वा प्रेमभक्तिरिति । पूर्वे प्रथमावरणे योगपृष्ठेस्वर्णमण्डपे मुनिकन्या, द्वितीये वसुदामादिः, तृतीये भद्रादिः, चतुर्थे सुबलादिः, पंचमे सन्तानवृक्षमूले रत्यादिसंहितः प्रद्युम्नोऽपि, सप्तमे गौरवर्णो द्वारपालो विष्णुरिति ।

एतद्वाह्ये राधाकुण्डम् अत्र स्नात्वा गोप्याङ्ग भूत्वा कृष्णपूजार्हो-भवति । तद्दक्षिणे प्रथमावरणे श्रुतिकन्या, द्वितीये किंकिण्यादिः, तृतीये लवङ्गादिः, चतुर्थे कामधेनोर्वृन्दनम्, पञ्चमे कल्पतरोर्म्मूले उषया संहितोऽनिरुद्ध इति, षष्ठे सनकादिमुनयः, सप्तमे कृष्णवर्णोद्वारपालो-विष्णुरिति, एतद्वाह्ये रुद्रकुण्डम्, अत्र स्नात्वा विष्णुरूपीभवति । यमुनायां स्नात्वा दर्शनार्होभवति । राधाकृष्णयोरेकमासनञ्च, एकाबुद्धिः, एकं मनः, एकंज्ञानम्, एक आत्मा; एकपदमेका कृतिः, एकंब्रह्मतयासनम् हेममुरलिवाद्यं हैमं पद्ममिति मानसपूजायां जपेन, ध्यानेन, कीर्तनेन, स्तुतिमानसेन सर्वेण नित्यस्थलं प्राप्नोति नान्येन ।

इत्यथर्वणे पुरुषबोधिन्यामष्टमः प्रपाठकः ।

ओं स पृच्छति कियन्ति वनानि केषु दलेषु कानि क्रीडा स्थानानि इत्युक्ते साप्युक्ता भद्रश्रीलोहभाण्डीरमहातालखदरिका बहुलाकाम्यकुमुद-मधुवृन्दावनानि च, द्वादशवनानि, कालिन्द्या पश्चिमे सप्त, पूर्वे पञ्च वनानि तत्र उत्तमं गुह्यमस्त्विति । महावनं, गोकुलादि, खदिर, खण्डीर, नन्द-ववानि, नन्दीश्वरनन्दवनानि, नन्दखण्डबनम् पलाशाऽशोककेतकीसुगन्ध-मोदनं च । केलिबनं, भोजनवनं सुखप्रशाधनवनं, वत्साहरणवनं, शेष-शायिवनं, श्यामवनं, पूज्यवनं, दधिवनं, ग्रामवनं, वृषभानुवनं, संकेत-वनं, नीपवनं, रासवनं, क्रीडावनं, धूसरवनं, कोकिलवनं, सत्त्ववनम्, विल्ववनम्, कुमुदवनम्, उत्सुकवनं, चन्दनवनानि एतेन चतुरोत्तरच-तुर्थानि वनानि, नानालीलामयानि नित्यस्थलानि । चतुर्विंशत्यधिकशत-दलवाह्ये विष्णोर्य्योगपीठमिति, एतद्वाह्ये वैदूर्य्यप्राचीरंचतुर्द्वारं लक्ष-सूर्य्यसमुज्ज्वलम् कल्पद्रुमाकीर्णं एतद्वाह्ये सप्तावरणमिति वृन्दावनम् । यमुनावेष्टितम्, ब्रह्मादिसेवितम्, योगीन्द्रादिध्यानतत्परम्, कोकिलध्वनि-मनोहरम्, कपोतसारसुन्दरम्, मयूरनित्याढयम्, कुसुमवेणुरञ्जितम्, मन्दादिपवनसेवितम्, बसन्तऋतुसेवितम्, यत्र सुखं नास्ति दुःखं नास्ति, जरा नास्ति मरणंनास्ति, क्रोधाक्रोधनास्ति । यत्र पूर्णानन्दमयं किशोर-वयसः, नित्यमष्टकोणानिमितं योगपीठं तत्र माणिक्यसिंहासनेस्थितः गो-पीजनवल्लभो दिव्यव्रजवयोरूपो व्रजेन्द्रो ब्रजवालैकवल्लभोऽनादिरादिः श्रुतिमुखो द्विभुजो दलितांजनश्यामदेहो नीलकुन्तलशिखण्डदलमण्डितः तीर्य्यक्कृतगुञ्जावतंशशशांकमाणिक्यकिरीटशिरो गोरोचनतिलकः कर्ण-योर्मकरकुण्डले नाशाग्रे मुक्ताफलं सिन्दूरारुणाधरः तीर्य्यग्ग्रीवः श्रीवत्स-कौस्तुभधरो मुक्ताहारविभूषितः, वन्यस्रग्वी मालतीदामभूषितः, चन्दन-भूषितशरीरः करे कंकणकेयूरः कट्यांकिंकिणीपीताम्बरधरःगम्भीरनाभि कमलहृतजानुयुगलः पद्मवज्रादिचिन्हितपादतलः तदंशांशेन कोटिमहा-विष्णुरिति ।

एवं रूपं कृष्णचन्द्रं चिन्तयेन्नित्यशः सुधीरिति। तस्य आद्या प्रकृतीराधिका नित्या निर्गुणा सर्व्वालङ्कारशोभिता प्रसन्नाऽशेषलावण्य-सुन्दरी अस्मदादीनांजन्सदात्री यस्या अंशावह्वो ब्रह्मविष्णुरुद्रादयो भवन्ति एवं भूतस्य सिद्धिमहिम्ना सुखसिन्धुरंशेनोत्पन्नः। इति अथर्वणि पुरुषवोधिन्या नवमः प्रपाठकः।

ॐ पुरुषोत्तमो यस्यां निशायां श्रीपुरुषोत्तमाभिधायिनी पुरीयं साक्षात्ब्रह्म यत्र परमसंन्यासस्वरूपःकृष्णन्यग्रोधःकल्पपादपोयत्र लक्ष्मी जाम्ववन्ती राधिका कमला चन्द्रावती सरस्वती ललिता विमलादिरिति साक्षात् ब्रह्म स्वरूपो जगनाथः अहं सुभद्रा शेषांगस्तु ज्योतीरूप सुदर्शनो भक्तश्च एवं ब्रह्म पञ्चधा विभूतिर्यत्र मथुरा गोकुलं द्वारिका वैकुण्ठपुरी श्वेतद्वीपपुरी रामपुरी शिवपुरी यमपुरो पुरुषोत्तमपुरी नरसिंहपुरी नरनारायणपुरी कुवेरपुरी गणेशपुरी शक्रपुरी एता देव-तास्तिष्ठन्ति।

यत्र सुरसा पातालगङ्गा श्वेतगङ्गा रोहिणीकुण्डममृतकुण्डमि-त्यादि नानापुरी यत्रान्नब्रह्म परमपवित्रं शान्तोरसः केवला मुक्तिः सिद्धिः भूर्भुवः स्वर्महस्ततत्वं, यत्र भार्गवी यमुना समुद्रममृतमयं वासा वृन्दावनानि नीलपर्वतं गोवर्द्धनसिंहासनं योगपीठप्रसादं मणिमण्डपं विमलादि षोडश चन्द्रिका गोपी यत्र समुद्रतोरे चरन्त कामधेनुवृन्दं यत्र सिंहासनं ( या ) देवता आवरणानि।

तत्र न जरा न मृत्युर्नकालो न भंगो न जपो न विवादो न हिंसा न भ्रान्तिर्नंनिद्रा न स्वप्न एवं लीलाका मभरा स्वविनोदार्थं भक्ताः सोत्कण्ठताश्चास्यां लीलायां क्रीडन्ति।

काऽपि गोपस्त्रीरूपलक्ष्मी सा का च राधिका समा च कोऽप्य-क्रूरः स उद्धवः सनकोऽपि ब्रह्मा शिवश्च योगाश्च कानि च कर्ताच भोक्ताच केऽपि देवाः, ( कस्य ) देवा इव देवाश्च गायन्ति केचाऽन्ये कूर्मादयः अंशसमुद्राणिचाश्यंस्तज्ज्योतिः पुरुषः स्वभावा एकेऽपि ऋषयः

पितरो भ्रातरो बान्धवा सदारादय इत्यादि लीलारसिका भक्ता विहरन्ति। अत्रायं श्लोकः—

एको देवो नित्यलीलानुरक्तो भक्तव्यापी भक्तहृद्यान्तरात्मा।
कर्माध्यक्षो भक्तभावानुरक्तो लीलासाक्षी भक्तजीवो व्रजेन्द्रः॥

इत्याथर्वणे पुरुषसुबोधिन्यां दशमः प्रपाठक॥ १०॥ इति।

तदेतदुपनिषद्भागः सप्तमप्रपाठकमारभ्य दशमप्रपाठकपर्य्यन्तइह प्रकृतवाक्यार्थस्य सुखबोधाय पठितः। सा चेयम्पुरुषार्थबोधिन्युपनिषत्, अथर्ववेदे पिप्पलादशाखाया ब्राह्मणभागे गोपालतापिन्या सह तस्यैवोत्तरार्धतया पठ्यते, इति सिद्धान्तरत्नतट्टीकाकृतोबलदेवविद्याभूषणाः। गोपालतापिन्युपनिषत् पिप्पलादशाखायां पठ्यते, इति तु सुन्दरभट्टनारायणभट्टादयः सर्वेतट्टीकाकृतः। एवंच पञ्चप्रपाठकात्मिका पञ्चाध्यायात्मिका वा गोपालपूर्वतापिनी, षण्डचतुष्टयात्मक-प्रपाठकैकोत्तरतापिनीति षष्ठप्रपाठकपर्य्यन्ता समग्रगोपालतापिनी। सप्तमप्रपाठकाहारभ्य द्वादशतमप्रपाठकपर्य्यन्ता पुरुषार्थबोधिनीत्येवं सम्पद्यते। इति युक्तं तस्याः गोपालतापिन्यर्थसमवेतत्वम्। तस्या अत्र दशमप्रपाठकपर्य्यन्तभाग उद्धृतः। शेष पाठकद्वयम् "यत्तस्य पीठंहिरण्याष्टपलाशमम्बुजम्" इत्यत्र पठिष्यामीति। प्रश्नोपनिषदपि पिप्पलादशाखायां पठ्यते। नच कथमेकस्यां शाखायामेतावत्य उपनिषद इतिशंक्यम्। एकस्यामेव तैतरीयशाखायां-चित्तिशिक्षाब्रह्मवल्लीभृगुवल्लीनारायणोपनिषद्भेदात्पञ्चोपनिषद्दर्शनात्। काण्वमाध्यन्दिनादौचेशावास्यबृहदारण्यकाग्निरहस्यभेदादनेकोपनिषदांप्रत्यक्षदर्शनाच्चेतिबोध्यम्।

मू० तदुहोवाच हैरण्यो गोपवेशमभ्राभं कल्पद्रुमाश्रितम्। तदिह श्लोका भवन्ति। सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम्। द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरम्॥१॥ गोपगोपीगवावीतं सुरद्रुमतलाश्रितम्।

दिव्यालंकरणोपेतं रत्नपङ्कजमध्यगम् ॥२॥ कालि-न्दीजलकल्लोलसङ्गिमारुतसेवितम्। चिन्तयँश्चेतसा कृष्णं मुक्तो भवति संसृतेः ॥३॥

( एष मूलग्रन्थभागः ( पृ. ८६ पं. २० ) इत्यत्रैवपठनीयः )

'इहापि गोपवेषमि'त्यंशेन गोपवेषत्वमुक्त्वा "सत्पुण्डरीकनयन" मित्यादिमंत्रवर्णेन तादृशमेव गोपवेषत्वमुपपादयति। तस्मात् यथा गोविन्दगोपालादिनाम्नां सामान्यतः तादृशार्थप्रत्यायकत्वेऽपि प्रकृतोपनिषदि न तावन्मात्रमर्थः। अपि तु "गोभूमिवेदविदितः" "योऽसौ सूर्य्ये तिष्ठति योऽसौ सर्वेषु वेदेषु तिष्ठतियोऽसौसर्वैर्वेदैर्गीयते" "गोपाञ्जीवानसृष्टिपर्य्यन्तमालाति स गोपालोह्यों भवति" इत्यादिवक्ष्यमाणश्रुतिपर्य्यालोचनयाऽन्य एव विलक्षणोऽर्थः प्रतीयते तथा गोपवेषशब्दस्यान्य एव पूर्वोक्तलक्षणोर्थः। यथाच पद्मपुराणेपातालखण्डवृन्दावनमाहात्म्ये वृहद्ब्रह्मसंहितायां च चिन्तामणिमंत्रव्याख्यानावसरे—

वहिरंगैः प्रपञ्चस्य स्वांशैर्मायादिशक्तिभिः।
अन्तरंगैस्तथा नित्यविभूतैस्तैश्चिदादिभिः॥
गोपनादुच्यते गोपी राधिका कृष्णवल्लभा।
सर्वलक्ष्मीस्वरूपा सा कृष्णह्लादस्वरूपिणी।
अतः सा प्रोच्यते विप्र ह्लादिनी तु मनीषिभिः। इति।

गोपीचन्दनोपनिषदि च "गोपीनाम संरक्षिणी कुतः संरक्षिणी मृत्योर्भयाच्च संरक्षणी" इतिगोपीशब्दस्य सर्वातिशायिसर्वपालकत्वरूपोऽर्थोऽभिप्रेतस्तथाऽत्रापि गोपशब्दस्य तादृशरक्षकवेशविशेषार्थकत्वमेव निर्णेतुं युक्तम्। अत्र

"विष्णुर्गोपाः परमं पाति पाथः, प्रिया धामान्यमृता दधानः।
अग्निष्टा विश्वा भुवनानि वेद महद्देवानामसुरत्वमेकम्॥(ऋ.सं.३।३।२६)

इत्यादिवेदमंत्रेष्वपि गोपपदन्तथाऽनुसन्धेयम्। अत्र "परमं

पाथः" परमं व्योम "पाथोऽन्तरिक्षं यथा व्याख्यातम्" इति निरुक्तवाक्यात्। तथाच परमव्योमविष्णुपदादिवाच्यं भगवद्धामैव तत्, इत्यपि-व्योध्यम्। तथाच सर्वातिशायिसर्वजीवपालकत्वस्य 'रसो वै सः। रसं ह्येवायं लब्ध्वाऽनन्दीभवति। को ह्येवान्यात्कःप्राण्यात्" इत्युदाहृततैत्तरीयश्रुत्या रसानन्द एव निर्धारात् 'परमरसरूपः' इत्येव गोपशब्देनाभिप्रेतोऽर्थः। रसस्य च बहुविधत्वाद्भगवतश्च 'सर्वरसः' इतिश्रुतेः सर्वरसरूपत्वेऽपि शृङ्गारस्य प्रधानत्वादितरेषामपि रसानामंगांगिभावेन तत्र समाहारात् शृङ्गाररसरूपतयैवात्र विशेषतो भगवत्स्वरूपस्य निरूपयितुं युक्तत्वात् शृङ्गाररसरूपतयैवात्र भगवत्स्वरूपं निरूप्यते। इतिगोपवेशषब्देन तदेव रूपमुच्यते। युक्तं चैतत्, भगवतःसर्वरसरूपत्वेऽपि-शृङ्गाररसरूपत्वंमुख्यम्। अत एव 'शृङ्गारोविष्णुदैवतः इतिरसशास्त्रसिद्धान्तः। वात्सल्यसख्यदास्यादीनां तत्राप्यंगतया सत्त्वात्, एषु च शृङ्गारप्रवेशासंभवात्। हास्यकरुणादीनामपि तत्रांगभावेन सत्त्वाच्च। नच शान्त एव प्रधानः, तस्यापि 'श्रीनारायणदैवतः' इतिरसशास्त्रात्-भगवद्दैवत्वनिश्चयात् तथा तद्रूपमेव स्वरूपं निरूपणीयमिति बाच्यम्। तथापि तस्य मनोनिष्ठविषयोपरमरूपत्वेन दुःखाभाव एवं पर्य्यवसानेन साक्षात् सुखरूपत्वाभावात्। अतएव तस्य विषयोपरनिलक्षणो वैराग्यापरपर्य्यायो निर्वेद एव स्थापिभावः। एवंच तस्य हास्यरसादीनामिव साक्षात्परम्परया रसशास्त्रोक्तप्रणाल्या सुखजनकत्वादेव रसरूपत्वम्। रसस्य परमाकाष्ठा तु साक्षात्सुखरूपत्व एव भवति "रस्यते-इतिरसः" इतिव्युत्पत्या रसनीयतत्त्वस्य रसपदार्थत्वात् प्रयोजनान्तरेच्छानधीनरसनीयत्वं तु 'आनन्दमात्रस्यैव' साक्षादानन्दरूपत्वं तु रसेषुशृङ्गारस्यैव। निसर्गप्रेमास्पदत्वं हि आनन्दस्यासाधारणो धर्म्मः। ब्रह्मणोऽपि स एव मुख्यो धर्मः" तदेतत्प्रेयः पुत्रात्प्रेयोवित्तात्प्रेयोऽन्यस्मात्सर्वस्मात् "इतिश्रुतेः। शृङ्गारश्च रतिस्थायिकः। रतिश्च प्रेमा च इत्यनर्थान्तरम्। प्रेमा च आह्लादात्मा-आनन्दस्वरूपःसन्नेवानन्दधर्म इति ॥

न च शृङ्गाररसस्य विषयसंयोगाभिव्यज्यमानत्वेन बाह्यसाधनसापेक्षत्वात्, विषयोपरमे तदुपरमाद्विकारित्वात्परिणामदुःखयुक्तत्वादनित्यत्वाच्च नोत्कृष्टत्वसंभव इति वाच्यम् भगवद्रूपालौकिकशृङ्गारस्य सर्वबाह्यसाधननिरपेक्षत्वान्नित्यत्वाच्च नोक्तदूषणावकाशः ॥ लौकिकशृङ्गारस्यापि तादृशदोषसम्पन्नत्वेन तादृशदोषरहितशान्तरसदृष्ट्या परिणामतोनिकृष्टत्वेऽपि रसनीयत्वदृष्ट्या साक्षादानन्दरूपत्वात्तस्यैवोत्कृष्टत्वं स्वरूपतः । यथा सितोपलशर्करादीनामनेकरोगजनकत्वेन अनेकरोगनाशक रसान्तरापेक्षया कार्य्यतो निकृष्टत्वेऽपि मधुररसरूपत्वाद्रसनीयत्वदृष्ट्या स्वरूपतः सर्वरसोत्कृष्टत्वमेवेति ।

तस्मात् सर्वरसप्रधानत्वात्सर्वरसमयत्वात्सर्वरसबीजत्वाच्च शृङ्गार एव परमो रसः। इतितद्रूपतयैव रसरूपः परमस्तमाऽत्र विशेषतोनिरूपितो भवति । शृङ्गारश्च—

सुखप्रायेष्टसम्पन्न ऋतुमाल्यादिसेवकः ।
पुरुषः प्रमदायुक्तः शृङ्गार इतिसंज्ञितः ॥
ऋतुमाल्याद्यलंकारैः प्रियजनगन्धर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति ॥

इति नाट्यशास्त्रे षष्ठाध्याये भरतवाक्यात्, शृङ्गाररसस्य तादृशोपकरणविशिष्टत्वात्, तादृशरूपगुणपरिकरपरिच्छदधामादिविशिष्ट एव भगवान्, अत्र गोपशब्देनोच्यते इत्युक्तमेव । वस्तुतस्तु "पुरुषः प्रमदायुक्तः शृङ्गार इति शब्दितः, इतिभरतवाक्ये, पुरुषपदार्थः पुरुषोत्तमः शृङ्गाररसाधिदेवो विष्णुरेव परमः । प्रमदापदेन च परमानन्दरूपा परमलक्ष्म्येव, पुरुषान्तरग्रहणे "शृङ्गार इति संज्ञितः" इत्यंशस्यानन्वयापत्तेः। पुरुषान्तरस्य शृङ्गाररसालंबनत्वसंभवेऽपि शृङ्गाररसरूपत्वाभावेन शृङ्गाररसनामधेयत्वासंभवात् । भगवतस्तु तदधिदैवतत्वेन तद्रूपत्वसंभवाद्युक्तं शृङ्गारपदाभिधेयत्वमिति । पुरुषपदवाच्यत्वमपि तस्यैव, परमपुरुषस्यैवानुचारेण पुरुषपदवाच्यत्वात्–"भगवानिति शब्दो वै तथा

पुरुष इत्यपि । वर्तते निरुपाधी च वासुदेवेऽखिलात्मनि" इतिपाद्मोत्तर-खण्डे पार्वतीं प्रति शिववाक्यात् "पुराणपुरुषोयज्ञःपुरुषोनरकान्तकः" इति-नैघंटुकोक्तेश्च। तस्मादुक्तभरतवाक्ये पुरुषपदार्थःशृङ्गाराधिदेवः शृङ्गाररूपः परमोविष्णुरेवः वाच्यः । प्रमदापदेन शृङ्गारस्थायिभावरूपरतिप्रेमाद्य-परपर्य्याया महाभावरूपाभगवद्भिन्ना महालक्ष्मी एव। तदेवं "आत्मैवेदमग्र आसीत्पुरुषविध" इत्युपक्रम्यः "स नैव रेमे "इममेवात्मानंद्वेधाऽपातयत्प-तिश्च पत्नीचाभवताम्" इतिबृहदारण्यकप्रसिद्धः परमप्रेमानन्दरसघन-पुरुषोत्तम एव परमश्रीयुक्तः भरतवाक्यविषयः, सएवचावात्रापि गोपवेष-पदेन निर्दिष्टः ।

नच भरतेन यस्य विष्णोः शृङ्गारसाधिदेवत्वमुक्तम्, स न वेदान्तवेद्यः परब्रह्माख्यो विष्णुः । अपितु पादेन्द्रियाद्यधिष्ठातृविष्णु-वत् परमविष्ण्वंशभूतः कश्चिदन्य एवेति वाच्यम् । यतस्तस्मिन्नेव नाट्यशास्त्रे षोडशाध्याये—

विष्णुः सृजति भूतानि विष्णुः संहरते प्रजाः ।
विष्णुप्रसूतं त्रैलोक्यं विष्णुर्लोकाधिदैवतम् ॥

इत्यादिना "यतोवा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यं प्रयन्त्यभिसंविशन्ति" "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आ-नन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति इत्यादितैत्तरीयाद्युक्त-परब्रह्मलक्षणश्रुतिसमन्वयनेन परब्रह्माख्यविष्णोरेव विषयीकरणात्। तस्मात् तादृशस्वलक्षणलक्षित एव विष्णुः शृङ्गाररसाधिदेवत्वेन भरतस्याभिमत इति युक्ततमः सिद्धान्तः । विष्ण्वन्तरपरिग्रहे बीजाभावात् प्रकृतहानाप्र-कृताभ्यामप्रसंगाच्च । नच विष्णोः शृङ्गाररसाधिदेवत्वेऽपि शृङ्गाररस-रूपत्वे प्रमाणाभाव इत्यपि वाच्यम् । यो देवो यदधिदेवता भवति स तद्विग्रह इति सामान्यन्यायः । यथा वाय्वग्निवरुणादयः, ते हि वायुतेजोजलादीनामधिदेवता इति वाय्वग्निजलविग्रहा इति । तथा शृङ्गाररसाधिदेवः श्रीपुरुषोत्तमः इति शृङ्गाररसविग्रहः । किंच यत्र यस्य

निरतिशयत्वं तस्यैव तदाधिदैविकत्वंयुक्तम्। भगवाँश्च शृङ्गाररसाधिदेव इति तत्र स्वरूपतोधर्मतश्च शृङ्गाररसस्य निरतिशयत्वं वाच्यम्। युक्तं-तत्, शृङ्गारो हि उत्तमस्त्रीपुरुषप्रकृतिः, पुरुषोत्तमश्च सर्वोत्तमः पुरुषः, श्रीश्च सर्वोत्तमा नारी। तदेतत्सर्वं सूत्रितम्—ऋग्वेदे द्वितीयेऽष्टके द्वितीयाध्याये षड्विंशे विष्णुसूक्ते—

"यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति।
यो जातमस्य महतो महि ब्रवत्सेदु श्रवो युज्यं चिदभ्यशत्॥"ऋ.सं.२।२।२६।२

अस्यार्थः—'पूर्व्याय" पूर्वेषां ब्रह्मादीनामपि पूर्वाय, आदिकारणाय जगद्बीजपुरुषायेत्यर्थः। "वेधसे" अखिलजगत्कर्त्रे प्रकटितसर्वविश्वाय। एवं सति वृद्धत्वं शीर्णत्वं च स्यादित्याह "नवीयसे" अत्यन्तनवीनायेत्यर्थः। एतावता सर्वजगद्बीजपुरुषत्वेऽपि तस्य नित्यनवयौवनत्वं निर्धारितम्। अत एवाह "सुमज्जानये" इति। सुष्ठु मादनशीला, स्वानुरूपा नित्यनवयौवना परमप्रेमाह्लादस्वरूपा श्रीर्जाया यस्येति तदर्थः। "विष्णवे" सर्वव्यापनशीलाय स्वरूपगुणशक्तिभिः सर्वतः परिपूर्णाय परमपुरुषायेत्यर्थः। एवं भूताय तस्मै 'यः' जीवः- 'ददाशति' आत्मानमात्मीयंच ददाति भक्तिभावेन समर्पयति। अथच—"यो जातमस्य महतो महि ब्रवत्" यश्च भक्तः 'अस्य' विष्णोः 'जातम्' जन्मादि। 'महतो' ब्रह्मादेरपि 'महि' पूजनीयं 'ब्रवत्' कीर्तयति। 'सेदु' यथाशीघ्रम् "युज्यंचित्" योग्यं चिन्मयं स्थानम् "अभ्यशत्" प्राप्नोति। इत्येवं सायणभाष्यानुसारेण बोध्यः। तथाचात्र 'नवीयसे" सुमज्जानये" इति पदद्वयेन पूर्वोक्तार्थ एव शृङ्गाररसाधिदैवतभावपूर्णः श्रीपुरुषोत्तमयुगलरूपः, पूर्व्यत्वादिना विशेषितः परमकाष्ठापन्न एव सूत्ररूपेणोक्तः। अतएव च तत्पूर्वविष्णुसूक्तमन्त्रे—"बृहच्छरीरो विमिमान ऋग्भिर्युवा कुमारः प्रत्येत्याहवम्" (ऋ. सं. २। २। २५। ६।) इतितादृशयुगलभावपोषकनित्यनवयौवनत्वस्य स्फुटीकरणाय तयोर्दम्पत्योर्युवत्वकुमारत्वयोर्नित्यसाहित्यमुक्तम्। उपबृंहितंच पद्मपुराणे उत्तरखण्डे "बृहच्छरीरो

विमिमान ऋग्भिः। युवा कुमारत्वमुपेयिवान् हरिः। रेमे श्रियाऽसौ जगतां जनन्या स्वज्योत्स्नया चन्द्र इवाम्बुराशौ" इति। अतएव वृन्दावनमाहात्म्ये च तथैव "न राधिका समा नारी न कृष्णसदृशः पुमान्। वयः परं न कैशोरात्स्वभावः प्रकृतेः परः" इति। अतएवच भागवते "साक्षान्मन्मथमन्मथः' इत्यादिवाक्यानि। कामाख्यदेवविशेषस्य तु शृङ्गाररसोद्दीपकत्वान्मन्मथत्वम्। भगवतस्तु साक्षाच्छृङ्गाररसरूपत्वादेव मन्मथत्वम्।

किञ्च लौकिकमन्मथोऽपि तत्सापेक्ष एव मन्मथः। तदुक्तं ब्रह्मसंहितायां ब्रह्मणा "आनन्दचिन्मयरसात्मतया मनस्सु यः प्राणिनां प्रतिफलन्स्मरतामुपेत्य लीलायितेन भुवनानि जयत्यजस्रम्। गोविन्दमादिपुरुषं तमहं भजामि" इति। अत एव तादृशनिरतिशयरसात्मनो भगवतः श्रीपुरुषोत्तमस्य प्रेमसौन्दर्य्यमाधुर्य्यरसास्वादनरूपोपासनायां कामबीजस्य कामगायत्र्याः काममालामंत्रस्य च विनियोगोवक्ष्यते। नह्येमे मंत्रा देवान्तरालम्बनाः फलातिशयायात्र पुरुषोत्तमोपासनायां विनियुक्ताः, इतिवक्तुं युज्यते "क्लीमोंकारयोरेकत्वं पठ्यते ब्रह्मवादिभि" रितिवक्ष्यमाणोत्तरतापिनी श्रुतेः, ओंकाररूपत्वात्तस्य। ओंकारस्य च पुरुषोत्तमैकनिष्ठत्वस्य नैसर्गिकत्वात्। एवं च गायत्र्या यथा प्रणवविस्तारत्वात् ब्रह्मनिष्ठत्वं तथाऽनंगगायत्र्या अपि प्रणवाभिन्नकामबीजविस्तररूपत्वात्तन्निष्ठत्वमेव। तस्मान्न कामबीजादीनां देवान्तरपरत्वम्, फलातिशयाय प्रणववद्देवतान्तरोपासनायामेव विनियोगात्॥ कामबीजस्य कामगायत्र्याः काममालामंत्रस्य च गायत्रीसमानार्थकत्वेऽपि प्रेमशृङ्गाररसोद्दीपकत्वांशस्याधिकतया शृङ्गाररसरूपत्वेन परब्रह्मरसास्वादौपयिकोपासनायां नितरामुपयुक्तत्वादत्र तस्यैव विशेषत उपयोगः। इति तेषामेवात्रपाठः। यथा च कामबीजकामगायत्रीकाममालामंत्रप्रतिपाद्यत्वं श्रीपुरुषोत्तमस्य तथाऽग्रे "कामादिकृष्णायेत्येकं पदम्," इत्यत्र, "अनङ्गगायत्र्या यथावदालिख्य" इत्यत्र च वक्ष्यते। एवंच 'काम्यते यः स कामः' इति-

कर्मव्युत्पत्त्या श्रीपुरुषोत्तम एव कामशब्दस्यानौपचारिकोऽर्थः। तस्यैव स्वभावतस्त्रैकालिकतया च सर्वदोषविनिर्मुक्तपरमानन्दरसघनत्वेन निसर्गप्रेमास्पदतयाऽन्येच्छानधीनेच्छाविषयत्वात्। "एवं तत एव तस्मिन्नेव मन्मथादिशब्दोऽपि व्युत्पाद्यः, प्रेमानन्दरसघने तत्रैव मनसः कृतकृत्यतया परमलयसंभवात्। अन्यत्रापि तत्सम्बन्धादेव लयसंभवाच्च। तदुक्तं भागवते यज्ञपत्नीं-प्रति स्वयमेव "प्राणबुद्धिमनस्स्वात्मदारापत्यधनादयः। यत्सम्पर्कात्प्रिया आसन्ततः-कोऽन्वपरः, प्रियः इति।'' द्वितीये "अहमात्मात्मनां धातः प्रेष्ठश्च प्रेयसामपि" इति॥ एतेन "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयान्यस्मात्सर्वस्मात्'' इतिश्रुतिरेवोपबृंहिता। अतएव श्रीशंकरभगवत्पादाचार्य्यैर्ब्रह्ममोहलीलामधिकृत्य प्रबोधसुधाकरे उक्तम् "तदेतत्प्रेयःपुत्रात्प्रेयोवित्तात्प्रेयोऽन्स्माच्च सर्वस्मात्। अन्तरतरं यदात्मेत्युपनिषदःसत्यताभिहिता"॥ इति। तस्मात्सर्वं समंजसमितिसंक्षेपः। एतद्विग्रहस्य सच्चिदानन्दघनत्वं तु किञ्चिदग्रेनिरूपयिष्ये इति।

"अभ्राभमिति"॥ अभ्रं मेघस्तद्वदाभा कान्तिर्यस्य तथाभूतम्, इषच्छ्यामामित्यर्थः। अगाधवस्तूनां समुद्राकाशादीनामतिस्वच्छानामपि, इषच्छ्यामतया प्रमीयमाणत्वं दृश्यते तच्च रूपान्तरादविरुद्धमेव स्वाभाविकमेव च। व्यष्टिजलादावगृह्यमाणत्वेऽपि, अगाधतया गृह्यमाणावस्थायां सर्वदैवानुभावादबाधाच्च। यद्वा तेजोगतशौक्ल्ये जलादिशौक्ल्यविलक्षणभास्वरत्वादिवत्-जलरूपेपीषच्छ्यामत्वंस्वरूपसिद्धमेव यदगाधतायामेव प्रतीयते, तदेव समुद्रजले मेघे च प्रतीयते। मेघस्यापि जलराशिरूपत्वादन्यथा केवलशौक्ल्यस्यैव मेघे भानात्। एवंच भगवद्रूपे मेघदृष्टान्तीकरणस्यायमेवाभिप्रायः यदानन्दस्य स्वतः प्रकाशत्वेन स्वच्छत्वेऽपीषच्छ्यामत्वमस्त्येव तदेवागाधानन्दस्वरूपे भगवत्स्वरूपे प्रतीयते-इति। तच्च गौरत्वाविरुद्धमेव। अतएव क्वचित्, तै० नारायणोपनिषदादौ "ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिंगलम्" (तै. नारा० अ० ) इत्यादौश्यामत्वं समुपदिश्यते। क्वचिच्च, उत्तरनारायणे मुण्डकोपनिषदि च "आदित्यवर्णं तमसः परस्तात्"

"यदा पश्यः पश्यते रुक्मवर्णं," मित्यादौ वर्णान्तरमुपदिश्यते, इति न विरोधः।

वस्तुतस्तु "पुरुषं कृष्णपिङ्गलम्, इति तैत्तरीयनारायणानुवाकमन्त्रे श्रीपुरुषोत्तमे युगलरूपे वामांशे श्रीविग्रहे गौररूपत्वं दक्षिणांशे पुरुषविग्रहे श्यामरूपत्वमुपदिष्टम्। "आदित्यवर्णं तमसः परस्तात्" इतिमन्त्रेऽपि तथैव रूपद्वयमुक्तम्। आदित्यवर्णेऽपि–"अथ यदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमः" (छा.उ.श.१।६।६) इतिछान्दोग्ये स्पष्टं रूपद्वयोक्तेः। मण्डलांशे श्यामत्वस्य प्रभांशे शुक्लत्वस्य प्रत्यक्षदर्शनाच्च। अन्यत्र हिरण्यवर्णत्वोक्तिस्तु कमनीयत्वमामात्राभिप्रायेणेतिबोध्यम्।

किंच शृङ्गाररसरूपत्वात् श्यामावभासः–"श्यामोभवतिशृङ्गार" इतिरसशास्त्रोक्तेः। शान्तरसरूपत्वाच्छुक्लत्वावभासः। "कुन्देदुसुन्दरच्छायः श्रीनारायणदैवतः" इत्यपि बोध्यम्। इदंच श्यामरूपं पुरुषविग्रहे सर्वातिशायिमाधुर्य्यपोषकम्। तदुक्तं पाद्मपुराणे न राधिका समा नारी न कृष्णसदृशः पुमान्। वयः परं न कैशोरात्स्वभावः प्रकृतेः परः। ध्येयं कैशोरकं ध्येयं वनंवृन्दावनंवनम्। श्याममेव परंरूपमादिदेवः परोरस" इति। अतएव लोके सर्वातिशायिसुन्दरतया प्रसिद्धे कामदेवविग्रहेऽपि श्याममेव रूपं स्मर्य्यते–पुराणादिषु-इति। 'तरुणमिति' नवयौवनमित्यर्थः। यौवनोद्भिन्नकैशोरमितियावत्। यत्र वयसि बालत्वयुवत्वयोःशाश्वतसामानाधिकरण्यं तदेव कैशोरम्'' तस्य परमा काष्ठा पञ्चदशवर्षआपूर्य्यमाणे वयसि भवति। तदेवं यौवनोद्भिन्नकैशोरनवयौवनादिश०दैर्व्यपदिश्यते। तदेव शाश्वते भगवत्स्वरूपे वर्तते। तदुक्तं ऋग्वेदे विष्णुसूक्ते–"बृहच्छरीरो विमिमान ऋग्भिः युवा कुमारः प्रत्येत्याहवम्" इति। व्याख्यातं च पद्मपुराणे उत्तरखण्डे त्रिपाद्विभूतिनिरूपणे पार्वतींप्रति भगवता शिवेन–"बृहच्छरीरोऽविमिमामानरूपो युवा कुमारत्वमुपेयिवान्हरिः। रेमे श्रियाऽसौ जगतां जनन्या स्वज्योत्स्नया चन्द्र इवा-

म्बुराशौ" इति। युवाऽपि कुमारत्वं बालत्वमुपेयिवान्प्राप्तवान्, इति तदर्थः। तदेतत्पूर्वमेवोक्तम्। पाद्मे वृन्दावनमाहात्म्येऽप्येवमेव—

न राधिका समा नारी न कृष्णसदृशः पुमान्। वयः परं न कैशोरात्स्वभावः प्रकृतेः परः॥ १॥ ध्येयं कैशोरकं ध्येयं वनं वृन्दावनं वनम्। श्याममेव परं रूपमादिदेवः परो रसः॥२॥ बाल्यं पञ्चमवर्षान्तं पौगण्डं दशमावधि। अष्टपञ्चमकैशोरं सीमा पञ्चदशावधि॥ ३॥ यौवनोद्भिन्नकैशोरं नवयौवनमुच्यते। तद्वयस्तस्य सर्वस्वं प्रपञ्चमितरद्वयम्॥ ४॥ बाल्यपौगण्डकैशोरं वयो वन्दे मनोहरम्। बालगोपालगोपालं स्मर गोपालरूपिणम्॥ ५॥ वन्दे मदनगोपालं कैशोराकारमद्भुतम्। यमाहुर्यौवनोद्भिन्नं श्रीमन्मदनमोहनम्॥६॥ अखण्डानन्दपीयूषरसानन्दमहार्णवम्। जयति श्रीमतेगूढं वपुः कैशोररूपिणः॥ ७॥ एकमप्यव्ययं पूर्णं वल्लवीवृन्दमध्यगम्। ध्यानगम्यं प्रपश्यन्ति रुचिभेदात्पृथक्पृथक्॥ ८॥ यन्नखेन्दुरुचिर्ब्रह्म धेयम्ब्रह्मादिभिः सुरैः। गुणत्रयमतीतं तं वन्दे वृन्दावनेश्वरम्॥ ९॥ (प. पु. पा. खं. वृ. मा. ८। ५१)

एवमेव ब्रह्मवैवर्त ब्रह्मखण्डादौ पुराणान्तरे च निरुपितम्। यथा चेदमेव रूपं सर्वश्रुतिगोचरं तथापपादितंमया वेदान्ततत्त्वविन्दाविति ततोऽवधेयम्।  ❀ कल्पद्रुमाश्रितमिति ❀

अत्र "किन्तद्रूपमितिस्वरूपमात्रजिज्ञासायां सर्वोपकरणविशिष्टत्वेनैव तत्स्वरूपनिरूपणात् तस्योपकरणान्यपि सर्वाणि परमानन्दरसात्मकतया निजात्मकचिच्छक्तिविलासरूपत्वेन स्वात्मकत्वेन स्वताभिन्नाभिन्नतया स्वरूपकोटिप्रविष्टान्येवेत्यपि सूचितम्। यथोपबृंहितम्—पञ्चरात्रे ब्रह्मसंहितायाम् पञ्चमाध्याये— (अ० ५। ६६)

श्रियः कान्ताः कान्तः परमपुरुषः कल्पतरवो द्रुमा भूमिश्चिन्तामणिगणमयी तोयममृतम्॥ कथा गानं नाट्यं गमनमपि वंशी

प्रियसखी । चिदानन्दं ज्योतिः परमपि तदास्वाद्यमपि च ।। इति ।।

अत्र भोक्तृ भोग्यभोगोपकरणानांच सर्वेषां चिदानन्दरूपत्वं निरूपयन् तथात्वं सूचयति । तथैतद्दृढीकरणायाह–"तदिह श्लोका भवन्ति" इति । इयमृग्रूपश्लोकोद्धरणप्रक्रिया बृहदारण्यकादावपि दृश्यते, यथा तत्र चतुर्थाध्याये–"तदेष श्लोको भवति" "तदेव सक्तः सह कर्मणेति" इत्यादि । तदित्यव्ययम् । एवं च यस्मात् निरुक्तलक्षणकमेव परब्रह्मणः स्वरूपं तस्मात् मन्त्रभागे शाखान्तरे वा एतादृशार्थप्रतिपादकाः श्लोका भवन्ति, इत्यर्थः । एतेन तादृशार्थे मंत्रसम्मतिः ब्राह्मणेन प्रदर्शिता । के ते श्लोका–इतिश्लोकान्पठति । 'सत्पुण्डरीकनयनमि'त्यादि ।

'द्विभुजमि'ति । एतेन द्विभुजत्वमेव तस्य सर्वोत्कृष्टम्, इति सूचितम् । तदुक्तं पद्मपुराणे वृन्दावनमाहात्म्ये शिवेन–(प पा खं.वृ.अ.८।४६)

भुजद्वयवृतः कृष्णो न कदाचिच्चतुर्भुजः ।
गोप्यैकया वृतस्तत्र परिक्रीडति सर्वदा ।। इति ।।

युक्तं चैतत् 'पुरुषविधः" "अन्वयं पुरुषविधः" इत्याद्युदाहृतश्रुतीनामपि तथैव संगतेः । पुरुषविधत्वं हि पुरुषाकारत्वं, तत्र दृष्टान्तीभूताः नराः सर्वे द्विभुजा एव स्वभावतः, अतः पुरुषविधत्वेन निरूप्यमाणे ब्रह्मण्यपि द्विभुजत्वमेव सर्वाधिकतया निश्चीयते इत्युपपादितं मया युग्मतत्त्वसमीक्षायां महता प्रपंचेन सिद्धान्तविन्दौच । श्रीबलदेवविद्याभूषणेनापि सिद्धान्तरत्ने इति ततोऽवधेयम् ।

।। ज्ञानमुद्राढ्यमिति ।।

ज्ञानमुद्रा–वंशी । ज्ञानं, ज्ञायतेऽनेनेतिव्युत्पत्त्या शब्दब्रह्मात्मको- वेदः, स मुद्रयते प्रकाश्यतेऽनया इतिव्युत्पत्तेः:—

शब्दब्रह्ममयं वेणुं वादयन्तं मुखाम्बुजे ।। विलासिनीगणवृतं स्वैस्वैरंशैरभिष्टुतम् ।। अथ वेणुनिनादस्य त्रयी मूर्तिमूती सती स्फुरन्ती प्रविवेशाशु मुखाब्जानि प्रजापतेः । (ब्र.स.अ.४।२७)

इतिब्रह्मसंहितायां नारदपञ्चरात्रे वेणोः शब्दब्रह्ममय.त्वस्य वेद-

त्रयीप्रादुर्भावकत्वस्य च निरूपणात् । तेन ज्ञानमुद्रापदेन योगशास्त्र-प्रसिद्धा हस्तविन्यासविशेषरूपा ज्ञानमुद्रा नात्राभिमता "गोपगोपीगवा-वीतम्" इति गोपविलासिनीगणवृते शृङ्गाररसमयविग्रहेऽत्र तदुपयोगा-भावात् रसाभासापत्तेश्च। तादृशश्रीपुरुषोत्तमध्यानप्रसंगे पुराणपञ्चरात्रा-दिषु सर्वत्र मुरलीशोभितत्वेनैव निरूपणात्। अत्राप्युत्तरतापिन्यां "वेणु-शृङ्गधरं तु वा" इत्येव वक्ष्यतिचेति ।

ज्ञानमुद्रया आढ्यम् उत्कर्षयुक्तमित्यर्थः ॥ उत्कर्षश्चात्र तया निर-न्तरं रसोद्दीपकगानशीलत्वेनोद्दीप्तरसमयनिखिलनिजपरिकरविशिष्टत्वे-नोद्दीप्तरसमयनिजस्वरूपत्वेन च बोध्यम् ॥ वक्ष्यति च "वेणुनादविनो-दाय" "वल्लवीवदनांभोजमालिने नृत्यशालिने" ( पू. ता. ६ । ७ ) इति ।

❀ 'ईश्वरम्' ❀ इति

अविद्यादिसर्वविधक्लेशरहितनिरंकुशपारमैश्वर्य्यवत्त्वेन सदा स-म्पन्नमित्यर्थः । तदेतत् परमदेवत्वादिचतुष्टयनिरूपणादेव सिद्धमिति तस्यात्र पुनरनुवादः तथात्वेन सर्वदानुचिन्तनार्थम् , वक्ष्यमाणपरिकर-गोप्यादिभिः सह रममाणोऽपि स तथाविध एव न यातुचिदपि कदाचि-दपि निजस्वरूपमाहात्म्यं विस्मरति, इति सूचनार्थं च । तेन रसलीलायां न भगवता निजमाहात्म्यानुसंधानं न वा रसलीलाचिन्तकानां भगवन्मा-हात्म्यचिन्तनस्यावश्यकतेति कस्यचित्प्रलापाः प्रत्युक्ता इति ॥ एतेन "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिःसर्वमिदं प्रशास्ति" "एष-सर्वेश्वर एष भूतपालः" ( बृ. उ. ४ । ४ । २२ ) इत्यादिश्रुतयःस्वसङ्गती-कृताः । इति  × गोपगोपीगवावीतमिति ×

गोपाः-निरुक्त-गोपरूपस्य भगवतः सायुज्यं प्राप्ताः नित्यमुक्ताः बद्धमुक्ताश्च-श्रीदामवसुदामाद्या सखायः । गोप्यस्तु तादृशगोपरूपस्य भगवतोऽनुरूपसौभगाः प्रेयस्यः ताः सर्वाः लक्ष्म्य एव । तदुक्तम्–

चिन्तामणिप्रकरसद्मसु कल्पवृक्षलक्षावृतेषु सुरभीरभिपालय-न्तम् ॥ लक्ष्मीसहस्रशतसंभ्रमसेव्यमानं गोविन्दमादिपुरुषं

तमहं भजामि ॥ १ ॥ श्रियः कान्ताः कान्तः परमपुरुषः कल्पतरवो द्रुमा भूमिश्चिन्तामणिगणमयी तोयममृतम् । कथा गानं नाट्यं गमनमपि वंशी प्रियसखी । चिदानन्दंज्योतिः परमपि तदा स्वाद्यमपिच । ( ब्र. अ. ५ ॥ २६ । ६६ ) इति

ब्रह्मसंहितायामुपबृंहणात् । तत्र राधावृषभानुजादिपदोपलक्षिता, परमलक्ष्मीः । अन्याश्च तस्याः सायुज्यंप्राप्ताः नित्यमुक्ता विमलाद्यावृन्दावत्याद्या ललिताचन्द्रावल्याद्याश्च सर्वा लक्ष्म्य एव । ताः सर्वाः भगवतः पत्न्य एव नतु नित्यलीलायामाभासतोऽपि गोपान्तरसम्बन्धवत्यः । यथाचोक्तं गोपीचन्दनोपनिषदि "गोप्यो नाम विष्णुपत्न्यः" इति । एवंच महालक्ष्म्याः तत्सखीनां गोपीपदवाच्यत्वं तु "गोपवेषम" 'गोपरूपःप्रयत्नात्" इत्यादिप्रकरणश्रुतेनिरुक्तगोपरूपस्य भगवतःपत्नीत्वात् ।" गोपी का नाम संरक्षणी मृत्योर्भयाच्च संरक्षणी" इतिगोपीचन्दनोपनिषच्छ्रुतेः—

वहिरंगैः प्रपञ्चस्य स्वांशैर्मायादिशक्तिभिः । अन्तरंगैस्तथानित्यविभूः तैस्तैश्चिदादिभिः ॥ गोपनादुच्यते गोपी राधिका कृष्णवल्लभा । सर्वलक्ष्मी स्वरूपा सा कृष्णह्लादस्वरूपिणी ॥ अतः सा प्रोच्यते विप्र ह्लादिनी तु मनीषिभिः । सा तु साक्षान्महालक्ष्मी कृष्णो नारायणःस्वयम् ॥ ( पद्म पु. पा. ख. वृ. मा. अ. १२ श्लो. ५१-५५ )

इतिपाद्मेवृन्दावनमाहात्म्ये बृहद्ब्रह्मसंहितायां च युगलमंत्रव्याख्याने शिवनारायणयोरुक्तेश्च सर्वजगद्गोपनशीलत्वाच्च बोध्यम् । तथाच "गुपू रक्षणे" इतिधातोरेव गोपीशब्दस्य निष्पत्तिःपक्षद्वयेऽपि । न तु गाः पातीतिगोपःतस्य पत्नीगोपी इतिप्राकृतव्युत्पत्तिः । एवंचगोवंशपालकस्याभिमन्युगोवर्धनादेर्गोपस्य पत्नीत्वमर्थस्तु स्थूलबुद्धीनामेवेतिबोध्यम् ।

ननु अत्र स्वरूपे चिदानन्दघनत्वस्यानुक्तत्वादतल्लक्षणमेतद्रूपं न स्वाभाविकमपि तु प्राधानिकमेवेच्छोपात्तं संघातरूपमितिचेन्न । पूर्वसच्चिदानन्दघनस्वरूपत्वस्य निरुक्तलक्षणपरमदेवत्वनिरूपणावसर एव

निरूपितत्वात् तद्विषयकजिज्ञासाया अनुदयात्। स्वरूपे, आकारस्यानिरूपितत्वेन तावन्मात्रस्यैव जिज्ञासितत्वात् । तावन्मात्रमुक्तम् । तथाच सच्चिदानन्दमयस्वरूपस्यैवाकारजिज्ञासनात्—आकारस्य सच्चिदानन्दत्वमनुक्तसिद्धमेव । वक्ष्यति "च तमेकं गोविन्दं सच्चिदानन्दविग्रहम् वृन्दावनसुरभूरुहतलासीनम्" । इत्यनेन विग्रहत्वेनापि सच्चिदानन्दघनत्वमिति न शंकाऽवसर इति ।। ( ॐअयं ग्रन्थः, पृ. ११२ पं. २३ अग्रे. पठनीयः )

ॐ परमलक्ष्म्या वृषभानुनन्दिन्या तदन्तरङ्गसखीभिश्च सह परमविष्णोर्नन्दनन्दनस्य सम्बन्धतो भावतश्च यथा दाम्पत्यमेव तथोपपदयिष्ये विस्तरतः, "श्रीकृष्णं ध्यायन्तः, इतिवाक्यव्याख्यानावसरे पूर्वतापिनीशेषे, स वो हि स्वामी भवति" इत्युत्तरतापिन्यांचेति तत्रैव द्रष्टव्यम्। ॐ

अत्र पुनरिदंबोध्यम्। यदत्र "चिन्तयञ्श्चेतसा कृष्णमि" ति "सत्पुण्डरीकनयनमि"ति निरूपितविग्रहसामानाधिकरण्येन कृष्णपदं विशिष्यते तत्रकृष्णशब्दो नाव्युत्पन्ननामधेयमात्रम्प्रयोजनविरहात् "कितद्रूपमि" ति तच्छब्देन कृष्णाख्यब्रह्मपरामर्शादेव तत्प्रयोजनसिद्धेः तस्मादत्र कृष्णशब्दः सामानाधिकरण्येन प्रयुक्तः तादृशविग्रहे "कृषिभू वाचकः शब्दः" इत्याद्युक्तस्वार्थभूतसच्चिदानन्दत्वबोधनार्थकतयैवोपयुज्यते । किंच चिदानन्दशब्देन चिदानन्दघनत्वकथने तावन्मात्रमुक्तं भवेत् कृष्णशब्देन तत्कथनेतु स्वरूपतश्चिदानन्दघनत्वेन साकं निरुक्तकृष्णशब्दार्थभूतजगत्कर्तृत्वादिसर्वधर्मणामपि तत्रोक्तिर्भवतीतित्यभिप्रायः प्रतिभाति ।। किंच "किन्तद्रूपमिति" जिज्ञासया परब्रह्मणः स्वरूपमेव जिज्ञासितं न त्विच्छयोपात्तप्राधानिकादिविग्रहरूपं तस्य जिज्ञासाघटकतत्पदार्थपरब्रह्मस्वरूपत्वाभावात् । तथाच स्वाभाविकं यद्रूपं तदेव वक्तव्यम्, नतु यादृच्छिकं प्रतारकत्वापत्तेः । नच भृगुवारुणीविद्यावत्, भूमविद्यावच्च क्रमेण परमरूपेऽवतारार्थं तदुक्तिरिति वाच्यम् ।। तत्र तत्र अन्नब्रह्मनामब्रह्मादिक्रमेणाऽनन्दब्रह्मभूमब्रह्मपर्य्यन्तमुत्तरोत्तरं स्वरूपान्तरनिरूपणवदत्रस्वरूपान्तरानिरूपणात् । अपितु अस्यैव रूपस्य परमकष्ठापन्नत्वेन "तमेकं

गोविन्दं सच्चिदानन्दविग्रहम्" "योऽसौ ब्रह्म परं ब्रह्म गोपालः" "योऽसौ जाग्रत्स्वप्नसुप्तिमतीत्य तुर्य्यातीतो गोपाल" इत्यादिना पुनः पुनरन्तपर्य्यन्तमभ्यस्यमानत्वात् ॥ किंच 'किंतद्रूपमित्यनेन निरुक्तस्य परब्रह्मणः परममेव स्वरूपं जिज्ञासितम्, नतु कल्पितम्, "कः परमोदेव इति परमत्वेनैवात्र वस्तुतत्त्वनिरूपणस्योपक्रान्तत्वेन सर्वत्र जिज्ञासायां तात्पर्य्यतस्तदन्वयस्य युक्तत्वात्। अन्यस्यैच्छिकरूपस्यानन्तत्वादन्यथैव ज्ञातत्वेन चाजिज्ञास्यत्वाच्च। एवंच परब्रह्मणः परमस्वरूपजिज्ञासायां यद्रूपमुपदिष्टं तदेव परमरूपं तस्यान्यथा कल्पनंनितरामयुक्तम्-इत्यपि विभावनीयम् ॥

( अथात्र स्वरूपनिरूपस्योपासनविधिशेषत्वं निराक्रियते )

अथ " योध्यायति " इत्यनेन ध्यानस्य प्रक्रान्तत्वात्, तदनन्तरं "किन्तद्रूपमिति" जिज्ञासादर्शनात्। निरुक्तश्लोकेऽपि "चिन्तयँश्चेतसा कृष्णमि" ति ध्यानगोचरत्वेनैवोपसंहारात्। ध्यानस्यचोपासनाविशेषरूपत्वात्। उपासनाविधिशेषभूतमेवेदंस्वरूपनिरूपणम्। तथा च "वाचंधेनुमुपासीत" इत्यादाविव तादृशविग्रहस्य ब्रह्मस्वरूपत्वाभावेऽप्युपासनसंभवान्नैतस्य ब्रह्मस्वरूपनिर्णायकत्वमितिचेन्न, उक्तहेतुभ्यः (१) प्रस्तुतध्यानादेर्विधिरूपत्वाभावात्। (२) उपासनारूपत्वाभावात्। (३) निदिध्यासनरूपत्वात्। (४) फलसामानाधिकरण्येनोक्तेः (५) साक्षादमृतत्वप्रापकत्वात्। (६) स्वरूपनिरूपणशेषत्वस्योक्तत्वाच्च। (७) स्वरूपनिरूपणस्यैवोपक्रमोपसंहारादिभि रेतदुपनिषत्तात्पर्य्यगोचरत्वस्य प्रमीयमाणत्वात्। (८) अस्यैव स्वरूपस्य निर्गुणत्वसर्वांशित्वतुरीयातीतत्वोपदेशाच्च। (९) नतद्रूपं वाचसि धेनुत्ववत्, उपासनांगतयाऽरोपरूपम्। अपितु परमकाष्ठापन्नं सर्वातिशायिसच्चिदानन्दरूपं, सर्वासां तेजोराशीनां सूर्य्यरूपमिव सच्चिदानन्दतत्त्वस्यापि "ब्रह्मणोऽहि प्रतिष्ठाहममृतस्याव्ययस्य चेति" गीतोक्तरीत्या परमप्रतिष्ठाभूतमिति भगवद्भीक्षितैरवधेयम् ॥ तथाहि ॥ प्रस्तुतध्यानादेर्न्नविधिरूपत्वम् "वाचंधेनुमुपासीत" इत्यादाविव विधायकानां लोड्लिङादीनामभावात्। "चिन्तयँश्चेतसा कृष्णम्"

"पंचपदीं जपन्" इति शतृप्रत्ययान्तपदाभ्यां लट्लकारस्यैव निश्चयात्। तस्य चाविधायकत्वात्। अत एव यथा "यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति।" इत्यादिश्रुतीनां न विधायकत्वमपि तु फलमात्रकथकत्वादुपदेशमात्रत्वं तथा "ध्यायति रसयति" इत्यादिश्रुतीनामपि बोध्यम्। उभयत्र फलसामानाधिकरण्येन लड्विधानात्॥

किंच "ध्यायेत्' 'रसयेत्' 'यजेत्' 'भजेत्" इति वक्ष्यमाणश्रुतीनां लिङन्तत्वेन विधायकत्वाङ्गीकारेऽपि नैतेषां "वाचं धेनुमुपासीत" इत्यादाविव काल्पनिकोपासनारूपत्वं तथा सति धेनुत्वेन वागुपासनादिवदस्यापि ध्यानादेः साक्षान्मोक्षपर्य्यवसायित्वं न स्यात्, निरूप्यते चैतेषामुक्तरीत्या साक्षान्मोक्षपर्य्यवसायित्वम् "सोऽमृतो भवति" "सोऽमृतो भवति" 'ब्रह्म सम्पद्यते ब्रह्म सम्पद्यते' 'अखिलं भवति अखिलं भवति" 'सिद्धिः शाश्वती नेतरेषाम्" "तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदेव" मुमुक्षुर्वै "शरणं व्रजेत्" "दर्शयेदात्मरूपम्" इत्यादिश्रुतिभिः। तस्मादत्र विधीयमानं ध्यानादिकम् "ओमित्येवं ध्याय थ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्।" ( मुण्ड. ) "यः पुनरेतत्त्रिमात्रेणोमित्येतेनै० परं पुरुषमभिध्यायीत" ( प्रश्न० ) "आत्मेत्येवोपासीत"। आत्मानं प्रियमुपासीत। आत्मानं लोकमुपासीत। (बृ.१।४) आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। ( बृ.४।५ ) इत्यादौ विहितध्यानोपासननिदिध्यासनवत् परमात्मसाक्षात्कारोपायभूतमखण्डं स्मृतिसंततिमात्रंबोध्यम्। एवंचैतेषांशब्दभेदेन सर्वास्वप्युपनिषत्सु विधीयमानत्वेऽपि तत्र तत्रोपनिषत्सु प्रतिपादितानाम्— "तत्त्वमसि' ( छा. ) "अहंब्रह्मास्मि" ( बृ. उ. ) "अयमात्मापरंब्रह्म' ( मु. उ. ) "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" "नेतिनेति" "अस्थूलमनणु" ( बृ. ) "केवलोनिर्गुणश्च" ( श्वे. उ. ) इत्यादिश्रुतीनां यथा नोपासनाशेषत्वं तथात्रापि बोध्यम्॥ नच "आत्मेत्येवोपासीत" "निदिध्यासितव्यः" इत्यादिश्रुतीनां न मुख्यं विधायकत्वमपि तु विधि-

च्छायापन्नत्वमेव, अनाद्यविद्यया विषयेषु प्रवृत्तानां जीवानामभिमुखी-करणार्थम्। "भव्ये हि विधिर्भवति ब्रह्म ब्रह्मभावश्च न भव्यौ तथात्वे-ऽनित्यत्वापत्ते" रिति व्यवस्थापितं भगवत्पादाचार्य्यैर्वाचस्पतिमिश्रैश्च समन्वयाधिकरणभाष्ये, इत्युच्यते, तदाऽत्रापि तथैव जानीहि। तदे-तदुपपादयिष्ये विस्पष्टमुपरिष्टात् ॥ तथाचात्र ध्यानादिकं हि—"तेषामसौ दर्शयेदात्मरूपम्" "तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदेव' इत्यादि-वक्ष्यमाणश्रुत्युक्तभगवद्दर्शनासाधारणहेतुभूतं ध्रुवा स्मृत्यपरप-र्य्यायं निदिध्यानरूपमेव तेनात्र तस्य विहितत्वाङ्गीकारेऽपि नात्र शेषि-त्वसंभवः निदिध्यासनस्य शेषित्वे समग्रमैत्रेयिब्राह्मणस्य निदिध्या-सनशेषत्वं स्यात्। तथासति त्वन्मते तस्यापि स्वार्थपरत्वं भज्येत तच्च न भवतामप्यभिमतम्। तथासति "तत्केन कं पश्येत्" इत्यादिवाक्यानां स्वातन्त्र्येणाद्वैतप्रतिपादकत्वं न स्यात्, इति।

किंचात्र स्वरूपनिरूपणस्योपासनाशेषत्वाङ्गीकारे तेन च स्वरूप-निरूपणपराणां "किन्तद्रूपमि" त्यादिप्रश्नप्रतिवचनवाक्यानां स्वार्थ-परत्वानंगीकारे तेन च तत्प्रतिपाद्यस्वरूपस्य परमार्थिकत्वानगीकारे च तद्रूपध्यानादीना—"अमृतोभवति" ब्रह्म सम्पद्यते" इत्यादिश्रुत्युपदिष्टः "साधनान्तराव्यवधानेन साक्षादमृतत्वोपदेशो भज्येत। "वेदाहमेतं पुरुषं महान्तं मादित्यवर्णंतमसः परस्तात्" इत्यादिश्रुतिभिः "तमसः पर-स्यात एव परमार्थिकपरमपुरुषस्वरूपदर्शनस्यैव मोक्षजनकत्वस्य निर्धा-रात्। अत्रोक्तध्यानादीनां त्वदुक्तरीशाऽपारमार्थिकस्वरूपविषयकत्वे-तेन तत्साक्षात्कारस्यैव नियतत्वात्। नचात्र गौणामृतत्वोपदेशः साधना-न्तरव्यवधानेन वाऽमृतत्वोदेश इति शंक्यं तस्य पूर्वमेव निरस्तत्वात् ॥

वस्तुतस्तु नात्रोपासानायाः प्राधान्यमपि तु निरुक्तलक्षणपरम-देवत्वाविनाभूतपरमफलप्रदत्वोपपादकतयैवात्रोपासनतत्फलादीनांप्रवेशा-दित्युपपादितं पुरस्तात्। "किन्तद्रूपमि" त्यादिना स्वरूपनिरूपण-स्यापि परमदेवत्वोपपादकतयैवोपक्रान्तत्वादित्यप्युपपादितं पुरस्तात्।

तेन नात्र स्वरूपनिरूपणस्योपासनाशेषत्वमपि तु तदुपासनाया एव तच्छेषत्वमिति ॥ अतएव च तस्य परब्रह्मणोऽत्रोपनिषदि. आसर्वोपसंहारं प्रतिज्ञातार्थं परमदेवत्वादिकं तादृशस्वरूपकत्वेनैव पुनः पुनरभ्यासेनालोचयति—"तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदेव" "गोपवेशो मे पुरुषः पुरस्तादाविर्बभूव" "पुनस्ते सिसृक्षतोमे प्रादुरभूवन्" "तमेकं गोविन्दं सच्चिदानन्दविग्रहं बृन्दावनसुरभूरुहतलासीनम्" "नमो विज्ञानरूपाय परमानन्दरूपिणे कृष्णाय गोपीनाथाय" "नमः कमलनेत्राय नमः कमलमालिने" 'निष्कलाय विमोहाय शुद्धायाशुद्धवैरिणे। अद्वितीयाय महते श्रीकृष्णाय नमोनमः" "साक्षात्प्रकृतिपरोऽयमात्मा गोपालः" "ओंतत्सत्कृष्णात्मको नित्यानन्दैकस्वरूपः" "ओंतत्सद्गोपालोऽहमेव परं सत्यमबाधितम्" "ध्यायेन्मनसि मां नित्यं वेणुशृङ्गधरं तु वा" "योऽसौ ब्रह्म परंब्रह्म गोपालः" "जाग्रत्स्वप्नसुषुप्तिमतीत्य तुर्य्यातीतो गोपालः" इत्यादिना। तदेतत्तत्स्थले व्यक्तीभविष्यति ॥ अस्य विग्रहस्य सच्चिदानन्दघनत्वे पुराणादिवाक्यानि संक्षेपतः पूर्वमेवोक्तानि गोपपदार्थव्याख्यानावसरे। संगृहीतानि च युग्मतत्त्वसमीक्षायाम्।

इति स्वरूपविचारसंक्षेपः ॥

मू० तस्य पुना रसनामिति जलभूमीन्दुसम्पाताः। कामादिकृष्णायेत्येकं पदम्। गोविन्दायेति द्वितीयम्। गोपीजनेति तृतीयम्। वल्लभेति तुरीयम्। स्वाहेति पञ्चममिति पञ्चपदं जपन्पञ्चाङ्गं द्यावाभूमी सूर्याचन्द्रमसावग्निस्तद्रूपतया ब्रह्म संपद्यते ब्रह्म संपद्यत इति ॥

इति श्रीगोपालपूर्वतापिन्यां प्रथमः प्रपाठकः (अध्यायः) सम्पूर्णः ॥

अथ "ओमित्येवं ध्यायथ आत्मनं स्वस्ति वः पाराय तमसः पर-

स्तात् ॥ मुण्ड० ॥ "आत्मेत्येवोपासीत" । १ । "आत्मनंप्रियमुपासीत ॥ ( बृ० उ. ११ । ४ ) "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ।" नाराय. । "ब्रह्मणे त्वामहसे ओमित्यात्मानं युंजीत ( नाराय. उ. ७२ ) "मुमुक्षुर्वै शरणमहं प्रपद्ये ( श्वेता० ) ( ४ ) इत्यादि श्रुत्युक्तलक्षणमात्मार्पणन्यासप्रपत्तिशरणागतिप्रभृतिशब्दव्यपदेश्यम्—

"यो ब्रह्माणं विदधाति पूर्वं यो वै विद्यास्तस्मै गोपायति स्म कृष्णः ॥

तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुः शरणं व्रजेत् ॥ गो. पू. ता. ६ ॥ इति वक्ष्यमाणं सांगमात्मन्यासयोगमुपपादयितुं तन्निर्वाहकमंत्रंच निरूपयितुमाह "तस्य पुनारसनमिति-जलभूमीन्दुसम्पाताः" इति । अत्र रसनशब्दो हिं रस आस्वादने, इतिचुरादिधातुनिष्पन्न एव प्रतिभाति । साम्प्रदायिकपुस्तकेषु उपक्रमे उपसंहारेच "रसयति रसयेत्-इतिस्वार्थणिजन्तपाठोपलंभात् तथैव टीकाकृद्भिर्व्याख्यातत्वाच्च । क्वचिपुस्तके उपक्रमे 'रसति' इत्येवं पाठस्योपलभ्यमानत्वेऽपि, उपसंहारे "रसयेदित्येव पाठोलंभात्, उपक्रमेऽपि तथैव स्यादित्येव प्रतिभाति । तेनास्वादनं धात्वर्थः, प्रकरणवशाच्च सर्ववेदान्तसारभूतवक्ष्यमाणपञ्चपदीमंत्रानुसंधानेनासीममाहात्म्यज्ञानपूर्वकं स्वस्य तदेकशरणत्वभावनपूर्वकं च विशुद्धप्रेम्णा तत्स्वरूपानुशीलनं वाक्यार्थः । एवंच मंत्रस्य तज्जपस्य च तादृशरसनीयभगवत्स्वरूपस्मारकत्वेनोपयोगः । तेन करणव्युत्पन्नोरसनशब्दस्तत्र प्रयुज्यत इत्युक्तं भवति । शब्दार्थकरसधातुनिष्पन्नत्वे शब्दोच्चारणविशेषस्तु रसनशब्दस्य वाच्यार्थः शेषस्तु प्रकरणवलात् । तेनात्रापि पक्षे तथैव तात्पर्य्यम् । तदेतदग्रे स्पष्टं भविष्यति ॥

यद्वा रस्यते माहात्म्यानुसंधानपूर्वकं शरण्यत्वेनास्वाद्यतेऽनुशील्यते प्रतिपाद्यते वा येन शब्दसमूहेन तत् रसनं-शब्दसमुदायविशेषात्मा मंत्रविशेषः, इति तदर्थः । तथापि करणप्रत्ययनिष्पन्नोऽयं शब्दः । शेषस्तु समान एवेति ॥ तामेव त्रिधामाह । "जलभूमीन्दुसम्पाताः" इति । अत्र जलपदेन तद्वाचकः ककारो भूमिशब्देन तद्बीजं लकारः "भूमीन्दु," इत्यत्र

मध्ये ईकारः इन्दुशब्देन विन्दुश्च गृह्यन्ते तेन क्लीँ इति कामवीजमुद्धृतम्भवति। तदेवाह "कामादि" इत्यादि। अत्र "क्लीमिति वीजं" "कृष्णाये" त्यादिपदपञ्चकं तु तस्यैव विवरणभूतम्॥ तदुक्तं रहस्यषोडश्यांश्रीमदाचार्य्यचरणैर्निम्बार्कमुनिभिः "एतस्यैव हि मंत्रस्य शिष्टं विवरणं स्मृतमि" ति॥ तेन कृष्णायेत्यादिपञ्चानाम्पदानां जलभूमीन्दुसम्पातात्मके क्लीमिति वीज एवान्तर्भावः। तत एव रसनंतु "जलभूमीन्दुसम्पाताः" इत्येवोक्तम्। विवरणवाक्य एव कामादिकृष्णायेत्यादिपञ्चपदमुक्तम्॥ तथाच क्लीं कृष्णाय इत्येकं पदं गोविन्दायेति द्वितीयं गोपीजनेति तृतीयं, वल्लभेति तुरीय स्वाहेति पञ्चमंपदमिति, पञ्चपदात्मको मन्त्रः॥ अत्र क्लींकृष्णायेत्यस्य पदद्वयरूपत्वेऽप्येकपदत्वं गोपीजनवल्लभायेत्यस्यैकपदत्वेन प्रतीयमानत्वेऽपि पदद्वयात्मकत्वं श्रौतविभागात् तथैव गौतमीयतंत्रसनत्कुमारसंहितादौ व्यवस्थापनाच्चेति वोध्यम्॥

"पञ्चपदीं जपन् पञ्चांगं द्यावा भूमी सूर्याचन्द्रमसौ साग्नी तद्रूपतया ब्रह्म सम्पद्यते ब्रह्म सम्पद्यते" इति। अत्र यत्तदोर्नित्यसम्बन्धात्, इतरत्र तच्छब्दास्यच्छब्दो लभ्यः। एवंच पञ्चपदीं जपन्नरः ये द्यावाद्याः पञ्च तद्रूपतया तत्प्रकाशकतया यन्मन्त्ररूपं पञ्चांगं ब्रह्म तत्सम्पद्यते मंत्रदेवतयोरभेदात् परब्रह्मस्वरूपं कृष्णं प्राप्नोतीत्यर्थः। द्विरुक्तिः- प्रथमोपनिषत्समाप्त्यर्था' इतितत्त्वप्रकाशिकाकाराः॥

इदंत्वत्राधिकंवोध्यम्—। अत्र पञ्चांगमिति पदं देहलीदीपन्यायेन पञ्चपद्यां ब्रह्मणि चोभयत्रान्वेति। तदर्थमेव 'पञ्चांगं ब्रह्म सम्पद्यते" अथवा "पञ्चांगंपञ्चपदींजपन्" इत्येवमव्यवधानेन पञ्चांगपदमपठित्वा मध्ये पठितम्। एवंच पञ्चांगं यथा स्यात्तथा पञ्चपदींजपन् द्यावाभूमी सूर्य्याचन्द्रमसौ साग्नी तद्रूपतया "पञ्चांगं ब्रह्म सम्पद्यते," इत्यन्वयार्थः समीचीनः प्रातभाति। पञ्चपदीमित्यत्र पंचपदमिति पाठे तु न क्रियाऽन्वयापेक्षा किन्तु पंचांगं पंचपदं जपन् द्यावाभूमीसूर्य्याचन्द्रमसौ साग्नी तद्रूपतया ब्रह्म सम्पद्यते इत्येवान्वयार्थः॥ तत्र मंत्रस्य पंचांगानि-

( १ ) समर्पणां-( शरणां ) गत्वेन ( २ ) स्वरूपावयवत्वेन ( ३ ) स्पष्टाक्षरोच्चारणरूपजपांगत्वेन ( ४ ) मंत्रार्थानुशीलनाङ्गत्वेन च सामान्यतश्चतुर्विधानि। तत्र यान्येव परब्रह्मणः श्रीकृष्णस्य वक्ष्यमाणलक्षणानि पञ्चांगानि तान्येव शब्दब्रह्मरूपस्य पञ्चपदीमंत्रस्य शब्दात्मना पञ्चांगानि भवन्ति । पंचपदीमंत्रस्य श्रीकृष्णस्य च "यत्तत्पदं पंचपदं तदेव स वासुदेवो न यतोऽन्यदस्ती" त्यनेन "शब्देनासौ पञ्चपदो विभाति" इत्यनेन चैकत्वावधारणस्य वक्ष्यमाणत्वात् ॥ तत्र (१) आत्मयज्ञ ( २ ) जपयज्ञ ( ३ ) ज्ञानयज्ञ (४) योगयज्ञ ( ५ ) द्रव्ययज्ञरूपाणि (१)समर्पणांगत्वेन पञ्चांगानि रहस्यमीमांसायां पंचयज्ञाधिकरणोक्तानि ज्ञेयानि (२)स्वरूपावयवत्वेन पंचांगानि। क्लींकृष्णायेत्यादि पंचपदानि।(३)जपांगत्वेन पंचांगानि (१) वीज (२) शक्ति (३) किलक (४) ऋषि (५)न्यासरूपाणि। ( १ ) भूतशुद्धि ( २ ) प्राणप्रतिष्ठा ( ३ ) मातृकान्यास ( ४ ) केशवादिन्यास ( ५ ) पीठन्यासादिरूपाणि न्यासाः, रहस्यमिमांसायां क्रमदीपिकायां च ज्ञेयाः॥ (४)तुरीयंपञ्चांगं तु (१) अन्तरंगतमान्तरंगतरान्तरंगवहिरंगभेदाच्चतुर्विधम् । ( १ ) तत्र प्रथमं ककारेकारलकारविन्दुनादात्मकं मंत्रांगभूतम्। अर्थांगन्तु विविधभावापन्नं स्वयं युगलमेव–

ककारो नायकः कृष्णः सच्चिदानन्दविग्रहः ईकारः प्रकृती राधा
महाभावस्वरूपिणी। लश्चानन्दात्मकः प्रेमसुखं च परिकीर्तितं
चुम्बनाश्लेषमाधुर्य्यं विन्दुनादमुदीरितम्। इतिवृहद्गौतमीयतंत्रोक्तेः।

( २ ) द्वितीयंतु क्रमेण मंत्रावयवप्रतिपाद्यानि वासुदेवसंकर्षप्रद्युम्नानिरुद्धनारायणाख्यानि, "वासुदेवः संकर्षणः प्रद्युम्नश्चानुरुद्धकः । नारायण इतिख्यातःपदपञ्चात्मकःपरः" इत्येतन्मंत्रकल्पे गौतमीयतंत्रोक्तेः। ते च वासुदेवादयो मंत्रगतपंचावयवार्थतया पञ्चावयवरूपाः, तत्तदवयवार्थतया तत्तदंगरूपाः सन्तः समग्रमंत्रार्थभूतस्य श्रीकृष्णस्यांगानि भवन्ति, इति मंत्रार्थभावनाकाले (समग्रमंत्रार्थभूतस्य परब्रह्मणः श्रीकृष्णस्यांशिनः इति) समग्रमंत्रार्थभूतं श्रीकृष्णाख्यं परंब्रह्म तेषामशित्वेन भावनीयम्॥

एवंच वासुदेवादिचतुष्टयेन व्यूहचतुष्टयं पञ्चमेन नारायणेन च तदंश-भूता वैभवाः पुरुषावतारा लीलावताराःगुणावताराश्च श्रीकृष्णांशत्वेन भाविता भवन्ति । तत्र वासुदेवसंकर्षणप्रद्युम्नानिरुद्धा व्यूहाः । केशवनारायणमाधवगोविन्दमधुसूदनत्रिविक्रमवामनश्रीधरहृषीकेशपद्मनाभदामोदरवासुदेवाः, उर्ध्वपुण्ड्रदेवतारूपा वैभवा द्वादश ॥ कारणोदशायि-गर्भोदशायिक्षीरोदशायिनः त्रयः पुरुषावतारपदवाच्याः । मत्स्यकूर्मा-दयो लीलावतारपदवाच्याः । ब्रह्मविष्णुशिवाः गुणावतारपदवाच्या वेदान्तमंजूषायां "व्यूहांगिनमिति" पद्यव्याख्याने पुरुषोत्तमाचार्य्यचरणैर्निरूपिताः,–विलासात्मके प्रथमावतारे वक्ष्यमाणलक्षणनारायणे अन्त-र्भवन्ति । तेऽपि अंगत्वेन भावनीयाः । अत एव चैते "जाग्रत्स्वप्नसुषुप्ति-तुरीयतुरीयातीतोऽन्तर्य्यामी गोपालः" इत्यनेन वक्ष्यमाणेन मंत्रार्थस्य श्रीगोपालस्य परब्रह्मणः विभूतित्वेनानुप्रतिपाद्यन्ते । अत्र क्रमेण जाग्रदाद्यव-स्थाधिष्ठातारः संकर्षणप्रद्युम्नानिरूद्धवासुदेवा विवक्षिताः । "रोहणीतनयो विश्व अकाराक्षरसंभवः । तैजसात्मकः प्रद्युम्न उकाराक्षरसंभवः । प्राज्ञा-त्मकोऽनिरुद्धोऽसौ मकाराक्षरसंभवः । अर्धमात्रात्मकः कृष्णो यस्मि-न्विश्वं प्रतिष्ठितम् । ( उ. ता. ) इतिवक्ष्यमाणवाक्ये–विश्वादिरूपत्वेन प्रणवायवभूताकारादिमात्राप्रतिपाद्यत्वेन तेषां निरूपणात् । विश्वादीनांच माण्डूक्योपनिषदि जाग्रदाद्यधिष्ठातृत्त्वेन निरूपणात् । एवंच 'जाग्रत्स्व-प्नेत्यादिवक्ष्यमाणमंत्रे जाग्रत्पदेन तदधिष्ठाता विश्वात्मकः संकर्षणः स्वप्न-पदेन तदधिष्ठाता तैजसात्मकः प्रद्युम्नः सुषुप्तिपदेन तदधिष्ठाता प्राज्ञा-त्मकोऽनिरुद्धः तुरीयपदेन तदवस्थो वासुदेवः । 'तुरीयातीतोऽन्तर्या-मी' त्यनेन–"कृष्णो वै हरिः परमोदेवः षड्विधैश्वर्य्यपरिपूर्णोभगवान् । गोपीगोपसेव्यो बृन्दाराधितो वृन्दावनाधिनाथः तस्य द्वे तनू नारायणोऽखिलब्रह्माण्डाधिपतिरेकोंऽशः प्रकृतेः पराचीनो नित्यश्च" इतिराधोप-निषच्छ्रुत्युक्तः । अत्रापि "चतुर्भुजं शंखचक्रशार्ङ्गपद्मगदान्वितमि" त्या-दिनोत्तरतापित्यांनिरूपितः, ब्रह्मवैवर्तनारदीयमहापुराणादौ द्विभुजस्य

श्रीकृष्णस्यप्रथमावतारत्वेन प्रतिपदितः, स्वेतरसर्वावताराणामंशित्वेन तेषामन्तर्य्यामिभूतो नारायणो विवक्षितः। तस्य तुरीयातीतत्वविशेषणं तु संकर्षणादितदंशेभ्य उत्कृष्टत्वबोधनायान्तर्य्यामित्वकथनेन प्राप्त प्राज्ञत्व वारणायचेति बोध्यम्। अयमेव च स्वरूपनिरूपणप्रस्तावे समुद्धृत-पद्मपुराणीयवृन्दावनमहात्म्यवाक्ये आवरणक्रमे "तस्योर्ध्वं चान्तरिक्षेच विष्णुं सर्वेश्वरम्" (८।३२) इत्यादिना ब्रह्मादिगावरणत्वेनोक्त इत्यपि ध्येयम्। तेषां सर्वेषां प्रतिपाद्यश्रीगोपालविभूतित्वमेव। "रुद्राणां शंचरश्चास्मी, त्यादिगीतावाक्य इव तेषामपि 'ओंप्राणाय स्वाहे' त्यादिव-क्ष्यमाणमंत्रस्तुतौ गोपालात्मकत्वोपदेशात्। तत्र विभूतिप्राये पाठात्। 'गोपालाय' निजस्वरूपायेत्यनेन-"सत्पुण्डरीकमि" त्यादिना निरूपित-गोपालरूपमात्रस्यैव निजस्वरूपत्वविशेषणेन सर्वांशित्वाभिधानाच्चेत्य-ग्रेस्फुटीभविष्यति। "अर्धमात्रात्मकः कृष्णो यस्मिन्विश्वं प्रतिष्ठि-तामि" त्यत्र कृष्णपदवाच्यो वासुदेवव्यूह एव। न तु तेषामंशी तुरीयातीतः "कृष्णो वै परमं दैवतं" "गोपालाय निजस्वरूपाय" "तुरीयातीतोऽन्त-र्यामी गोपाल' इत्याद्युक्तलक्षणः परमः। तस्य 'तस्मादोंकारसंभूतो गोपा-लो विश्वसंस्थितः, इत्यनेन वक्ष्यमाणत्वात्। तदप्यग्रे स्फुटी भविष्यति। एवंच तत्र अकारार्थो विश्वः संकर्षणः उकारार्थस्तैजसः प्रद्युम्नो मका-रार्थः प्राज्ञोऽनिरुद्धः अर्धमात्रात्मकस्तुरीयो वासुदेवः॥ नारायणस्य तत्र तुरीये अर्धमात्रात्मके एवान्तर्भावः। अतएव कृष्ण इति सामान्य-शब्दप्रयोगः। एवमेव-"ओंकृष्णाय देवकीनन्दनाय ओंतत्सद्भूर्भुवः स्वः स्तस्मै वै नमोनमः" इति वक्ष्यमाणमंत्रस्तुतावपि देवकीनन्दनपदेन वासु-देवव्यूहस्य निरुक्तलक्षणनारारायणस्य च परिग्रहोबोध्यः। यद्वा तस्यापि परब्रह्मगोपलविलासरूपत्वेन तुरीयातीतत्वाच्चात्र "गोपालो विश्वसंस्थितः, इति गोपाल एव तुरीयातीतेऽन्तर्भाव इति।

(३) तृतीयंतु प्रकृति पुरुषकालतत्त्वे श्वराख्यान्यपि पंचा-गानि तत्र प्रकृतिस्त्रिगुणात्मिका॥१॥ पुरुषाः क्षेत्रज्ञाः। शकालः

तयोर्नियामकरतत्त्वविशेषः ।३। तत्त्वानि अप्राकृततत्त्वपदव्यपदेश्या-निस्वरूपतः सच्चिदानन्दमयानि धर्म्मतश्चैतन्यरहितानि भगवद्धामा-दिपदवाच्यानि। अथवा त्रिगुणप्रकृतिकार्य्याणि महत्तत्वादीनि।।४। ईश्वरः, सर्वेषां नियामकः सर्वात्मा स्वसमानाभ्यधिकशून्यं श्रीकृष्णाख्यं परंब्रह्म। तदुक्तं गौतमीयतंत्रे कामवीजव्याख्याने—

"प्रकृतिःपुरुषश्चैव नित्यौ कालश्च सत्तम । तत्त्वानि चेश्वरश्चैव ब्रह्मै तत्पंचकं स्मृतम् ।" इति "ईश्वरोजगतां वीजमाद्यं ब्रह्म तदु-च्यते । तस्य माया समाख्याता शक्तिर्गुणमयीतु या ।। एतद्वीजं समाख्यातं कृष्णतत्त्वं परात्परमि" ति चेति

तत्र पुरुषकालतत्त्वप्रकृतय ईश्वरश्च क्रमेण वीजावयवभूतैः ककारलकारे-कारनादविन्दुरूपैः प्रतिपाद्यन्ते । तदुक्तं तत्रैव—

सर्गान्तः पुरुषश्चेति तुर्य्याख्या प्रकृतिस्मृताःतात्त्वानि मांसरू-पाणि कालश्च तत्स्वरूपकः। ईश्वराख्यो भवेन्नादो विन्दुश्चैतन्य-चिन्मयः। एतद्विज्ञानमात्रेण जीवन्मुक्तोमहींचरेत्"—

इत्यनेन। अत्र सर्गान्तः ककारः। तुर्य्याख्या तूर्य्यस्वर ईकारः मांसं लकारः। अग्रे स्पष्टम्। अत्रेश्वरस्यांगित्वेऽपि अंगनिष्ठपंचसंख्यापूरकत्वं यजमानपंचमा इडांभक्षयंति इति न्यायेन वोध्यम्। एवं चैतान्यपि—मंत्रोपासनसमये सर्वमूलभगवत्स्वरूपध्यानात्प्राक् भगवत्स्वरूपशेषतया भावनीयानि भगवत्येव शक्त्यात्मना प्रविलापनीयानि च। अत एव पंचपदी-मन्त्रजपांगतया निरुक्तसर्वार्थप्रकाशकाः केशवादिमातृकान्यासा व्यूहन्या-साःतत्त्वन्यासाः पीठन्यासा अन्ये च केचिन्यासा विधीयन्ते गौतमीयतन्त्रा-दिषु सनत्कुमारकल्पादिषु चेति। तथासति सर्वांशितया समग्रंब्रह्म सर्वव्यूहवै-भवाद्यंगि पुरुषोत्तमाख्यं भावितं भवति। एतेनैव जपांगतयाऽतिविस्तृत-न्यासविधानस्यातिस्पष्टं सप्रयोजनत्वमुक्तं भवतीत्यवधेयम्।

इदम्पुनरिहानुसंधेयम् । सर्वशास्त्रेषु यावदर्थः प्रणवेनोच्यते तावत्सर्व एवार्थः प्रकृतशास्त्रे कामवीजेनोच्यते । प्रणवकामवीजयोरे-

कत्वावधारणात्। तच्छ्रुतंभविष्यत्युत्तरतापिन्याम्—

"रोहिणीतनयो विश्व आकाराक्षरसंभवः ।। तैजसात्मकः प्रद्युम्न उकाराक्षरसंभवः ।। १ ।। प्राज्ञात्माकोऽनिरुद्धोऽसौ मकाराक्षरसंभवः ।। अर्धमात्रात्मकः कृष्णो यस्मिन्विश्वं प्रतिष्ठितम् ।।२।। कृष्णात्मिका जगत्कर्त्री मूलप्रकृती रुक्मिणी व्रजस्त्रीजनसंभूतः श्रुतिभ्यो ब्रह्मसंगतः ।। ३ ।। प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः । तस्मादोङ्कारसंभूतो गोपालो विश्वसंस्थितः । क्लीमोंकारयोरेकतत्त्वं वदन्ति ब्रह्मवादिनः ।।"

इत्यन्तेन । तस्मात्प्रणवप्रकरणे माण्डुक्योपनिषदादौ व्याख्याताः सर्वे पदार्था अत्राप्युक्ता भवन्तीत्यंगप्रत्यंगभावेन सर्वांगिनि सर्वात्मनि परमात्मनि श्रीपुरुषोत्तमे गोपालात्मके भावनीयाश्च भवन्ति । तदेतत्सर्वमभिप्रेत्यैवोक्तम्—

"तस्मादोंकारसंभूतो गोपालो विश्वसंस्थितः ।
क्लीमोंकारयोरेकतत्त्वं वदन्ति ब्रह्मवादिनः ।।" इति

एकतत्त्वमिति" एकमेव तत्त्वं प्रतिपाद्यं परमार्थवस्तु प्रणवकामबीजयोरिति तदर्थः । अत एव "रोहिणीतनयो राम अकाराक्षरसंभवः" इत्यादिना-प्रणवार्थस्य विश्वतैजसादेः शाखान्तरपठितस्य रामप्रद्युम्नाद्यात्मनाऽत्रानुवादः ।

"क्लीमोंकारयोरेकत्वं पठ्यते ब्रह्मवादिभिः"

इतिरहस्यमीमांसायां श्रीसुन्दरभट्टपादोद्धृतः शाखान्तरीयः पाठः । व्याख्यातं तु तैरेव–"गोपालोत्तरतापिनीये ह्याम्नायते" "क्लीमोंकारयोरेकत्वं पठ्यते ब्रह्मवादिभिः" इति । एकत्वं नाम एकार्थत्वं तुल्यार्थवाचकत्वम् । यथा प्रणवः सर्ववेदस्य बीजभूतः, सर्ववेदार्थगर्भकः । "प्रणवः सर्ववेदेषु" इति श्रीमुखोक्तेः । तथैव बीजमंत्रोऽपि तथाभूतस्तथाभूतार्थज्ञापकश्चेति । प्रणवपर्य्यायत्वादस्य वर्णस्येति "श्रुतितात्पर्य्यार्थः । प्रकृतिवद्विकृतिः कर्तव्येति चोदकश्रुतेरिति" इत्यन्तग्रन्थेनेति । अत्र यदधिकं वक्तव्यं तद-

त्रैव प्रकरणे, "जाग्रत्स्वप्नसुषुप्तितुरीयतुरीयातीतोऽन्तर्य्यामी गोपालः" इत्यत्र विवेचयिष्ये इति ततोऽवधेयम्।

मन्त्रस्यान्वयवार्थव्याख्यानन्तु, उपक्रमे कृष्णगोविन्दगोपीजनवल्लभेतिपदत्रयव्याख्यानेन "पापकर्षणो गोभूमिवेदविदितो गोपीजनविद्याकलाप्रेरकः, इत्यंशेनैवोक्तं व्याख्यातंचास्माभिस्तत्रैव विस्तरतः। कामबीजार्थस्तूक्तप्रणवार्थनैव व्याख्यातः। स्वाहापदार्थस्तु तादृशे परे-ब्रह्मणि श्रीकृष्णे, आत्मात्मीयसर्वार्थस्य समर्पणरूपस्त्याग एवेत्यपि स्पष्टम्। स्वाहाशब्दस्य सर्वत्र स्वसमभिव्याहृतचतुर्थ्यन्तपदार्थोद्देश्यकस्त्याग एव प्रसिद्धेः। अत्रापि स एव गृह्यते इतिव्याख्यातप्राय-एव-पंचपदीमन्त्रः। स्वाहापदेन गोपीजनवल्लभान्तपदसमभिव्याहृतेन तादृशपरिपूर्णतमकृष्णाख्यपरब्रह्मसम्प्रदानकात्मात्मीयसर्वसमर्पणबोधनाच्छरणागतिप्रकाशकत्वमपि स्पष्टमेव। तथापि विस्तरतद्व्याख्यानं रहस्यषोडश्यां द्रष्टव्यम्। अत्र तु एतन्मंत्रकल्पग्रन्थसनत्कुमारसंहितागौतमीयतंत्रबृहद्गौतमीयतंत्ररासोल्लासादितन्त्रतः कानिचित्तात्पर्य्यगमकानि वाक्यान्युद्धियन्ते। तत्र सनत्कुमारसंहितायाम्—श्रीनारदं प्रति भगवता सनत्कुमारेण कामबीजस्य श्रीपुरुषोत्तमविग्रहात्मकत्वमुक्तम्। यथा—

अथ कामबीजस्य शरीरं श्रीविग्रहात्मकम्। श्रीकृष्णशरीराभिन्नान्यक्षराणि क्रमाच्छृणु। १। ककारेण शिरोभालौ करनासौ नेत्रकर्णकौ। लकारेण भवेद्गण्डस्तदन्तो हनुरूपकः। २। चिबुकोऽथ ग्रीवांचैव कंठः पृष्ठं च सुव्रत॥ ईकारः स्कन्धो बाहुश्च कफोणिरंगुलीनखः। ३। अर्धचन्द्रो वक्षस्तुन्दः पार्श्वे नाभिः कटिस्तथा। चन्द्रविन्दावुरुर्जानुर्जङ्घा गुल्फश्च पादकः। ४। पार्ष्णिश्चाप्यंगुलीचैव नखेन्दुरपि नारद॥ इति विग्रहरूपश्च कामबीजात्मको हरिः॥ ५॥ इति

श्रीपुरुषोत्तमस्य साक्षान्मन्मथमन्मथस्य वाणपञ्चकमुक्तं तत्रैव यथा—

"बीजाक्षरं पञ्चपुष्पवाणक्रमाच्छृणु॥

ककारश्चाम्रमुकुलो लकारश्चाशोककः स्मृतः । ६ ॥
ईकारो मल्लिका पुष्पं माधवी चार्द्धचन्द्रकम् ।
बिन्दुश्च वकुलंपुष्पमेते वाणाः प्रकीर्तिताः ।" इति ।

गौतमीयतंत्रे कामबीजस्वरूपमुच्यते—

विना बीजेन मंत्राणां विफलं जायते फलम् ।
पञ्चालंकारसंयुक्तं बीजं तु परमाद्भुतम् ।
ककारश्च लकारश्च ईकारश्चार्धचन्द्रकः ।
चन्द्रबिन्दुश्च तद्युक्तं कामबीजमुदाहृतम् ॥ २ ॥ इति

एतेन-निरूपिततुरीयपंचांगे प्रथमप्रभेदः समर्थितो भवतीत्यवधेयम् । कामबीजस्याङ्गभूताया "ब्राह्मणमादायानङ्गगायत्रीं यथावदालिख्य" इत्युपासनप्रकारे वक्ष्यमाणकामगायत्र्याःस्वरूपमेवमाह-सनत्कुमारकल्पे—

आदौ मन्मथमुद्धृत्य कामदेवपदं वदेत् ।
आयोऽन्तेविद्महे पुष्पवाणायेति पदं ततः ।
धीमहीति तथोक्त्वाऽथ तन्नोऽनङ्गः प्रचोदयात् ॥ इति

अस्य माहात्म्यमाह—

गायत्री सा महामन्त्रः कामपूर्वाऽथ कथ्यते ।
साधका यां गृहीत्वैव जायते ब्रजमण्डले ॥ इति ।

बृहद्गौतमीयतन्त्रे युगलात्मकत्वमाह बीजमंत्रस्य यथा—

ककारो नायकः कृष्णः सच्चिदानन्दविग्रहः ।
ईकारः प्रकृती राधा महाभावस्वरूपिणी ॥ १ ॥
लश्चानन्दात्मकः प्रेमसुखं च परिकीर्तितम् ।
चुम्बनाश्लेषमाधुर्यं नादबिन्दुसमीरितम् ॥ २ ॥ इति ।

पुस्तकान्तरे तु—

ककारः पुरुषः कृष्णः सच्चिदानन्दविग्रहः ।
ईकारः प्रकृती राधा नित्यंवृन्दावनेश्वरी । १ ।
लश्चानन्दात्मकः प्रेम सुखं तयोश्च कीर्तितम् ।

चुम्बनानन्दमायुष्यं नादविन्दु समीरितम् । २ ।

इति पाठः । अर्थस्तु समानप्राय एव । रासोल्लासतन्त्रे कामवीजेन सह रतिवीजस्यापि साहित्यमाह—

कामवीजात्मकः कृष्णो रतिवीजात्मिका राधा ।
तयोः संकीर्तनादेव राधाकृष्णौ प्रसीदतः ॥ इति ॥

श्रीपुरुषोत्तस्य साक्षान्मन्मथमन्मथरूपत्वं तु स्वरूपनिरूपणप्रस्ताव एव महता प्रपञ्चेन निरूपितमिति तत्र एवावधेयम् ॥

गोपीजनवल्लभशब्दार्थस्तु प्रकृतमन्त्रकल्पे दशार्णमंत्रव्याख्यायां गौतमीयतन्त्रे ज्ञानामृतसारसंहितायां क्रमदीपिकायां चैवमाह—

कृष्शब्दः सत्ताऽर्थो लश्चानन्दात्मकस्ततः कृष्णः ।
भक्तावकर्षकणादपि तद्वर्णत्वाच्च मन्त्रमयवपुषः ॥ १ ॥
गोशब्दवाचकत्त्वाज्ज्ञानं तेनोपलभ्यते गोविन्दः ।
वेत्तीति शब्दराशिं गोविन्दो गोविचारणादपि च ॥ २ ॥
गोपायति सकलमिदं गोपायति परमपुमांसमितिगोपी प्रकृतिः ।
तस्या जातं जन इति महदादि पृथिव्यन्तम् ॥ ३ ॥
अनयोर्गोपीजनयोः समीरणादाश्रयत्वतो व्याप्त्या ।
वल्लभ इत्युपदिष्टं सान्दानन्दं निरञ्जनं ज्योतिः ॥ ४ ॥
स्वाहेति स्वात्मानं गमयामीति स्वतेजसे तस्मै ।
यः कार्य्यकारणेशः परमात्मेत्यच्युतैकताऽस्य मनोः ॥५॥

इति । एतेन "विज्ञानमानन्दं ब्रह्म" ( बृ. ५ । ६ ) "सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे" ( गो. पू. १ ) इतिश्रुतिसमुद्दिष्टं परमात्मनः स्वरूपलक्षणं च स्वशब्देन प्रत्यक्षरूपेणाभिव्यक्तम् ।

परोक्षरूपेण यद्यपि गुणशक्त्यादिकमप्युक्तमेव तथापि स्फुटतयाऽवबोधाय प्रत्यक्षरूपेण पुनराह—

"अथवा गोपीजन इति समस्तजगदवनशक्तिसमुदायः ।
तस्य स्वानन्यस्य स्वामी वल्लभ इति ह निर्दिष्टः ॥ इति ।

एवमपि कामवीजविवरणरूपस्यास्य मंत्रस्योक्तकामवीजव्याख्याननिरूपिता धर्मा न स्फुटतया निरूपिता इति तदर्थं परिकरवैशिष्ट्यमाह—

अथवा व्रजयुवतीनां दयिताय जुहोमि मा मदीयमपि।
इत्यर्पयेत्समस्तं ब्रह्मणि सगुणे सकलसम्पत्त्यै ॥ इति ॥

गुणपदेनात्र छान्दोग्यादौ भूमविद्यादहरविद्याशाण्डिल्यविद्याद्युक्ता, ये च किल गोपालतापिन्यां विवेचितास्ते ज्ञेयाः, न तु प्राकृताः प्रयोजनशून्यत्वादिति।

तथा उक्तमंत्रव्याख्यानकल्पत्रयं न परस्परनिरपेक्षमपितु समुच्चितमेव। तथाच, अथवेत्यत्र वा शब्दश्चकारार्थे प्रयुक्त इत्यवधेयम्।

तथा—मन्त्रघटकगोपीभिः सह दाम्पत्यमुक्तं गौतमीयमंत्रे मंत्रव्याख्यान एव,—

यथा—अनेकजन्मसिद्धानां गोपीनां पतिरेव सः।
नन्दनन्दन इत्युक्तस्त्रैलोक्यानन्दवर्धनः ॥ इति ॥

पूर्वं व्रजयुवतीदयितत्वमुक्त्वा पुनः पतित्वाभिधानं परकीयात्वव्यावर्तनाय स्वशब्देन दाम्पत्याभिधानायैव चेत्यपि बोध्यम्।

गोपीजनवल्लभशब्दस्य स्फुटतया सर्वार्थमाह पद्मपुराणे वृन्दावनमाहात्म्ये—

वहिरंगैः प्रपञ्चस्य स्वांशैर्मायादिशक्तिभिः। अन्तरंगैस्तथा नित्यविभूतैस्तैश्चिदादिभिः॥ गोपनादुच्यते गोपी राधिका कृष्णवल्लभा। सर्वलक्ष्मीस्वरूपा सा कृष्णाह्लादस्वरूपिणी। अतः सा प्रोच्यते विप्र ह्लादिनी तु मनीषिभिः। सा तु साक्षात्महालक्ष्मी कृष्णो नारायणः स्वयम्। (वृ. १२। ५१) इति।

अनन्तरं राधाकृष्णयोः सर्वात्मकत्वं निरूप्य "सैषा हि राधिका गोपी जनस्तस्याः सखीगणः। तस्याः सखीसमूहस्य वल्लभौ प्राणनायकौ॥ राधाकृष्णौ" इत्यादिनाचेति। कामवीजव्याख्यायां तु तयोः साहित्यं पूर्वमेव—

"ककारः पुरुषः कृष्णः सच्चिदानन्दविग्रहः।

ईकारः प्रकृती राधा नित्यवृन्दावनेश्वरी" ॥

इत्यादिबृहद्गौतमीयतन्त्रादिवाक्येनोक्तमितिध्येयम् ।

एवंच "ध्यायति रसयति भजति" इत्युक्ततापिनीवाक्ये-आस्वादनार्थकचौरादिकरसधातुरेव प्रकृतः, इत्येव निश्चयः प्रतिभाति। तथासति सुष्ठुतया "रसो वै सः । रसँह्येवायंलब्ध्वाऽनन्दी भवति" ( तै० व्र.३ ) इत्यादिश्रुत्युक्तलक्षणव्याख्यातकामवीजार्थःसंगता भवति "अथ कामवीजस्य शरीरं श्रीविग्रहात्मकम्" इत्यादि सनत्कुमारसंहिताद्युक्तवाक्यैः-भावविशेषेण कामवीजद्वारा साक्षान्मन्मथमन्मथात्मकसर्वातिशायिनिरवच्छिन्नप्रेमानन्दरसघनश्रीपुरुषोत्तमस्वरूपगुणादिरसास्वादनार्थप्रवर्तनस्यैव तात्पर्य्येणानुविधानावगमात् । मंत्रार्थस्वरूपध्यानादिवाक्यैरपि तथैवावगमाच्च । किंच "यो ध्यायति रसयति भजति" इतिवाक्ये कर्माकांक्षायां "सन्निधिपठितम्" "परं ब्रह्मैव तत्" इत्येव वाक्यं कृष्णाख्यपरब्रह्मस्वरूपात्मककर्मसमर्पकतयाऽन्वीयते । तदेव 'कृष्णाख्यं परंब्रह्म यो ध्यायति' इत्यर्थः संगच्छते । एवंच रसनस्य शब्दार्थकधातुनिष्पन्नत्वे-यः कृष्णाख्यं परंब्रह्म रसति शब्दति, इत्यन्वयार्थः स्यात् स च न समीचीनः प्रतिभाति । तस्मात् चौरादिकणिजन्तास्वादार्थकरसधातुनिष्पन्न एव "तस्य पुनारसनमित्यत्र रसनशब्दः । "योध्यायति" इत्यनन्तरमपि रसयति, इत्येव पाठः समीचीनः । "तं ध्यायेत् रसयेत्, इत्याद्युपसंहारे सर्वपुस्तकेषु णिजन्त एव रसधातुप्रयोग उपलभ्यते इत्युक्तमेति संक्षेपः ।

इति मैथिलझोपाख्यभगीरथशर्मसंकलिते गोपालतापिन्युपनिषद्भाष्ये पूर्वतापिनीविभागे प्रथमोपनिषत् ( प्रपाठकोऽध्यायोवा ) सम्पूर्णतामगात् ॥

---

## अथ द्वितीयोपनिषत्प्रारभ्यते ।

**मू० तदेष श्लोकः क्लीमित्येतदादाय कृष्णाय गोविन्दाय गोपीजनवल्लभायेति बृहद्भानव्या सकृदुच्चरेद्योऽसौ गतिस्तस्यास्ति मङ्क्षु नान्या गतिःस्यादिति ॥**

पूर्वोपनिषदि निरूपितमर्थमुपपत्त्या पुनर्ग्राहयितुं प्रक्रमते "तदेष श्लोकः" इत्यादि । 'तदेषः' यस्मात्पञ्चाङ्गं पञ्चपदं जपन् पञ्चाङ्गं ब्रह्म सम्पद्यत एव न तत्र साधनान्तरव्यवधानं नवा गत्यन्तरं तस्मात् तदर्थग्राहकः एष श्लोकः ऋग्रूपः वेदेषु पठ्यते इति । किं पठ्यते इत्याह "क्लींमित्येतदायेत्यादि । "बृहद्भानव्या" इति बृहद्भानुरग्निस्तत्पत्नी बृहद्भानवी स्वाहा तया सह कृष्णायेत्यादिपदपञ्चात्मकं क्लींमित्येतदादावादाय "सकृदप्युच्चरेत्" एकवारमप्युच्चरेत् निरूपितश्रीकृष्णाख्य परब्रह्मसम्प्रदानकस्वात्मात्मीयसर्वसमर्पणरूपतदर्थानुसंधानपूर्वकं गुरूपसत्तिपूर्वकं श्रद्धापूर्वकं च य एतत्परब्रह्मसम्बन्धप्रकाशकं मन्त्रमुच्चरेत् "तस्य" श्रीपुरुषोत्तमाख्ये परे ब्रह्मणि सर्वसमर्पितस्य "मंक्षु" अतिशीघ्रमेव "असौ गतिः" 'ब्रह्म सम्पद्यते' इति पूर्वोक्तलक्षणा "क्लीं कृष्णायेत्यादिपञ्चावयवमहामंत्रप्रतिपाद्यनिरतिशयप्रेमानन्दरसमयश्रीपुरुषोत्तमप्राप्तिस्वरूपा, गतिः प्राप्तिरित्यनर्थान्तरम् "अस्ति" मंत्रद्वाराभगवत्सम्प्रदानकस्वात्मात्मीयसर्वसमर्पणसमय एव निश्चितं प्राप्तास्तीतिभावः । प्राप्तेरवश्यंभावबोधनाय, "अस्ती" तिवर्तमानप्रयोगः । अतिशीघ्रत्वबोधनाय, "मङ्क्षु" इति शब्दप्रयोगः । "नान्या गतिः स्यादिति" तादृशब्रह्मसम्पत्तिलक्षणगतेः 'अन्या' भिन्ना गतिः न स्यादित्यर्थः । अत्र– 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहंत्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोसि मे ।" इति गीतावाक्यम् ।

वाल्मिकीये विभीषणशरणागतौ—

सकृदेव प्रपन्नो यस्तवास्मीति च याचने ।

अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥

इति श्रीरामवाक्यम् । पद्मपुराणे वृन्दावनमाहात्म्ये नित्यलीला-रहस्याख्याने श्रीमहादेवम्प्रति,

सकृदावां प्रपन्नोयस्त्यक्त्वोपाय उपासते । गोपीभावेन देवेश स मामेति नचेतरः ॥ सकृदावां प्रपन्नो वा मत्प्रियामेकिकामुत । सेवतेऽनन्यभावेन स मामेति न संशयः । यो मामेव प्रपन्नश्च मत्प्रियां नैव शङ्कर । न कदाचित्स चाप्नोति मावेवं ते मयोदितम् । सकृदावां प्रपन्नो यस्तवास्मीति वदेदपि । साधनेन विनाप्येव मामाप्नोति न संशयः" ॥ पद्मपु० पाताल ख० वृ० मा० अ० १३ । इत्यादि—तदुपबृंहकाणिश्रीमुखवाक्यान्यनुसंधेयानि ।

अत्र 'यो मामेव प्रपन्नश्च मत्प्रियां नैव शङ्कर ।

न कदाचित्स चाप्नोति मामेवं ते मयोदितम् ।

इत्यस्य परमाह्लादिनीशक्तेः परमश्रियाः राधायाः समुपसत्तिमन्तरा तद्भावाभावात्तद्भावाभावे तादृशरसरूपपुरुषोत्तमरसानुशीलनासंभवात्तस्या उपसत्तिःपरमावश्यकीति भावार्थः । अत एव "मावेवम्, इति तात्पर्य्यविशेषाभिव्यंजकम्, "अस्मच्छब्देन सहैवम्पदं विशेषितमिति वोध्यम् ॥

प्रकृतपञ्चपदीमंत्रसमाराध्यश्रीपुरुषोत्तमस्वरूपध्यानं तु यद्यपि पूर्वं स्वरूपनिरूपणप्रस्तावान्तर्भूतमेव, तथापि संक्षेपेण बुद्धौ समारोहाय समानप्रकरणीयपाद्मवृन्दावनमाहात्म्योपान्त्याध्यायादिहोद्धृयते—

"शिव उवाच"

अथ ध्यानम्प्रवक्ष्यामि मन्त्रस्यास्य द्विजोत्तम । पीताम्बरं घनश्यामं द्विभुजं वनमालिनम् ॥ ३५ ॥ वर्हिवर्हिकृतोत्तंसं शशिकोटिनिभाननम् । घूर्णायमाननयनं कर्णिकारावतंसिनम् ॥ ३६ ॥ अभितश्चन्दनेनाथ मध्ये कुंकुमविन्दुना । रचितं तिलकं भाले-

बिभ्रतं मण्डलाकृति ॥ ३७ ॥ तरुणादित्यसंकाशं कुण्डलाभ्यां विराजितम् । घर्माम्बुकणिकाराजद्दर्पणाभकपोलकम् ॥ ३८ ॥ प्रियास्यन्यस्तनयनं लीलापाङ्गोन्नतभ्रुवम् । अग्रभागन्यस्त-मुक्ताविस्फुरत्प्रोच्चनासिकम् ॥ ३९ ॥ दशनज्योत्स्नया राजत्पक्क-बिम्बफलाधरम् । केयूरांगदसद्रत्नमुद्रिकाभिर्लसत्करम् ॥४०॥ बिभ्रतं मुरलीं वामे पाणौ पद्मं तथैव च । काञ्चीदामस्फुरन्म-ध्यं नूपुराभ्यां लसत्पदम् ॥ ४१ ॥ रतिकेलिसमावेशचपलं चपले-क्षणम् । हसन्तं प्रियया सार्धं हासयन्तं च तां मुहुः ॥ ४२ ॥ इत्थं कल्पतरोर्मूले रत्नसिंहासनोपरि । वृन्दारण्ये स्मरेत्कृष्णं संस्थितं प्रियया सह ॥ ४३ ॥ वामपार्श्वे स्थितां तस्य राधिकां च स्मरेत्ततः । नीलचोलकसंवीतां तप्तहेमसमप्रभाम् ॥ ४४ ॥ पदाञ्चलेनावृतार्धसुस्मेराननपङ्कजाम् । कान्तवक्त्रे न्यस्तनेत्रां चकोरीं चञ्चलेक्षणाम् ॥ ४५ ॥ अंङ्गुष्ठतर्जनीभ्यां च निज-कान्तमुखाम्बुजे । अर्पयन्तीं पूगफलं पर्णचूर्णसमन्वितम् ॥४६॥ मुक्ताहारस्फुरच्चारुपीतोन्नतपयोधराम् । क्षीणमध्यां पृथुश्रोणीं किं-ङ्किणीजालमण्डिताम् ॥ ४७ ॥ रत्नताटंककेयूरमुद्रावलयधारिणीं रणत्कनकमञ्जीररत्नपादांगुलीयकाम् ॥४८॥ लावण्यसारमुग्धां-गीं सर्वावयवसुन्दरीम् । आनन्दरससम्मग्नां प्रसन्नां नवयौव-नाम् ॥ ४९ ॥ सख्यस्तस्याश्च विप्रेंद्र तत्समानवयोगुणाः । तत्सेवनपराभाव्या चामरव्यजनादिभिः ॥ ५० ॥ इति ।

सपरिकरस्य साक्षान्मन्मथमन्मथस्य परमपुरुषस्य नन्दनन्दनस्य भावनायां प्रकारविशेषोऽपि स्वरूपनिरूपणप्रस्ताव एव पद्मपुराणीयवाक्येन पुरुषार्थ-बोधिनीवाक्येन च दर्शितमेवेति ध्येयम् । इदमेव च परमपुरुषस्य युगलरूपम् बृहदारण्यके प्रथमाध्याये—

"आत्मैवेदमग्र आसीत्पुरुषविधः । सोऽनुवीक्ष्य नान्यदात्मनोऽ-पश्यत्" इत्युपक्रम्य "स नैव रेमे तस्मादेकाकी न रमते । स द्वि-

तीयमैक्षत् स हैतावानास यथा स्त्रीपुमांसौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधा पातयत्पतिश्च पत्नीचाभवताम्" इत्यादिना, चतुर्थाध्याये च द्वितीयब्राह्मणे—

"इन्धो नामैष योऽयन्दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धं सन्तमिन्द्रमित्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥ अथैतद्वामेऽक्षणि पुरुषरूपमेषाऽस्य पत्नीविराट्-तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशः; (बृ. अ. ४ । २ ।)

इत्यादिना, शतपथब्राह्मणेऽग्निरहस्यकाण्डेपञ्चमाध्याये द्वितीयब्राह्मणे च-

'एष हिरण्मयः पुरुषोऽयमेव योऽयं दक्षिणेऽक्षन्पुरुषः'। तस्यैतन्मिथुनं योऽयंसव्येऽक्षन्पुरुषोऽर्द्धमुहैतदात्मनो यन्मिथुनं यदा वै सह मिथुनेनाथ सर्वः, 'स एष एवेन्द्रः योऽयन्दक्षिणेऽक्षन्पुरुषोऽथेयमिन्द्राणी' तौ हृदयाकाशं प्रत्यवेत्य मिथुनीभवतः"

इत्यादिना, एकात्मभूतयुगलरूपतया पारमैश्वर्य्यवत्तयेन्द्रशब्देनेन्द्राणीशब्देन च निरूप्यते। तथाच तयोरेकात्मत्वादेवान्योन्यरमणेऽपि नात्मारामत्वव्याघातादि, इत्यपि बोध्यम्। तदेतत्सर्वं विस्तृतं विवेचितम्मया भगवत्तत्त्वसुधानिधावुपोद्घाततरङ्गे बृहदारण्यकविभागे चेति।

इदमेव च साक्षान्मन्मथमन्मथस्वरूपं श्रीपुरुषोत्तमयुगलम्प्राकृतबुद्ध्यतीतं निखिलोपनिषन्निगूढज्ञानगोचरं विशेषतः "रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात् ( तै० व्र० ७० ) इतितैत्तरीयरसश्रुतिगोचरम्। छान्दोग्येच "यदा वै सुखं लभतेऽथ तदा करोति नासुखंलब्ध्वा करोति सुखंत्वेव विजिज्ञासितव्यम्" इत्युपक्रम्य "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्यादिना प्रेमरसधर्मपरमाकर्षकानरतिवानन्दरूपतया, भूमविद्यायां नारदम्प्रति भगवता सनत्कुमारेणोपदिष्टं वस्तु, यत्तादृशरसाभिव्यञ्जकनिरूपितकामबीजेनोपास्यते ॥ तदुपासनस्य परमफलमपि तत्रैव भूमविद्यायामुच्यते—तात्पर्य्यविशेषयुक्तशब्दव्यूहेन।—

"एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति।" इत्यदिना 'तदेष श्लोको-न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतं च दशचैकश्च सहस्राणि च विंशतिः" (छा० उ० ७। २६।) इति। तैत्तरीयेऽपि "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" (तै. ब्र. १) इति "आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः, इत्यत्रात्मपदार्थो भूमाख्यः परमात्मा श्रीपुरुषोत्तम एव परमप्रेष्ठो नतूपासकस्य स्वात्मा तेन मिथुनासंभवात् "स्त्रीपुंसामिथुनं युगम्" इतिवाक्यात्। तथैव " एकधा भवति " इत्याद्युत्तरग्रन्थसंगतेश्चेति। इति।

एतयोरपि व्याख्यानविस्तरस्तु मत्कृतभगवत्तत्त्वसुधानिधौ मुक्तिस्वरूपनिरूपणे तैत्तरीयविभागे छान्दोग्यविभागे च द्रष्टव्यम्। एतदेव प्रकृतोपनिषद्यपि "ब्रह्म सम्पद्यते, इत्यंशेनापि सूत्रितम्।

ननु व्याख्यातकामवीजपुरस्कृतश्रीपुरुषोत्तमोपासनस्य कामसम्भिन्नप्रेमरूपत्वात् कथं तेन "ब्रह्म सम्पद्यते" योऽसौ तस्यास्ति गतिर्मत्तु नान्यागतिः स्यादिति, इति झटित्युक्तलक्षणब्रह्मभावाप्तिरूपमोक्षसिद्धिः। श्रूयते चोपनिषत्सु—

"काममय एवायं पुरुषः स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते॥५॥ "तदेव सक्तः सह कर्मणैति लिंगं मनो यत्र निषक्तमस्यप्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्। अस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति कामयमानोऽथाऽकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति ( बृ. उ. अ. ४ ब्रा. ४। ६ ) इति—

सकामस्य संसारप्राप्तिः, निष्कामस्यैव च ब्रह्मभावाप्तिरितिचेन्न, एतद्वाक्येनापि श्रीपुरुषोत्तमकामस्य पुरुषोत्तमभावाप्तिरपि नियम्यते एव। सांसारिकवस्तुकामस्य तदभिनिवेशपरम्परया तदभिसम्पत्तिः परमात्मकामस्य तदभिनिवेशेन तदभिसम्पत्तिः फलं समानन्यायात्। अत एवोत्तरवाक्ये अकामनिष्कामत्वादिवत् "आत्मकामः" इत्यंशेन परमात्मकामत्वमपि विशेषितम्। उक्तन्यायेन परमात्मकामत्वमन्तरा परमात्माभिसम्पत्तेरभावात्, परमात्मकामत्वे तूक्तन्यायादेवातिशीघ्रं परमात्माभिसंपत्तेः संभवाच्चेति। युक्तं चैतत्, ज्ञानेन रागनाशो बहुकालानन्तरम्। उत्कृष्टरागेण रागनाशस्तु त्रुटित्येव तथाच परमात्मरागेणातिशीघ्रमेव संसाररागनाशः परमात्माभिसम्पत्तिश्चेति। तदुक्तं भागवते दशमे कात्यायनीव्रतचर्य्यायां व्रजकिशोरीभावप्राप्तानृषीन् तादृशश्रुतीश्च प्रति स्वयम्भगवतैव—

न मय्यावेशितधियां कामः कामाय कल्पते।
भर्जिताः क्वथिता धानाःप्रायो बीजाय नेष्यते॥ इति।

रासपञ्चाध्याय्यां ताभिरपि—

सुरतवर्धनं शोकनाशनं स्वरितवेणुना सुष्ठु चुम्बितम्।
इतररागविस्मारणं नृणां वितर वीर नस्तेऽधरामृतम्॥ इति।
( भा. द. स्क अ. ३१ श्लो. १४ )

तथाच सर्वापेक्षया रागद्वारा परमपुरुषप्राप्तेरतिशीघ्रभावित्वबोधनायैव प्रकृते "कामादिकृष्णाय" इतिवाक्ये ऽतिशीघ्रार्थकं मंक्षुपदं विशेषितम्। इति।

छान्दोग्ये वाजसनेयके च शाण्डिल्यविद्याश्रुतिभिरप्येवमेव समर्थितम्भवतीत्यवधेयं संक्षेपेणेति। प्रकृत मंत्राराधनरहस्यविशेषस्तु गुरुमुखादेव ज्ञातव्यः —

श्रुतं ह्येव भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयतीति तस्मै हैतदेवोवाच" ( छा. उ. अ. ४। ९। ३ ) इति—

छान्दोग्यश्रुतेः ।

ये किल निर्मलान्तःकरणा जितेन्द्रियास्तादृशभावविशेषेण श्री-पुरुषोत्तमस्वरूपानुशीलनेऽधिकारयुक्तास्तेषां निष्ठामाह पद्मपुराने वृन्दा-वनमाहात्म्ये भगवन्तं नारदम्प्रति भगवान्महादेवः—

दास्यः सखायः पितरौ प्रेयस्यश्च हरेरिह । सर्वे नित्या मुनि-श्रेष्ठ वसन्ति गुणशालिनः ॥ यथा प्रकटलीलायां पुराणेषु प्रकीर्तितम् । तथा ते नित्यलीलायां सन्ति वृन्दावने भुवि ॥ गमनागमने नित्यं करोति वनगोष्ठयोः । गोचारणं वयस्यैश्च विनाऽसुरविघातनम् ॥ आत्मानं चिन्तयेत्तत्र तासां मध्ये मनोरमाम् । रूपयौवनसम्पन्नां किशोरीं प्रमदाकृतिम् ॥ नाना-शिल्पकलाभिज्ञां कृष्णभोगानुरूपिणीम् । प्रार्थितामपि कृष्णेन तत्र भोगपरांमुखीम् ॥ प्रीत्यानुदिनसंयत्नात्तयोः संगमकारि-णीम् । इत्यात्मान विचिन्त्यैव तत्र सेवां समाचरेत् ॥ ब्राह्मं मुहूर्तमारभ्य यावत्स्यात्तु महानिशा ।" इति । ( अ० १२ )

एव नारदीयपुराणेऽपि पूर्वखण्डे श्रीयुगलमंत्रव्याख्यायां सन-त्कुमारवाक्येऽन्यत्र च बहुशोद्रष्टव्यम् ।

इदन्त्वत्र चिन्तनीयम् । यदि कामबीजम् , एतादृशसर्वभावगर्भितं तर्हि पूर्वोक्तं "क्लीमोंकारयोरेकतत्त्वं वदन्ति ब्रह्मवादिनः" इति ययोरैक्यं कथं संगतं स्यात्प्रणवस्य तादृशार्थगर्भकत्वाभादिति । अत्राच्यते प्रणवेऽपितादृशमर्वार्थोऽत्यन्तनिरूढ़तया वर्तत एव । एतएव वृद्धहारो-तस्मृतौ दशमाध्याये भगवान् हारीत आह—

ओंकारः स्यात्परं ब्रह्म सर्वमन्त्रेषु नायकः । त्र्यक्षरं तत्त्रयाणां च वेदानां स्थानमुच्यते ॥ अजायन्त ऋचः पूर्वमकाराद्विष्णु-वाचकात् । श्रीवाचकादुकारात्तु यजूंषि तदनन्तरम् ॥ ३६ ॥ अजायन्त तयोस्संगात्सामान्यन्यान्यनेकशः ।" इति ।

अकारस्य पुरुषोत्तमवाचकत्वमुकारस्य श्रीवाचकत्वम्मकारस्य सामजन-

कस्य तात्पर्य्येण श्रीपुरुषोत्तमयोः प्रेमसंगमप्रकाशकत्वमिति। एतदेव कामबीजेऽपि—

"ककारः पुरुष कृष्णः" इत्यादिना पूर्वमुक्तम्। परमश्रीरेव राधा परमविष्णुरेव कृष्णः, इत्यप्युक्तमेतिध्येयम् ॥

अथ तादृशभावानां कर्तव्यमाह भगवान्सदाशिवः पद्मपुराणे-वृन्दावनमहात्म्ये—

अथ तुभ्यं प्रपन्नानां धर्म्मान्वक्ष्यामि नारद। यानास्थाय गमिष्यन्ति हरिधाम नराः कलौः ॥ २२ ॥ इत्थंगुरोर्लब्धमंत्रो गुरुभक्तिपरायणः। सेवमानो गुरुं नित्यं तत्कृपां भावयेत्सुधीः ॥२३॥ सतां धर्मान् स्ततःशिक्षेत्प्रपन्नानां विशेषतः। ताडनं भर्त्सनं कामिभोग्यत्वेन यथा स्त्रियः ॥ २४ ॥ गृह्णन्ति वैष्णवानां च ततद्ग्राह्यं तथा बुधैः। ऐहिक्यामुष्मिकी चिन्ता नैव कार्य्या कदाचन ॥ २५ ॥ ऐहिकं तु सदा भाव्यं पूर्वाचरितकर्मणा। आमुष्मिकं तथा कृष्णः स्वयमेव करिष्यति ॥ २६ ॥ अतोहि तत्कृते त्याज्यः प्रयत्नःसर्वथा नरैः। सर्वोपायपरित्यागः कृष्णीयात्मतयार्चनम् ॥२७॥ सुचिरं प्रोषिते कान्ते यथा पतिपरायणा। प्रियानुरागिणी दीना तस्य संगैककांक्षिणी ॥ २८ ॥ तद्गुणान्भावयेन्नित्यं गायत्यपि शृणोतिच। श्रीकृष्णगुणलीलादिस्मरणादि तथाऽचरेत् ॥२९॥ न पुनः साधनत्वेन कार्य्यं तत्तु कदाचन। चिरं प्रोष्यागतं कान्तं प्राप्य कान्तधिया यथा ॥३०॥ चुम्बन्तीवाश्लिष्यतीव नेत्रान्तेन पिबत्यपि। ब्रह्मानन्दगतेवासु सेवते परया मुदा ॥ ३१ ॥ श्रीमदर्चावतारेण तथा परिचरेद्धरिम्। अनन्यशरणो नित्यं तथैवानन्यसाधनः ॥ ३२ ॥ अनन्यसाधनार्थत्वात्स्यादनन्यप्रयोजनः। नान्यं च चिन्तयेद्देवं न नमेन्न स्मरेन्न च ॥ ३३ ॥ नच पश्येन्न गायेच्च नच निन्देत्कदाचन। नान्योच्छिष्टं च भुञ्जीत नान्यशेषं च धारयेत् ॥३४॥ अवैष्ण-

वानां संभाषावन्दनादि विवर्जयेत् । ईशवैष्णवयोर्निन्दां शृणुयान्न कदाचन ॥३५॥ कर्णौ पिधाय गन्तव्यं शक्तौ दण्डं समाचरेत् । आश्रित्य चातकीं वृत्तिं देहपातावधि द्विज ॥३६॥ द्वयस्यार्थं भावयित्वा स्थेयमित्येव मे मतिः । सरः समुद्रनद्यादि विहाय चातकोयथा ॥ ३७ ॥ तृषितोम्रियतो वापि याचतेवा पयोधरम् । एवमेव प्रयत्नेन साधनानि विचिन्तयेत् ॥ ३८ ॥ स्वेष्टदेवः सदा याच्यो गतिस्त्वं मे भवेदिति । स्वेष्टदेवतदीयानां गुरोरपि विशेषतः ॥ ३९ ॥ आनुकूल्ये सदा स्थेयं प्रतिकूल्यं विवर्जयेत् । सकृत्प्रपन्नो वक्ष्यामि कल्याणगुणतां तयोः ॥ ४० ॥ विचिन्त्य विश्वसेदेतौ मामिमावुद्धरिष्यतः । संसारसागरान्नाथौ पुत्रमित्रग्रहाकुलात् ॥ ४१ ॥ गोप्तारौ मे युवामेव प्रपन्नभयभंजनौ । योऽहं ममास्ति यत्किंचिदिह लोके परत्र च ॥ ४२ ॥ तत्सर्वं भवतोरेव चरणेषु समर्चितम् । अहमस्म्यपराधानामालयस्त्यक्तसाधनः ॥ ४३ ॥ अगतिश्च ततो नाथौ भवन्तावेव मे गतिः । तवास्मि राधिकाकान्त कर्म्मणा मनसा गिरा ॥४४॥ कृष्णकान्ते तवैवास्मि युवावेव गतिर्म्मम । शरणं वां प्रयन्नोऽस्मि करुणानिकराकारौ ॥ ४५ ॥ प्रसादं कुरुतं दास्यं मयि दुष्टेऽपराधिनि । इत्येवं जपता नित्यं स्थातव्यं पदपञ्चकम् ॥ ४६ ॥ अचिरादेव तद्दास्यमिच्छता मुनिसत्तम । बाह्यधर्मा मया ह्येते संक्षेपेणोपवर्णिता ॥ ४७ ॥ आन्तरः परमोधर्मः प्रपन्नानामथोच्यते । कृष्णप्रियासखीभावं समाश्रित्य प्रयत्नतः ॥ ४८ ॥ तयोः सेवां प्रकुर्वीत दिवा नक्तमतन्द्रितः । उक्तोमंत्रस्तदङ्गानि तथातस्याधिकारिणः ॥ ४९ ॥ तद्धर्म्माश्च तथा तेभ्यः फलंमंत्रस्य नारद । अनुतिष्ठ त्वमप्येत्तयोर्दास्यमवाप्स्यति ॥५०॥ स्वाधिकारक्षये विप्र सन्देहो नात्र कश्चन । सकृन्मात्रप्रपन्नाय तवास्मीति च याचते ॥५१॥ निजदास्यं हरिर्दद्यान्नात्र मेऽत्रास्ति विचारणा ॥

इति। अत्र "नान्यं च चिन्तयेद्देवम्" इत्यादि "नान्यशेषं च धारयेत्" इत्यन्तं वाक्यं स्वातन्त्र्येण फलविशेषकामनया च देवान्तराराधननिषेधपरम्। तेन वर्णाश्रमधर्ममध्यपातिनित्ये नैमित्तिके च कर्मणि तदंगभूता देवाः पितरश्च भगवद्विभूतिरूपतया पूजनीया एव। अन्यथा नित्यकर्मविलोपापत्तेः। तथाच "नियतस्य तु संन्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्तितः" इति गीतोक्तभगवदाज्ञाभंगापत्तेः। एवंच यथा सीतारुक्मिण्यादिसदृशपतिव्रताऽपि देवरादीनपि पतिपरिवारतया यथोचितसत्कारेण संभावयन्ति नतु स्वातंत्र्येणोपसर्पन्ति न वा पातिव्रत्यमदेन तान् तिरस्कुर्वन्ति तथा भाव्यं श्रेयोर्थिभिरिति सर्वं समञ्जसम्। श्रीराधाकृष्णार्पणमस्तु। इदन्त्विहावधेयम्। अत्र कामबीजव्याख्या प्रसंगेन श्रीपुरुषोत्तमस्य शृङ्गारोपासनरहस्यं संक्षेपतो मया लिखितम्। तदेतस्य प्रकृतप्रकरणविषयेष्वन्तरङ्गतमविषयत्वेनात्रोपनिवन्धनमन्तराप्रकृतप्रकरणस्य यथावदुपपादनाभावात्तादृशभावस्य शास्त्रीयत्वोपपादनस्यकावश्यकत्वाच्च बोध्यम्। यथा राजसूयाश्वमेधादीनामिदानीन्तादृशतादृशाधिकारियजमानाभावेऽपि तत्तत्कल्पव्याख्यायां तस्य तस्य यज्ञस्यांगचिन्तनमिदानीमपि विद्वद्भिः क्रियत इति। निगूढतमोऽयंभावः, इदानींतनैः प्राकृतैर्जनैः सर्वथाऽशक्यानुष्ठेय एवेति जानीमः। दृश्यन्ते चेदानीं रसिकभक्तंमन्याः सर्वमार्गभ्रष्टा भक्तिं कलंकयन्तो वहुवो जनाः, इति पुरुषविशेषैः स्त्रीविशेषैरेव चायंगम्यः। तस्मादिदमुपासनं न कदाचिदप्यंधपरम्परायाऽनुकरणीयं प्रचारयितव्यंचेति शान्तदास्यवात्सल्यादिकं सर्वजनाधिकारमिति तदाश्रित्यैव भगवान्भजनीयः। मन्त्रस्त्वयं सर्वभावसमनुगत इतितत्कल्पग्रन्थान्निश्चितमेवेति धेयम्।॥ २ ॥ १ ॥

व्याख्यातं ध्यानं रसनं च अथातः परम् "योध्यायति रसयति भजति" इत्यत्रैव सूत्रितं भक्तेःस्वरूपं व्याख्यायते यया विना ध्यानस्य रसनस्य च न विवक्षितस्वरूपनिर्व्वाहः, यया विना भगवाच्छ्रीपुरुषोत्तमो न कदापि वशीक्रियते। यस्याःपरमरसरूपलाभे कोटिस्येव भग-

वान्प्रकटीक्रियते इति। अत्रार्थे श्रुतयः शाखान्तरेऽपि भवन्ति—"तदेतत्प्रेयः पुत्रात्प्रेयोवित्तात्प्रेयोऽन्यस्मात्सर्वस्मात्" इत्युपक्रम्य "तस्मादात्मानं प्रियमुपासीत" (बृह० उ० अ० ११३) इति यतः परमात्मैव तत्त्वतो निरतिशयप्रेमास्पदस्तस्मात्तम् प्रियं प्रियत्वगुणविशिष्टतया परमप्रेम्णा समुपासीत इति तदर्थः। अन्यच्च "धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत। आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि" (मु. उ. २। २) भावग्राह्यमनीडाख्यं भावाभावकरं शिवम्। कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम्॥ (श्वे. उ. ६। २६) यस्य देवे पराभक्तिर्यथादेवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः (श्वे. उ. ६। १४) हृत्पुण्डरीकमध्ये तु भावयेत्परमेश्वरम्। साक्षिणं बुद्धिवृत्तीनां परमप्रेमगोचरम्। अगोचरम्मनोवाचामवधूतादिसंस्रवम्। सत्तामात्रप्रकाशैकप्रकाशं भावनातिगम् (मैत्रे उ. १। ४। ८) इत्याद्युपनिषद्वाक्येषु भावभक्तिपरमप्रेमशब्दगोचरायाः यस्याः भगवत्साक्षात्कारे परमावश्यकहेतुभावो बोध्यते। तस्याः प्रकृतार्थे समन्वयमाह भगवती श्रुतिः—"भक्तिरस्य भजनम्" इत्यादिना—

मू॰ भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन्मनःकल्पनम्। एतदेव च नैष्कर्म्यम्॥ २॥

'अस्य'—'कः परमोदेवः, इत्यादिना मीमांसितस्य कृष्णाख्यस्य परब्रह्मणो 'भजनं' भजनमेव 'भजति'' इत्यत्र भक्तिपदार्थः॥ भजनशब्दस्य भक्तिपर्य्यायमात्रत्वान्न पर्य्यायान्तरमात्रकथनेन भक्तेःपरिचय इति तस्य कार्य्यलक्षणमाह—"तदिहामुत्रपाधिनैराश्येनामुष्मिन्मनःकल्पनम्" इति। 'तत्' भजनम् 'इहामुत्रोपाधिनैराश्येन' उक्तलक्षणश्रीपुरुषोत्तमस्वरूपलाभातिरिक्ताया ऐहिकामुष्मिकफलकामनायाः सर्वथा परित्यागेन 'अमुष्मिन्' निरूपितलक्षणे श्रीपुरुषोत्तमे 'मनःकल्पनम्' मनः, योगादिसाधनसम्पन्नमनन्यमनस्थिरीकरणं तत् निरतिशयप्रेमानन्दघन-

परमात्मस्वरूपश्रीकृष्णाख्यपरब्रह्मविषयकंभावविशेषात्मकंपरप्रेमाख्यं वस्तु भक्तिपदार्थः। इतिवाक्यार्थः'। अथ पदार्थः 'मनःकल्पनमित्यत्र षष्ठीसमासः, कल्पनमित्यत्र कल्प्यते अनेनेति करणे ल्युट्। तथाच मनः कल्पनमित्यस्य मनः कल्प्यते स्थीरीक्रियते येनेत्यर्थः। कुत्र स्थिरीक्रियत इत्याकांक्षायां निरुक्तादशब्दार्थस्य श्रीकृष्णस्याधिकरणतयाऽन्वयः। एवंच निरुक्ते कृष्णाख्ये परे ब्रह्मणि यन्मनसः स्थितिः तत्साधनमिति "अमुस्मिन्मनः कल्पनमि" त्यस्यार्थः। तत्रेहामुत्रोपाधिनैराश्येनेत्यस्य निरुक्तलक्षणैहिकामुष्मिकानां स्वातिरिक्तानां साधनफलात्मकानामुपाधीनामत्यन्ताभावरूपस्य नैराश्यस्य सामानाधिकरण्येनान्वयः। तथाच ऐहिकामुष्मिकानां स्वातिरिकानां साधनफलस्वरूपानामत एवोपाधिभूतानामत्यन्ताभावेन सहैव भगवति स्थितिकारणम् यत् तत् भक्तिशब्दवाच्यमिति फलति। तादृशं च स्वतः फलरूपं भगवत्स्वरूपाविनाभूतं स्वप्रकाशानन्दात्मकमेव वस्तु भवितुमर्हति। स्वतः फलस्वरूपत्वाभावे निरुक्तलक्षणं किंचिदप्युपाधिमन्तरा तेन मनसोऽभ्युच्छिन्नस्थितेरनुपपत्तेः। तस्य भगवत्स्वरूपात्मकत्वाभावे तस्याऽन्यत्रापि सत्त्वसंभवेन तेन भगवत्स्वरूपातिरिक्तेऽपि मनसः प्रवृत्यापत्तेः॥ स्वप्रकाशत्वाभावे तस्य स्वतः फलत्वानुपपत्तेः। अत एव "सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति" (गो. उ. ता.) इत्यत्र भक्तेः सच्चिदानन्दरूपत्वमुत्तरतापिन्यां वक्ष्यते। तथाच स्वतःफलरूपः स्वयंप्रकाशानन्दरूपो भगवत्स्वरूपात्मको धर्म्मविशेष एव भक्तिः। स च धर्मोभगवन्निष्ठतया निसर्गसिद्धं निरतिशयं प्रियत्वमेव, स्वस्मिन्निरतिशयप्रियत्वस्यैव सर्वोपाधिविनिर्मोकेन स्वस्मिन् मनसो निरतिशयस्थिरीभावहेतुत्वात्।

ननु जीवानां निसर्गप्रियत्वं जीवे एव नतु भगवति आत्मन एव निसर्गप्रियत्वात् इतिचेन्न। ब्रह्मण्यात्मनि वा प्रियत्वानुभवोनात्मत्वकृतोऽपि त्वानन्दानुभवकृत एव, अत एव निरानन्दे जीवने देहोच्छेदेदेहात्मवादिनामपि प्रवृत्तिः। तस्मात्प्रियत्वानुभव आनन्दकृत एव, आनन्दस्य च

पुराकाष्ठा भगवत्येव । तैत्तरीये "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" इत्यनेनानन्दस्य तत्रैव परमा काष्ठेतिनिर्धारात् । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इतिश्रुतेस्तदानन्दस्यैव सर्वानन्दमूलत्वावधारणाच्च । प्रियत्वानुभवस्यात्मत्वकृतत्वेऽपि न क्षतिः तस्यैव सर्वेषामात्मनामप्यात्मत्वात् । तस्माद्भगवत्येव परमप्रियत्वनिर्धारः । तदुक्तं श्रुतिस्मृतिभ्यां "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्माच्च सर्वस्मादनन्तरं यदात्मा" बृ० इति "अहमात्मात्मनां धातः प्रेष्ठश्च प्रेयसामपि । अतोमयि रतिं कुर्य्याद्देहादिर्य्यत्कृते प्रियः" इति । एवमेत्र च निर्धारितंभागवते दशमे "ब्रह्मन् परोद्भवे कृष्णे इयान्प्रेमा कथं भवेत् । योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि दृश्यते" इति राजप्रश्नानन्तरं श्रीशुकः "सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः । इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि" इत्यादिना "कृष्णमेनमवेहित्वमात्मानमखिलात्मनाम् जगद्धिताय सोप्यत्र देहीवाभाति मायया ।। वस्तुतो जानतामत्र कृष्णं स्थास्नु चरिष्णु च ।। भगवद्रूपमखिलं नान्यद्वस्त्विह किंचन ।। सर्वेषामेव वस्तूनां भावार्थो भवति स्थिरः ।तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यताम् ।।" इत्यन्तेन । तस्मात्प्रियत्त्वं निरतिशयानन्दरूपस्य सर्वात्मभूतस्य श्रीकृष्णस्यैवासाधारणो धर्म्मो नान्यस्य इति स एव धर्म्मो भक्तिशब्देनोच्यते "प्रियत्वमेव प्रेमा प्रियशब्दात् भावे त्वप्रत्यये प्रियत्वस्य तस्मिन्ने वेमनिचूप्रत्यये कृतेप्रेमशब्दस्य च निष्पत्तेः "प्रेमा ना प्रियता हार्दमि" तिनैघण्टुकोक्तेश्च तयोः समानार्थकत्वात् । अत एव च "अथाऽतो भक्तिंव्याख्यास्यामः" इत्युपक्रम्य" "सात्वस्मिन्परप्रेमरूपा" इत्यदि नारदभक्तिसूत्राणि । "अथाऽतो भक्तिमीमांसा" इत्युक्रम्य "सा परानुरक्तिरीश्वरे" इत्यादिशाण्डिल्यभक्तिसूत्राणि चानुगृहीतानि भवन्ति ।। भक्तिरूपप्रेम्ण कार्य्यत्मुक्त्म्वा स्वरूपमपि तत्रैव श्रीनारदेन सूत्रितम् "अनिर्वचनीयं प्रेमस्वरूपम्" ।।५२।। मूकास्वादवत् ।।५३।। प्रकाश्यते क्वापि पात्रे ।।५४।। गुणरहितं कामनारहितंप्रतिक्षणवर्धमानमनु-

भवरूपम् ॥ ५५ ॥ तत्प्राप्य तदेवावलोकयति तदेव शृणोति तदेव चिन्तयति" ५६ इत्यादि । सा च भगवन्निष्ठप्रियत्वधर्मभूता भक्तिः, दैन्यादियुक्ते स्वानन्यशरणे जीवविशेषे करुणयैव भगवता भक्तसंगादिप्रणालिकयाऽवतार्य्यते, यथा दैन्यादियुक्तायां भूमौ ब्रह्मप्रार्थनाप्रणालिकया निजस्वरूपं यदा कदाचिदवतार्य्यत इतिभक्तिर्भक्तमानसीना भवति । सेयं फलरूपा भक्तिः विधयगोचरा भगवत्कृपैकलभ्या । यदा चेयं प्रस्फुटितनिखिलस्वधर्मा भवति । तदा फलरूपा इत्युच्यते यदा किंचिदेव स्फुटितस्वधर्मा तदा साधनरूपा भवति । श्रद्धादौ तु गौण्येव भक्तिशब्दप्रयोगः । सैवेयंभक्तिः "भावग्राह्यमनीडाख्यं भावाभावकरंशिवमिति" श्रद्धाभक्तिध्यानयोगादवेहि "यस्य देवे पराभक्तिः इति "श्वेताश्वतरे 'भावगतेन चेतसा" इतिमुण्डके च भावशब्देन भक्तिशब्देन च क्वचित्साधनरूपा क्वचित्फलरूपा च गृह्यते ।इयमेव च "आत्मानं प्रियमुपासीत" इति बृहदारण्यके आत्मपदवाच्यस्य प्रकृतस्यपरमात्मनोभगवत उपासनायां "परिचर्य्याप्युपासनमि" तिनैघण्टुकोक्तेःपरिचर्य्यालक्षणायामन्तरंगततमत्वेनोक्ता । तथाच "आत्मानंप्रियमुपासीत" इत्यस्य आत्मानं परमात्मानं प्रियं, इति भावप्रधाननिर्देशःतृतीयार्थेद्वितीया तथाच प्रेम्णा स्वभाविकेन प्रेम्णा भावयीत परिचरीत चेति तथा च 'मनःकल्पनम्' इत्यनेन प्रकृते तादृशानुराग एवोच्यतं इति स एव भक्तिरितिपरमार्थः ॥

एतदेवनैःकर्म्यम् । ॐ इतिमूलम् निरुक्तभावविशेषरूपं एतादृशभजनमेव नैष्कर्म्यम् । नैःकर्म्यशब्दो हि मोक्षशास्त्रे अनादिकर्मबन्धनस्य सवासननिर्मोके प्रयुज्यते । तेन तादृशभावलाभे एव सवासनानादिकर्मपाशात्-मुक्तिर्भवति इति सूचितम् । तदुक्तंश्रीनारदेन 'सात्वस्मिन्परप्रेमरूपा, अमृतस्वरूपाच" यल्लब्ध्वापुमान्सिद्धो भवत्यमृतो भवति, तृप्तो भवति, यत्प्राप्य न किंचिद्वाञ्छति न शोचति न द्वेष्टि न रमते नोत्साही भवति" यज्ज्ञात्वा मत्तो भवति स्तब्धो भवति आत्मारामो भवति" इति भक्तिसूत्रेभ्यः ॥ "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृ-

तिलम्भे सर्वग्रन्थीनां विप्रमोक्षः।" इति भूमविचारशेषे छान्दोग्यश्रुतेश्च। अत्र ध्रुवा स्मृतिः विशुद्धप्रेमलक्षणा पराभक्तिरेव, या तत्रैव "यत्र नान्यत्पश्यति" इत्यादि भूमलक्षणे निरूप्यते। तदेव सूत्रेष्वपि विवृतमिति। सा निरतिशयप्रकाशानन्दघना भगवदात्मिका भक्तिःभगवत्स्वरूपवत्स्वभावतोऽखण्डाप्यऽनन्तप्रकाशा भवति। अतएव भक्तभावानुसारेण शान्तदास्यवात्सल्योज्वलादिभेदेनानेकधा भासते। तत्रोज्वलभावे जारभावादिकं तु नाश्रयणीयं तस्यौपाधिकत्वाच्छुद्धभावापेक्षया नितरांहीनत्वेन शुद्धभावानधिकारिभिरेवाश्रयणीयत्वात्। दक्षिणमार्गानधिकारिणां रजस्तमश्चेतसां कृते वाममार्गवत्॥ जारभावे विशुद्धप्रेम्णोऽभावस्तु श्रीनारदैरुक्तः, भक्तिसूत्रे विशुद्धप्रेमप्रसंगे "यथा व्रजगोपिकानां। तत्रापि न माहात्म्यज्ञानविस्मृत्यपवादः। तद्विहीनं जराणामिव। नास्त्येव तस्मिंस्तत्सुखसुखित्वम्"। इति। गोपीप्रेमा तु न जारभावमूलकः। अपि तु भगवद्भावमूलक एव तच्च रासपञ्चाध्याय्यां ताभिरेव स्फुटीकृतम् "प्रेष्ठो भवाँस्तनुभृतां किल बन्धुरात्मा" इति एतस्यान्यथा व्याख्यानम्-जन्मजन्मतो जारभावभावितान्तःकरणानामेव रोचत इतिध्येयम्॥ २॥

( अथातीतग्रन्थतात्पर्य्यानुवादपूर्वकमग्रिमग्रन्थसंगतिरुच्यते )

अथ "कृषिर्भूवाचकःशब्द" इतिमंत्रेण ब्रह्मपदकृष्णपदयोरेकपर्य्यायत्वं निर्णीय द्वितीयेन "सच्चिदानन्दरूपाये" त्यनेन मंत्रेण तस्मिन्संक्षेपतः स्वरूपलक्षणंकार्य्यलक्षणं च समन्वीय सर्ववेदवेद्यत्वं सर्वविद्याप्रवर्तकत्वं सर्वसाक्षित्वं च निर्धारितं सूत्ररूपेण। अथ-तदेव तत्त्वं सोपपत्तिकं द्रढयितुं सर्वोत्कृष्टगुरुशिष्यसंवादरूपेणाविशेषप्रश्नप्रतिवचनात्मकेन चतुर्धा विभज्य समीक्षितं, तत्रापि परब्रह्मपदकृष्णपदयोरेकपर्य्यायत्वमभ्यस्तम्। पुनश्च तदेव तत्त्वं स्वरूपतः फलतः साधनतश्च निरूपयितुमजिज्ञासितमपि ध्यानादिकं स्वयमेवावतारितं जिज्ञासोत्पादनाय, ततश्च स्वरूपं फलं साधनंच निरूपितानि। तत्र स्वरूपं परब्रह्मणोनिरतिशयसच्चिदानन्दघनं पुरुषाकारमेव सर्वातिशायिसौन्दर्य्यमाधुर्य्योपपन्न-

मनन्तकल्याणगुणशक्तिस्वभावम्, फलमपि "तदेवेति पञ्चाङ्गं ब्रह्म सम्पद्यते" ब्रह्म सम्पद्यत इत्यनेनावधारितम्॥ साधनानि च भगवत्कृपाऽवान्तरव्यापारभूतानि ध्यानादीनि इति तान्यपि प्रतिज्ञातपरमदेवत्वपरममुक्तिप्रदत्वनिरूपणौपयिकतया संक्षेपतो निरूपितानि। अथ—निरूपितान्येव तानि उपपत्त्याऽभ्यासादिभिश्च प्रकारान्तरेण द्रढ़यितुं प्रक्रमते—

मू० कृष्णं तं विप्रा वहुधा यजन्ति गोविन्दं सन्तं वहुधा आराधयन्ति। गोपीजनवल्लभो भुवनानि दध्रे स्वाहाश्रितो जगदेतत्सुरेताः॥ ३॥

तत्र "कृष्णं तं विप्राः" इत्यारभ्य भूतिकामैर्य्यथावत्" इत्यन्तेन प्रधानतया परदेवसर्वाराध्यत्वसर्वात्मकत्वानन्तरूपत्वसर्वकामपूरकत्वपरमधामसंस्थत्वपरमधामप्रापकत्वसर्वविद्याप्रवर्तकत्वसर्वात्मबुद्धिप्रकाशकत्वमुमुक्षुशरण्यत्वपरममोक्षरूपपरमफलदप्रदत्वनिजात्मपर्य्यन्तदर्शकत्वभूतिप्रदत्वादिभिरुपपत्तिभिर्निरुक्तार्थानां पुनः पुनः शब्दतोऽर्थतश्चाभिधानरूपैरभ्यासैश्च परमदेवत्वं परममुक्तिप्रदत्वं सर्वप्रेकत्वं च प्रधानतया निरूपयति। तेन प्रथमद्वितीयचतुर्थप्रतिज्ञाविषया अर्थान्निरूपिता भवन्ति। गौणरूपेण च "कृष्णं तं विप्रा वहुधा यजन्ति" "कृष्णस्तथैकोऽपि जगद्धितार्थंशब्देनासौ पञ्चपदो विभाति" "एको वशी सर्वगः कृष्ण ईड्यः। एकोऽपि सन् वहुधा यो विभाति" इत्यादिभिः एकस्यैव कृष्णस्य सर्वात्मत्वोपपादनेन तदेकविज्ञानेन सर्वविज्ञानप्रतिज्ञामपि, अंशत उपपादयति। (एतैरेव वाक्यैरवाऽन्तरतात्पर्य्येण निरूपित भगवत्स्वरूप निर्णायकानामुपनिषदन्तरपठितानां शृङ्गग्राहिकया वाक्यानामप्यंशतः समानशब्दयोजनानुसंधानेन श्रीकृष्ण एव तेषां पर्य्यसानं, स एव तत्तत्प्रकरणपठितपरब्रह्मादिदेवादिशब्दार्थ इत्यपि सूचयति॥

"अथ ते पप्रच्छुरि" त्यारभ्य 'स वासुदेवो न यतोऽन्यदस्ति" इत्यन्तेन मुख्यतो "गोपीजनवल्लभविज्ञानेनाखिलविज्ञातं भवति" इति तृतीय-

प्रतिज्ञामाकाशादिनिखिलप्रपञ्चस्य भगवच्छक्तिविशेषरूपत्वोपपादेन तदा-त्मकत्वमुपपत्त्याऽभ्यासेन भूतार्थवादेन चोपपाद्य द्रढयति। गौणरूपेण च प्रथमद्वितीयचतुर्थप्रतिज्ञाः साधनानि फलं च निरूपयति। नच—नि-रुक्तग्रन्थभागस्य मुख्यतः प्रतिज्ञाचतुष्टयोपादकत्वे किंबीजम्। तत्तद्वाक्य-पर्य्यालोचनया साधननिरूपणस्यैव मुख्यतया प्रतीतेः। तस्मादेषां वाक्यानां साधननिरूपणे एव मुख्यतात्पर्य्यंप्रतिज्ञाचतुष्टयोपपादकत्वंत्व-र्थलभ्यमेवेतिवाच्यम्। तथा-सति "तस्मात्कृष्ण एव परमोदेव' इत्युप-संहारस्यासंगतत्वापत्तेः॥ उपक्रम्य सोपपत्तिनिरूपणानन्तरमेव हि उप-संहार इतिन्यायः। नतु उपक्रममात्रानन्तरम्। तथाचोपक्रमोपसंहारयो-र्मध्ये पठिता श्रुतय उपपत्त्यादिपरत्वेनापि मुख्यत एव व्याख्येयाः। अतएव 'तस्मात्कृष्ण एव परमोदेवः, इत्युपसंहारवाक्ये–परमोदेव "तत्र" इत्यंशेन "कृष्णो वै परमदैवतमि' त्युपक्रमार्थमनुवदति "तस्मादि' त्यनेन च प्रतिज्ञा-नन्तरमुपसंहारपर्य्यन्तमुपपाद्यमानं प्रकरणतात्पर्य्यनिर्णायकमुपक्रमोपसं-हारातिरिक्तमभ्यासापूर्वताफलोपपत्त्यादिकमात्तपति* "एवं च मध्ये तन्नि-रूपणाभावे गौणतया निरूपणे वा सर्वमुख्यतया "तस्मात्कृष्ण एव पर-मो देव" इत्युपसंहारनिर्धारो न सम्भवेत्। तस्माद्यथा-काठके "तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्" "एतदालम्वनं श्रेष्ठमेतदालम्वनं परमेतदा-लम्वनं ज्ञात्वा यो यदिच्छति तस्य तत्" "यमेवैष वृणुते स तेन लभ्यः" यथाच मुण्डके "प्रणवो धनुः शरोह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते" ओमि-त्येवंध्ययथ आत्मानम्, "उपासते ये पुरुषं ह्यकामा' नायमात्माप्रवच-नेन लभ्यः'' यथा च माण्डूक्ये "ओमित्येतदक्षरमिदꣳ सर्वमि" त्यादिमुख्य-नोपासनामंत्रादिलिंगकेन शब्देन वस्तुतत्त्वनिरूपणेऽपि न तत्तत्प्रकरणस्य तात्पर्य्यविषयःसाधनचिन्तनमपितुब्रह्मतत्त्वनिरूपणमेव साधनचिन्तनंतु तदुपयोगितयाऽवन्तरतात्पर्य्यविषयंएव तथा प्रकृतेऽपि साधनलिंगकेनापि-शब्देन निरुक्तप्रतिज्ञातार्थचिन्तनमेव मुख्यतात्पर्य्यगोचरं साधनचिन्तनं तु तदुपयोगितया ऽवान्तरतात्पर्य्यविषय एव। अतएव न तस्याऽत्र

स्वातंत्र्येणोपक्रमोपसंहार इतिबोध्यम् ॥ अनेनैव चान्यप्रतिज्ञात्रयोपसंहारोपि सूचितः । तत्र "तंध्यायेदित्यादिसाधनोपसंहारस्तु तच्छेषतयैव तथैव प्रतीतेः इति निरुक्तक्रम एव साधुः । तदेवं "स वासुदेवो न यतोऽन्यस्ति" इत्यन्तग्रन्थतात्पर्य्यं संगृह्याक्तं सुबोधाय । अथ तदेव खण्डशो-दर्शयितुं तत्तद्वाक्यानि संक्षेपतो व्याख्यायन्ते ।—

ननु कथं कृष्ण एव परमोदेवः ततद्यज्ञेषूपासनेषु चाग्निरुद्रादीनामपि यजनीयत्वोपासनीयत्वादिना शास्त्रेषु विधानात् । वैष्णवशास्त्रेष्वपि पंचरात्रादिषु नानारूपाणामुपासनाऽभिधानाच्च । तथा मृत्युनिवारकत्वेन जगदुपादाननिमित्तत्वेन विश्वप्रेकत्वेन च तत्तदुपनिषत्सु तत्तन्नामभिस्तत्तद्देवोपस्थापनाच्च न कृष्णस्यैव परमदेवत्वं गोविन्दाभिधानस्य तस्यैव मृत्युनिवारकत्वं गोपीजनवल्लभाभिधानस्यैकविज्ञानेन सर्व्वविज्ञान प्रतिज्ञानिर्वाहकत्वं स्वाहया च तस्यैव संसारकत्वमित्यत आह—

"कृष्णं तमिति" तमेव निरुक्तलक्षणं कृष्णं लीलाविस्तारार्थं साक्षादंशत आवेशत अन्तर्य्यामिरूपेण वा विविधनामरूपापन्नं विप्रा वेदनिपुणाः । विप्रा. इत्यस्य क्रियाभेदेन सर्वत्रान्वयः । लीलानिर्वाहार्थमाविष्कृतवेदविद्यानुसारेण वहुधा वहुविभूतिसम्पन्नं वहुप्रकारेणच यजन्ति "विष्णुक्रान्तं वासुदेवं विजानन् विप्रो विप्रत्वं गच्छते तत्त्वदर्शी" इति शाट्यायनीश्रुतेः । "तमेव गोविन्दं विभिन्ननामरूपात्मनावस्थितं मृत्युभीरवो विप्रा वहुधा आराधयन्ति मोक्षसिद्धय अनुकूलयन्ति इत्यर्थः ॥ तथा स एव गोपीजनवल्लभः निरूक्तलक्षणः भुवनानि दध्रे धारयति पालयतिच । स्वाहाश्रितः निरुक्तलक्षणस्वाहाश्रयभूतो नानानामभिः इति विप्रा जानन्ति । एवंच एक एव कृष्णः स्वलीलया विविधनाम रूपैर्विविधेषु यज्ञेषु समुपास्यते । तत्तत्कार्याणि च कुर्व्वन्ननुरूपैर्नामभिः स्वरूपैश्च वेदेषु निरूप्यते नतु वस्तुतत्त्वभेदाभिप्रायेण । अतः कृष्णस्यैव सर्वमूलरूपस्य तानि विभिन्नप्रकाशात्मकानि रूपाणि प्रकाशी तु सर्वमूल भूतः कृष्ण एवेत्यर्थः ॥ १ । ३ ॥

मू० वायुर्यथैको भुवनं प्रविष्टो जन्ये पंचरूपो वभूव ।
कृष्णस्तदेकोऽपि जगद्धितार्थं शब्देनाऽसौ पञ्च-
पदो विभाति ॥ १ । ४ ॥

ननु कथमेकस्य श्रीकृष्णस्य तावन्नानारूपेण स्थितिरित्याह "वायुर्य्यथैक" इति । यथा वायुः. वायुदेवता स्वयमेकोऽपि भुवनं प्रविष्टो जन्ये जन्ये जन्तौ जन्तौ 'पंचरूपः' प्राणापानव्यानोदानंसमानात्मक, पंचवृत्तिको वभूव। तथा स्वयमेकोऽद्वितीयोऽपि कृष्णः। लीलाविशेषार्थं व्यूहवैभवगुणावतारलीलावतारपुरुषावतारान्तर्य्यामिभेदेन, तथा प्रकृतिपुरुषकालाप्राकृतेश्वरभेदेन भिन्नाभिन्नरूपेण पञ्चरूपो विभाति, इत्यर्थ अत्र विभाति०इतिक्रियापदप्रयोगः, तेषां प्रकाशरूपत्वबोधनेन "प्रकाशाश्रयवद्वातेजस्त्वात् (ब्र. ३ । २०) व्याससूत्रानुसारेण प्रकाशिनः श्रीकृष्णात् तेषांभिन्नाभिन्नत्वबोधनाय । नन्वत्र "शब्देनाऽसौ पंचपदो विभाति" इत्यशेन पंचपदात्मकमंत्रविभागमात्रस्य सूचनात् कथं तादृशोऽर्थ इतिचेत् सत्यम् निरूपितं हि मया नात्र मंत्रमात्रनिरूपणे तात्पर्य्यं तथासति "तस्मात्कृष्ण एव परमोदेवः" इतिवक्ष्यमाणनिगमनभंगापत्तेरिति मंत्रद्वारेण परमदेवत्वादिकमेव पुनः पुनर्निरूपयति । अतः 'पञ्चपदः' इत्यस्य न मंत्रमात्रमर्थः—तावन्मात्रस्य कृष्णात्मकत्वप्रतिपादनेऽपि निरुक्तप्रतिज्ञोपपादनाभावात् । मंत्रमात्रस्य तत्तदेवतात्मकत्वस्यानुक्तसिद्धत्वेन विशेषालाभात् । तस्मात्पंचपदशब्देनात्र व्यष्टिरूपेण कार्य्यरूपेण च पञ्चपदस्य तत्तदवयवद्वारा प्रतिपाद्या सर्वेप्यर्था विवक्षिताः। ते चार्थाः व्यूहवैभवादयः प्रकृतिपुरुषकालादयश्च भवन्ति, इति निरूपितमेवानुपदं पंचांगं "जपन् ब्रह्म सम्पद्यते" इति श्रुतिव्याख्याने। तथाऽकाशादयोऽपि पंचपदस्य तत्तदवयवकार्य्यरूपाः "तदिह काञ्जलमि" त्यादिवक्ष्यमाणलक्षणा ते सर्वेऽत्र पंचपदेन विवक्षिता भवन्ति। (अतएव "पंचपदमि" ति नपुंशकान्तमपहाय पंचपद इतिपुल्लिङ्गान्तः प्रयुक्तः) तथाच यथा माण्डूक्ये "ओमित्येतदक्षर-

मिद ँ सर्वं तस्योपव्याख्यानभूतं भवद्भविष्यदिति । सर्वमोंकार एव यच्चा-न्यत्त्रिकालातीतं तदप्योंकार एव सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म" इत्यादिना निखिलस्य जगतः, "ओंकारात्मकत्वं ओंकारस्य जगतश्च ब्रह्मात्मकत्वं प्रतिपादयन्ती सर्वस्य ब्रह्मात्मकत्वमेव निर्धारयति श्रुतिः । तथा-प्रकृतेऽपि "तेष्वक्षरेषु विभज्य भविष्यज्जगद्रूपं प्रकाशयम्" । इत्यनेन सर्वस्यापि जगतः सृष्टेः पूर्वमपि मंत्रात्मना मंत्रवर्णेषु स्थितिमुपपाद्य ततश्च लोक-प्रतीतिगोचरीभूतानां केषांचिद्वस्तुतत्त्वानां नामनिदशपूर्वकं सृष्टिमुपपाद्य "तदुत्तरात्स्त्रीपुंसादिभेदं सकलमिदं सकलमिदमि" त्यंशेन तत एव सर्व-सृष्टिमुपपादयति । एवमग्रेपि तत एव सर्वसृष्टिमुपपादयति । तेन सर्वेषां कार्याणां माण्डूक्यश्रुतिवदेव प्रणवात्मकपञ्चपदीमंत्रात्मकत्वमुक्त्वा "यत्तत्पदं पञ्चपदं तदेव स वासुदेवो न यतोऽन्यदस्ति" इत्यनेन मंत्रस्य पीठस्य च भगवदात्मकत्वं तद्व्यतिरिक्तस्य चासत्त्वं निगमयति । इति सर्वस्य भगवदात्मकत्वोपपादनायैव "पञ्चपदो विभाति" इतिवाक्यं तथा च पंचपदेन प्रणववदेव प्रणवात्मके पंचपदीमंत्रेऽपि सर्वस्यैव वस्तुतत्त्व-स्यान्तर्भावात् तस्य च "शब्देनासौ पंचपदो विभाति" इत्यनेन भगव-दात्मकत्वनिरूपणात् सर्वस्यैव वस्तुतत्त्वस्य भगवदात्मकत्वंनिर्धारितं भवति इति नास्ति कृष्णाद्व्यतिरिक्तः स्वतंत्रसत्ताकः कश्चित्पदार्थः । अपि तु कृष्ण एव तत्तदात्मना ते सर्वे इति अवान्तरोपक्रमवाक्यार्थः इति-बोध्यम् । अपिचैताभ्यांच मंत्राभ्याम्—

"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदंत्यग्निं यमं मातरिश्वानमाहुः । ऋ. म. १० अ. ११ सू ४६ अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च कठोप-अ. २ । व. ५। मं. ६—वायुर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपंरूपं प्रतिरूपो बहिश्च । क-अ-२ । ५ ॥ १० ॥ इत्यादि ऋक्कठादिमंत्राणामपि

तात्पर्य्यमुक्तं भवति इत्याद्यपि वोध्यम् । तथाच "कृष्णांतम्" एताभ्यां मंत्राभ्यामुपपत्त्याऽभ्यासेनच परमदेवत्वादिकं निरूपितम्–इति—१।४॥

अथ "गोपगोपीगवातीतं सुरद्रुमतलाश्रितं दिव्यालंकरणोपेतं रत्नपंकजमध्यम् कालिन्दीजलकल्लोलसंगिमारुतसेवितं चिंधतयँश्चेतसा कृष्णं मुक्तोभवतिसंसृतेरि" त्यत्र संक्षेपेण निरूपितं परमदेवत्वस्याविनाभूतं सर्वतोविलक्षणधामपरिकरपरिच्छदादिकं; निरुक्तलक्षणपरदेवत्वस्योपपत्तये च परममुक्तिफलकं तदुपासनं निरूपयितुं प्रश्नमवतारयति—"तेहोचुरिति।"

मू० ते होचुरुपासनमेतस्यपरमात्मनोगोविन्दस्याखिलधारिणो ब्रूहीति। तानुवाच यत्तस्य पीठं हैरण्याष्टपलाशमम्बुजं तदन्तरालाद्यर्णाखिलवींजं कृष्णाय नम इति वीजाढ्यं स ब्रह्मा ब्राह्मणमादायानङ्गगायत्रीं यथावदालिख्य भूमण्डलं शूलवेष्टितं कृत्वांगवासुदेव दिरुक्मिण्यादिस्वशक्तिंनन्दादिवसुदेवादिपार्थादिनिध्यादिवीतं यजेत्संध्यासु प्रतिपत्तिभिरुपचारैस्तेनास्याखिलंभवत्यखिलंभवतीति ॥२॥ 'इति'।

इतिद्वितीयोपनिषत्

अत्र "तेहोचुरुपासनं ब्रूहीति-इत्येतावतापि वक्ष्यमाणग्रन्थावतारसंभवे" यत्पुनः "एतस्य परमात्मनो गोविन्दस्याखिलधारिणः, इत्युक्तं तेन प्रतिज्ञातचतुष्टयानां पुनरभ्यासः" प्रकरणतात्पर्य्यनिर्णयांगभूतः कृत इति सूचितंभवति। तथाच एतत्पदेन सामान्यतो निरुक्तार्थकत्त्वस्य परमात्मपदेन तद्धटकसर्वात्मत्वस्य सर्वेषामात्मनामात्मत्त्वस्य गोविन्दपदेन मृत्युनिवारकत्वस्य गोर्भूमिवेदविदितत्त्वादीनां च। अखिलधारिण इतिपदेन गोपीजनवल्लभो भुवनादिदध्ने स्वाहाश्रितो जगदेतत्सुरेता, इत्युक्तार्थकेनेतरस्य

च प्रतिज्ञाद्वयस्य सूचनङ् कृतम्। अपिच 'परमात्मन' इत्यनेन परमात्मत्वेन परमतत्त्वनिरूपकाणां सर्वेषामेव—

"तमेकं जानथ आत्मानमन्यावाचो विमुञ्चथ अमृतस्यैष सेतुः" मु. २। २। ५-दिव्ये ब्रह्म पुरे ह्येष व्योम्नि आत्मा प्रतिष्ठितः मु-२-३।६-एष आत्मा अपहतपाप्मा विजरो तिमृत्युविजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः-छा. ८। १॥ स वा एष महानज आत्मा योऽयंविज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिच्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कर्म्मणा कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानांमसंभेदाय तमेतंवेदानुवचनेन ब्राह्मणाविविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन तमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति एतद्धस्म वैतत्पूर्वे विद्वांसः प्रजां न कामयन्ते कि प्रजया करिष्यामो येषांनोऽयमात्मा नायं लोक इति। ते ह वै पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्य्यं चरन्ति याह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकेणोभे ह्येते एषणे भवतः॥ स एष नेति नेत्यात्मा ऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्य्यतेऽ संगो नहि सज्जतेऽसितो न व्यथते न रिष्यति एतमु हैवते न तरतः।वृ.।४।४-२२॥

इत्यादिवेदान्तवाक्यानामत्रार्थे समन्वयः सूचितोभवति इत्यप्यवधेयम्॥ "तानुवाच यत्तस्य पीठमिति" तान् मुनीन् उवाच ब्रह्मेतिशेषः। तस्येति निरुक्तलक्षणस्य परमात्मनो गोविन्दस्याखिलधारिण इत्यर्थः। यदिति–यत्पदस्य तत्पदसांकाङ्क्षत्वात्–तत् सर्ववेदान्तप्रसिद्धं यदित्यर्थः। पीठमिति परमंपदमित्यर्थः। "एतद्विष्णोः परमं पदमि" ति वक्ष्यमाणश्रुतेः। 'परमं पदं' स्वप्रकाशानन्दघनमपरिच्छिन्नं सदातनं भगवद्धाम। परमपदशब्दस्य भगवद्धामपर्य्यायत्वमुक्तं पाद्मे उत्तर-

खण्डे षट्पंचाशदधिकद्विशततमाध्याये—

मोक्षं परंपदंलिङ्गममृतंविष्णुमन्दिरम् । अक्षरं परमं धाम वैकुण्ठं शाश्वतं पदं ॥ नित्यंच परमं व्योम सर्वोत्कृष्टं सनातनं पर्य्यायवाचकान्यस्य परधाम्नः परस्य च ॥ इति ।

एव मन्यान्यपि तस्य नामानि ब्रह्मपुरब्रह्मलोकगोलोकादीनि प्रसिद्धानि–"यद्ब्रह्मपुरमित्याहुर्भगवद्धाम सात्वताः" इतिस्कान्दवैष्णवखण्डवासुदेवमाहात्म्येसप्तदशाध्यायादिवाक्येभ्यः । "ददृशुर्ब्रह्मणोलोकं यत्राऽक्रूरोध्यगात्पुरा" इति भागवतेदशमे उनत्रिंशाध्यायादिवाक्येभ्यश्च । तथाच–"यः सर्वज्ञः स सर्ववित् यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष योम्व्यात्मा प्रतिष्ठितः । मु० २ । २ । "यदिदं ब्रह्मपुरंदहरं पुण्डरीकं वेश्म" । "एतत्सत्यं ब्रह्मपुरं तस्मिकामाः समाहिता एष आत्मा अपहतपाप्माः" सत्यकामः सत्यसंकल्पः १-६ । १ । हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रंज्योतिषां ज्योतिर्यस्तदात्मविदोविदुः ॥ मु० २ । २ । एवं ह वै पाप्मना विनिर्म्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् । स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते । प्रश्नोप०५।५। विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमंपदम् । कठ० १ ।३।६। "यो वेद निहितं गुहायां परमे व्योमन् ।" तै० ब्र०–"इयं विसृष्टिर्य्यत आवभूव यदिवा दधे यदिवा न दधेः । यो अस्याध्यक्षः परमेव्योमन् सोऽअंग वेद यदि वा न वेदः ॥ ( ऋग्वेदः ) अणुः पन्था विततः पुराणो माँस्पृष्टोऽनुवित्तो मयैव तेन धीराः अपियन्ति ब्रह्मविदः स्वर्गलोकमित उर्ध्वं विमुक्ताः" ( इत्यत्र बृहदारण्यके ब्रह्मवित्प्राप्य स्वर्गलोकमपि अपाकृतं भगवद्धामैव । नचात्रोत्क्रान्तिनिषेधः मांध्यदिनेऽत्र 'उत्क्रम्यः' इति उत्क्रान्तेरप्युक्तत्वात् प्राणोत्क्रान्तिनिषेधस्तु तत्रैव स्वरूपेलयार्थम् ) "ऋचोऽक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य एतद्विदुस्त इमे समासते ॥ क० ४ । ८ ॥ यस्मिन्निदं संच विचैति सर्वं यस्मिन्देवा अधि-

विश्वे निषेदुः । तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन्॥ येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च । यमन्तः समुद्रे कवयोऽवयन्ति यदक्षरे परमे प्रजाः ॥' न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ॥' दह्रं विपापं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम्॥ यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः परः स महेश्वरः।" इति एतदेव विशकृतं "सहस्रशीर्षकमि" त्याद्यग्रिमग्रन्थेन "परमात्मा व्यवस्थितः" महाना०उ० इत्यन्तेन। "तत्पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः । बृह. अ. ६-२ ब्रा. १५ । तस्य ह वा ब्रह्मलोकस्यारोहृदो मुहुर्तो येष्टिहा विरजा नदी तिल्यो वृक्षः सायुज्यं संस्थानमपराजितमायतनमिन्द्रप्रजापती द्वारगापौ विभु प्रमितम्" "श्रीरूपवर्हणं तस्मिन्ब्रह्मास्ते।" कौषीत० १ अ. ३ । ५ । इत्यादिमुण्डकछान्दोग्यप्रश्नकठश्वेताश्वतरतैत्तरीयश्वेताश्वरमहानारायणबृहदारण्यककौषीतकिब्राह्मणादिवाक्येषु प्रसिद्धं तस्य परमात्मनो ब्रह्मपुरहिरण्मयकोशब्रह्मलोकविष्णुपदपरमव्योमादिपदवाच्यं, तथाऽत्रापि "एतद्विष्णोः परमं पदम् ।" "तद्विष्णोः परमं पदम्" गो. ता. । इत्यादिनोक्तं परमपदापरपर्यायं यत्पीठमिति तदर्थः ।

एता श्रुतयः पद्मपुराणे एवमेव व्याख्याताः॥ यथा चोक्तश्रुतिषु ब्रह्मपुरपरव्योमादिशब्दा भगवतः परमधामप्रतिपादका एव नतु शरीरहृदयादिमात्रप्रतिपादका इति तथोपपादितं समीचीनतया स्मृतिपुराणादिवाक्यैर्युक्तिभिश्च तत्तच्छ्रुतिपर्यालोचनया युग्मतत्त्वसमीक्षायां मयेति तत एवावधेयम् ॥ [ ॥ तच्च "एतद्विष्णोःपरमंपदम्" इत्यस्य शेषे द्रष्टव्यम् ]

हैरण्याष्टपलाशमम्बुजम्॥ इति । अत्र "हिरण्यश्मश्रुहिरण्यकेश आप्रणखात् सर्व एव सुवर्णः" । इति छान्दोग्यश्रुताविव हिरण्यपदं तेजोविशेषवाचकम्। तच्च तेजः सत्यचिदानंदरूपमेव स्वप्रकाशात्मकम्। तथाच

निरुक्तं भगवद्धाम तत्रत्यं सर्ववस्तु च सच्चिदानन्दरूपमेव । अत एव स्वप्रकाशात्मकं सर्वविक्रियारहितमपरिच्छिन्नं नित्यं कालकर्माद्यतीतंच । तथाच वक्ष्यति "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्" "ततो विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसंगम् । यत्तत्पदं पञ्चपदं तदेव स वासुदेवो न यतोऽन्यदस्ति ।" "अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत्" इति । समुपबृंहितं चैतन्नारदपञ्चरात्रे ब्रह्मसंहितायां पञ्चमाध्याये—

सहस्रपत्रंकमलंगोकुलाख्यंमहत्पदम् तत्कर्णिकारं तद्धाम तदनन्तांशसंभवम् ॥ कर्णिकारं महद्यंत्रं षट्कोणं वज्रकीलकम् । षडङ्गं षट्पदीस्थानं प्रकृत्या पुरुषेण च ॥ प्रेमानन्दमहानन्दरसेनावस्थितं हि तत् । ज्योतीरूपेण मनुना कामबीजेन संगतम् ॥'
इत्युपक्रम्य "श्रियःकान्ताः कान्तः परमपुरुषः कल्पतरवो द्रुमा भूमिश्चिन्तामणिगणमयी तोऽयममृतं कथा गानं नाट्यं गमनमपि वंशी प्रियसखी चिदानन्दं ज्योतिः परमपि तदास्वाद्यमपि च ॥'

इत्यादिनेति । अत्र स्पष्टमेव धाम्नस्तत्रत्यानां च सच्चिदानन्दरूपत्वमुक्तम् । नारायणाथर्वशिरस्यपि "ओं नमो नारायणायेति मंत्रोपासको वैकुण्ठभुवनं गमिष्यति ' इत्युपक्रम्य "तदिदं विज्ञानघनं तस्मात्तडिदाभमात्र" मित्यनेन तत्पदेन वैकुण्ठभुवनमनुकृष्य तस्य "विज्ञानघनमि" ति चिदात्मकत्वमुक्तम् । तस्माद्भगवद्धाम सत्यचिदानन्दस्वरूपमेव । एवमेव च निरूपितं पद्मब्रह्मवैवर्तादिषु पुराणेषु पञ्चरात्रेषु च, तदुपपादितं मया युग्मतत्त्वसमीक्षायाम् ॥ **इदमत्रवोध्यम्** ॥ यथा गंगासमुद्रादेरग्निवाय्वादेश्च द्विविधं स्वरूपं मूर्तंचामूर्तं च तत्र यत्मूर्तं साकारस्वरूपं तदमूर्तस्य भिन्नाभिन्नं नियामकंच सत्, स्वोपासकेतरागोचरमेव तिष्ठति देवतारूपंचेत्युच्यते । यच्चामूर्तं तत् सर्वाल्लोकान्व्याप्य तिष्ठति, सामान्यजनानामपि चक्षुष्मतां गोचरंभवति, पूर्वस्य मूर्तरूपस्य स्वनियामकस्य धामगृहादिशब्दव्यपदेश्यं च भवति । उभयमपि च रूपं गंगासमुद्रादिशब्दैरग्निवाय्वादिशब्दैश्च

मुख्यवृत्त्यैव व्यपदिश्यते उभयोरेकात्मत्वात्। तथा एकमेव सच्चिदानन्दघनं ब्रह्म मूर्तामूर्तरूपं भवति । तत्र यन्मूर्तं साकारं रूपं पुरुषाकारं तदमूर्तस्य निराकारस्याधिदैविकं पुरुषोत्तमपदवाच्यं भक्तिमात्रगम्यं च भवति। यच्चामूर्तं रूपं तन्निराकारतया योगिसमाधिगम्यं भवति, तदेव च प्रेमिभक्तानां पुरुषोत्तमधामतयाऽवभासते।

ये च न प्रेमिभक्तास्तेषां तु तत् पुरुषोत्तमधामरूपं सदपि न धामरूपतया भासतेऽपि तु निर्विशेषतयैवावभासते—यथा गंगानद्यादौ देवतारूपस्य गङ्गादेस्तत्र विद्यमानत्वेऽपि न तथात्वेन तदुपासकेतरेषां प्रतीतिः, न वा नद्यां देवतारूपायाः गङ्गाया जलादिमयधाम्नः प्रतीतिस्तथात्रापि बोध्यम् । तदेतत्सर्वमभिप्रेत्यैव स्मृतयो भवन्ति पुराणेषु पंचरात्रेषु च। यथा पाद्मे पातालखण्डे—

नित्यानन्दतनुः शौरिर्योऽशरीरीरिति भाष्यते। वाय्वग्निनाकभूमीनामंगाधिष्ठातृदेवता। निरूप्यते ब्रह्मणोऽपि तथा गोविन्दविग्रहः ॥ सेन्द्रियोऽपि यथा सूर्य्यस्तेजसा नोपलभ्यते। तथा कान्तियुतः कृष्णः कालं मोहयति ध्रुवम् ॥ काठिन्यं दैवयोगेन कारकाघृतयोरिव। कृष्णस्यामिततत्त्वस्य पादपृष्ठं न देवता॥" इति। हयशीर्षपंचरात्रे "आनन्दो द्विविधः प्रोक्तो मूर्तामूर्तप्रभेदतः। अमूर्तस्याश्रयो मूर्तो मूर्तानन्दोऽच्युतो मतः॥ अमूर्तः परमात्मा च ज्ञानरूपश्च निर्गुणः। स्वस्वरूपश्च कूटस्थो ब्रह्म चेति सतांमतम् ॥ अमूर्तमूर्तयोर्भेदो नास्ति तत्त्वविचारतः। भेदस्तु कल्पितोवेदैर्मणितत्तेजसोरिव ॥" इति ॥

अत्र यदमूर्तं रूपं तदेव गीतायामक्षरशब्देन धामशब्देन च उच्यते। "परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः। यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमांगतिं यं प्राप्य न निवर्तन्ते तद्धाम परमं मम॥" इति अत्र "तत्रैवाव्यक्तसंज्ञके" इत्यनेननिरूपितात् त्रिगुणात्मकादव्यक्तात्परमन्यदव्यक्तं निरूपयन् तस्य सना-

तनत्वमक्षरनामधेयत्वं परमगतित्वं तत्प्राप्तस्यापुनरावृत्तिं च कथयन् तस्य "तद्धाम परमं मम" इत्यंशेन स्वधामत्वमपि स्फुटं वक्ति। केचित्त्वत्र धामपदं स्वरूपार्थकत्वेन, ममेत्यत्र षष्ठी चौपचारिकभेदगर्भितत्त्वेन च वर्णयन्ति। तेन तेषां मते तदेव परब्रह्मणः सर्वातिशायिस्वरूपमित्युक्तं भवति। तन्मन्दम् । पंचदशाध्याये "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कुटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥" इत्यनेन क्षराक्षरातीतपुरुषोत्तमस्यैव सर्वातिशायित्वावधारणात्। अत्रापि "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यथा। यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्॥" इत्यनेन तस्यैव सर्वातिशायित्वं सूच्यते। नचात्र परपुरुषपदेननिरुक्तोऽव्यक्तोभावो गृह्यते तथासति "यस्यान्तःस्थानी, तिविशेषणस्यानतिप्रयोजनकत्वापत्तेः समाप्रपुनरातत्त्वापत्तेश्च। अत एवात्र परपुरुषपदेन पंचदशाध्याये निरुक्तस्थल इव ततः पर एव पुरुषा गृह्यते। तस्य "यस्यान्तःस्थानी" त्यादिविशेषणं तु सप्तमाध्याये "समग्रं मां यथा ज्ञास्यसि तच्छृणु" इत्युपक्रम्य "रसोहमप्सुः" "मत्तः परतरं नान्यदि" त्यादिना निरूपितत्वेन पुनः स्मारणार्थेति बोध्यम्। अयमेव चाक्षराख्यो भावः पंचदशेऽप्यध्याये "न तद्भासयते सूर्यो न शशांको न पावकः। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इत्यत्रापि स्वधामत्वेन निरूप्यते इति। तस्माद्भगवद्धामापि ब्रह्मरूपमेव। अतएवोत्तरतापिन्यां वक्ष्यति "तासां मध्ये साक्षाद्ब्रह्म गोपालपुरी भवति" इति। गीतायां चतुर्दशे—"ब्रह्मणो हि प्रतिष्ठाहमि"त्यनेनाप्ययमेवाभिप्रायः सूचित इति। अतएव भगवतः परमधामापि सच्चिदानन्दघनात्मकमेव। नतु लोकान्तरवज्जडं मायाकार्यं च। इदमेव "अप्राकृतं प्राकृतरूपकंचे" तिवेदान्तकामधेनुश्लोके अप्राकृततत्त्वपदेन गृह्यते। तस्याचेतनत्वकथनं तु धर्मरूपज्ञानाभावाभिप्रायेण तथैव व्यवस्थापितं श्रुत्यन्तसुरद्रुमे—"पारशून्यपरधाम तेऽद्भुतं चिद्घनं

जयति लोकमूर्धनि । व्यापकं च परिखा सरिद्वराऽचिन्त्यशक्ति नवमंगल ध्वनि॥इति श्लोक व्याख्याने इति । इदंच सर्वातिशायि गुणातीतं भगवद्धाम । प्रपंचान्तर्वर्तीनि चानन्तानि भगवदंशभूतानां निवासयोग्यानि धामानि तु नैतागु भवन्ति, इत्यपिवोध्यम् ।

एतत्पीठरूपं तु परमेव धाम । प्रकृतोपनिषदि परमरूपस्यैव निरूपणीयत्वात् । "तस्य परमात्मन" इत्यादिना परमरूपस्योपासनस्यैव जिज्ञासितत्वात् । 'एतद्विष्णोः परमं पदम् ।" तद्विष्णोः परमं पदम् ।" "यत्तत्पदं पंचपदं तदेव स वासुदेवः ।" "अनेजदेकम्" तासां मध्ये साक्षाद्ब्रह्म गोपालपुरी भवति" इत्यादिवक्ष्यमाण-श्रुतिभ्यश्च । नच तस्य परमधाम्नः 'अनंगगायत्रीं यथावदाख्यालिख्ये' त्याद्युल्लिख्यमाणपीठरूपत्वं कथमितिवाच्यम् । वाह्यसेवायांभगवत्स्वरूपानुकारिप्रतिमेव तस्य परमधाम्नोऽप्युल्लेखेनानुकरणेतात्पर्यात् । एवमेव निरूपितं बृहद्ब्रह्मसंहितादौ "गोलोकं पट्टवस्त्रे यो लिखित्वा संप्रपूजयेत्" 'इत्यादिनेति । मानससेवायांतु नाऽलेखनापेक्षा । नचालेखेमंत्रादीनामपि समुल्लेखो विहितः, सच परधाम्नि न संभवतीतिवाच्यं परधाम्नि तेषां ततत्स्थलेषु मूर्तिमत्त्वेनावस्थानात् । तदेतन्निरूपितं ब्रह्मसंहितायां पंचमाध्याये "सहस्रपत्रं कमलं गोकुलाख्यं महत्पदम् तत्कर्णिकारं तद्धाम तदनन्तांशसंभवम् ।१। कर्णिकारं महद्यन्त्रं षट्कोणं वज्रकीलकम् षडंगषट्पदीस्थानं प्रकृत्या पुरुषेण वा ।२। प्रेमानन्दमहानन्दरसेनावस्थितं हि तत् । ज्योतीरूपेण मनुना कामवीजेन संगतम् ।३। तत्किञ्जल्कं तदंशानां तत्पत्राणि श्रियामपि । चतुरस्रं तत्परितः श्वेतद्वीपाख्यमद्भुतम् ।४। चतुर्भिः पुरुषार्थैश्च चतुर्भिहेतुभिर्वृतम् । मनुरूपैश्च दशभिर्दिक्पालैः परितो वृतम् ।५। त्यादिना । अत्रांगमन्त्राणां दिक्पालादिरूपत्वकथनान्मूर्तिमत्त्वेन तेषां तत्र सत्त्वं निश्चितं भवतीति बोध्यम् । तदेतद्विस्तृतं मया युगलतत्त्वसमीक्षायामिति ततोऽत्रवेयम् ॥ यन्त्रोद्धार प्रकार उपासनाप्रकारश्च परिशिष्टे वक्ष्यते मयेति ततोऽवधेयम् । 'यजेत्' इतिविधिस्त्वग्रे चिन्तयिष्ये पूर्वतापिनीसमाप्तौ । 'प्रतिपत्तिभिः'

ज्ञानमयैरित्यर्थः। अनेन वाह्यपूजायामपि भावनापूर्वकत्वं सूचितम्। "उपचारैः" रतिसेवोपयिकवस्तुभिरित्यर्थः। 'तेने' ति—तादृशेन मानसेन वाह्येन चोपासनारूपेण यजनेनेत्यर्थः। अखिलं धर्म्मार्थकाममोक्षाख्यं चतुर्विधमपि काम्यं भवति कामनाभावे तु भगवद्भावापत्तिरेव भवतीत्यर्थः। तथाच वक्ष्यति "एतद्विष्णोः परमं पदं ये नित्योद्युक्तास्तं यजन्ति न कामात्। तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदेवे" ति तस्मात्प्रपन्नैरापत्तिकालेऽपि न कामनया यष्टव्यम्। सकामयजनस्यापि शरणमार्गे परमापराधरूपत्वेन शास्त्रेषु निर्णयात्। "अखिलं भवत्यखिलं भवतीति" द्विरुक्ति द्वितीयोपनिषत् समाप्त्यर्थाऽध्यायसिद्धान्तदार्ढ्यार्था चेति। इति द्वितीयोपनिषत्॥ २॥

अथ—परमतात्पर्य्येण निरुक्तप्रतिज्ञाः प्रकारान्तरेण दृढीकुर्वन्नवान्तरतात्पर्य्येण निरुक्तामुपासनां द्रढयितुं त्रीन् मंत्रान् पठन्ति॥ मू० "तदिह श्लोकाःभवन्ति" इति तदित्यव्ययम् तेन यत उक्तप्रकारेण श्रीकृष्णयजनेनाखिलं भवति तत्तस्माद्धेतोः इह तादृशयजने फले चैवंविधाः श्लोकाः भवन्तीत्यर्थः॥

**मू० एको वशी सर्वगः कृष्ण ईड्य एकोऽपि सन् वहुधा यो विभाति। तं पीठं (पीठगं) येऽनुभजन्ति धीरास्तेषां सिद्धिः शाश्वती नेतरेषाम्॥१॥**

एको वशी" त्यादि—एको द्वितीयरहितः, "अद्वितीयाय महते" इति वक्ष्यमाणश्रुतेः। स्वसमानस्वोत्कृष्टसत्ताकद्वितीयरहित इत्यर्थः स्वतंत्रसत्ताकद्वितीयरहित इति यावत्। प्राकृताप्राकृतकालजीवानां निजशक्तिरूपाणां स्वतोभिन्नाभिन्नानां सत्त्वेऽपि तेषां स्वतंत्रब्रह्मात्मकत्वेनैव सत्त्वात् स्वतंत्रसत्ताभावेन नानुपपत्तिः। 'वशी' स्वतन्त्रसत्ताकः सर्वसत्ताश्रयश्चेत्यर्थः। 'एतेन एकमेवाद्वितीयम्' 'नेह नानाऽस्ति किंचन' तमीश्वराणां परमं महेश्वरं तं देवतानां परमंच दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं

भुवनेशमीड्यम् ॥ न तस्य कार्य्यं करणंच विद्यते तत्समश्चाभ्यधिकंश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानवलक्रिया च ॥ न तस्य कश्चित्पतिरस्ति लोके, नचेशिता नैव च तस्य लिंगम् । स कारणं कारणाधिपो नचास्य कश्चिज्जनिता नचाधिपः ॥ स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारबंधस्थितिमोक्षहेतुः" श्वे० ।" "नान्योयतोऽस्ति श्रोता" "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कर्म्मणा कनीयान्" "एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः" इत्यादि श्रुतय उपसंहृताः ॥ "सर्वग" इति सर्वव्याप्त इत्यर्थः । "तेन ब्रह्मँ वेदममृतं वरिष्ठम् ॥" मु० । २ । २ । ११ । "अणोरणीयान्महतो महीयान् ।" इत्याद्युपसंहृता । क० कृष्ण इति निरुक्तलक्षणः । तेन कृष्ण एव निरुक्ताः सर्वा श्रुतयः पुनरुपसंहृताः । "कृष्णइतिअत्र—विभुरित्यनुक्त्वा "सर्वग" इति कथनेन "अपाणिपादो जवनो गृहीता" इत्यादिश्रुत्युक्तलक्षणः सर्वत्रालौकिकगतिशालित्वमपि सूचितं भवति । 'ईड्य' स्तुत्य इत्यर्थः । सर्ववेदैः मुनिभिर्देवैश्च सर्वतो भावेन स्तुत्य इतिभावः । एतेन "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ॥-क. १ । २ । १५ ॥ "वृषभध्वजवन्द्याय" अथैवं स्तुतिभिराराधयामि "विदामदेवंभुवनेशमीड्यम् ।" इत्याद्या श्रुतय उपसंहृताः । "एकोऽपि सन् बहुधा यो विभाति" । इति । एकोऽपि निरुक्तलक्षणाद्वितीयोऽपि 'सन्' । कालानवच्छिन्नतया सदा अखण्ड एव वर्तमान एव "बहुधा "जपन् पञ्चांगमि" त्यत्र व्याख्यात प्रकारेण तादृशसर्वविधरूपतया विभाति विशेषेण भासते इत्यर्थः । अत्र वक्ष्यति चोत्तरतापिन्यन्ते "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च ॥" इति । अत्र 'विभाती" तिप्रयोगात्तेषां पञ्चांगानां व्यूहवैभवादि रूपाणां श्रीकृष्णस्य विभानमात्रत्व-कथनेन कायव्यूहरूपत्वं निराकृतं सूचितं च प्रकाशान्तर रूपत्वम् । तेनाखण्ड एव कृष्णो निजासाधारणस्वरूप-

महिम्ना तावद्रूपेण नित्यमुक्तैश्शास्त्रैश्च प्रमीयते इत्युक्तं भवति।

"तमि" ति तादृशमित्यर्थः। "पीठमिति"। निरुक्तलक्षणपीठस्थत्वभावनपूर्वकमित्यर्थः। क्वचित् "पीठगम्" इत्येव पाठः। 'ये' प्रपन्ना अनुयजन्ति उक्तप्रकारेणार्चयन्ति सेवन्ते। "तेषाम्। सिद्धिः शाश्वती नेतरेषाम्" इति। शाश्वती सिद्धिः, भगवत्प्राप्तिरूपेत्यर्थः। एवंचात्र मंत्रेऽनुपदव्याख्यातप्रकारेण सर्वातिशायिवस्तुतत्त्वताप्रतिपादनेन तन्मात्रस्यैव च परमफलप्रदताप्रतिपादनेन च श्रीकृष्णे सोपपत्तिकम् प्रतिज्ञाचतुष्टयं महातात्पर्य्येणोपादितमर्थतोऽभ्यस्तं च। अवान्तरतात्पर्य्येण तूपासनं स्तुतमिति बोध्यम्। एवमग्रिममंत्रेऽपि बोध्यम्।

अत्र 'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्"। क. २।५।१२। एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्" श्वे०। इतिकठश्वेताश्वेतरमंत्रयोरप्युपसंहार उक्तार्थे तात्पर्य्येण सूचितः। अत्राप्यात्मस्थमित्यत्रात्मपदं निरुक्तपीठपदव्यपदेश्यपरमव्योमब्रह्मपुरादिपदवाच्यम् भगवद्धामसूचकमेव (बोधकमेव)। "यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता॥" तै० "दिव्ये ब्रह्म पुरे ह्येष व्योम्नि आत्मा प्रतिष्ठितः" मु. उ.। "यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म।" 'एतत्सत्यं ब्रह्मपुरं तस्मिन्कामाः समाहिता एष आत्मा अपहतपाप्मा॥ ६॥" इत्यादि श्रुत्यन्तरप्रसिद्धपरमव्योमब्रह्मपुरादिशब्दानां भगवद्धामवाचकत्वं तूपपादितमेव पूर्वम्। यथाच भगवत्तद्धाम्नोऽप्यात्मपदवाच्यत्वं तथोपपादितं तस्यापि ब्रह्मरूपत्वापपादनेन पीठपदव्याख्यान एवेतिध्येयम्॥ १॥

सू॰ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तं पीठगं येऽनुभजन्ति धीरास्तेषां सिद्धिः शाश्वती नेतरेषाम्॥२॥

नित्योनित्यानामित्यादि ॥ कालानवच्छिन्नानां ध्रुवसत्यानां स्वभावतश्चैतन्यगुणानां चैतन्यस्वरूपाणां च क्षेत्रज्ञानां "न जायते म्रियते वा विपश्चिन् नायं कुतश्चिन्न बभूव कश्चित्। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे (क. उ) तथा "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" ज्ञोऽत एव (ब्र. सू) "इत्यादिश्रुतिसूत्रेभ्यः। अत्र गुणगुणिभावो न नैयायिकानामिवापि तु जलतच्छैत्ययोरिमिव प्रदोपतत्प्रकाशयोरिव चेति। तथाच परमार्षं सूत्रम् "गुणाद्वाऽऽलोकवत्' इति। "चैतन्यमस्य धर्मो हि प्रभा भानोरिवामला तया स्फुरति जीवोऽसौ स्वत एवानुरूपया" इति नारदपञ्चरात्रोक्तेश्चेति बोद्धव्यम्। स्वरूपतस्तु जीवोऽणुरनन्तश्च। "एषोऽणुरात्मा चेतसा वेदितव्यः"। मु० ॥ "वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" "नित्यो नित्यानाम्' "एको बहूनाम्' इति कठ मुण्डकश्वेताश्वतरश्रुतिभ्यः "वालाग्रशतभागस्तु इत्यादिशङ्खस्मृतेः। "उत्क्रान्तिगत्यागतीनामि" त्य दिपारमर्षसूत्राच्च। तदुक्तं दशश्लोक्यां "ज्ञानस्वरूपं च हरेरधीनं शरीरसंयोगवियोगयोग्यम्। अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्तमाहु" रित्यादि। गुणस्तु विभुः "चैतन्यमस्य धर्मो हि प्रभा भानोरिवामला" इत्यनुपदोक्तस्मृतेः। विशेषस्त्वाकारे द्रष्टव्यः। प्रसंगादिदमुक्तम्। बहूनामिति। अनन्तानामित्यर्थः। एतेन जीवानामनंतत्वमुक्तम्। 'य' इति कृष्ण इत्यर्थः नित्यः कालानवच्छिन्नः "ज्ञः कालकालो गुणी सर्वविद्यः" (श्वे-६-२।१६।) स कारणं कारणाधिपो न चास्य कश्चिज्जनिता नचाधिपः। श्वे-६-६ "नास्ति सतोऽनुपत्तेः" ब्र. २-३ इत्यादिश्रुतिसूत्रेभ्यः। 'चेतन' इति-चैतन्यगुणश्चैतन्यस्वरूपश्च "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. ब्र. व. चः) "यः सर्वज्ञः स सर्ववित्" (मु०) इत्यादिद्विविधश्रुतिभ्यः ॥ अत्रापि गुणगुणिभावः पूर्ववदेव "प्रकाशाश्रयवद्वा तेजस्त्वात्" इतिपरमर्षिसूत्रात्। नतु नैयायिकसम्मतेश्वरवत्। "एक" इति "एको वशी" इत्यत्र निरुक्तैकपदार्थः ॥ "कामान्" धर्म्मार्थकामनाख्यान्, चतुर्वर्गरूपान् 'विदधाति' "एषह्येवैनं साधु कर्म-

कारयति तं यमूर्ध्वमुन्निनीषते एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते ( कौषी. उ. ४ )। एष आत्माऽन्नादो वसुदानो विन्दते वसु य एवं वेद" 'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' इत्यादि कौषीतकि-बृहदारण्यकश्वेताश्वतरादिश्रुत्यन्तरेभ्यः "फलमत उपपत्तेः" (ब्र. सू. ३।२।) "लभते च ततः कामान् मयैव विहितान्हि तान्" इत्यादिसूत्रगीतादिवाक्ये-भ्यश्च। शेषं पूर्ववत्। अनेन "नित्यो नित्यानां चेतनश्चेतनानामेको वहूनां यो विदधाति कामान्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्॥ (कठ० उ०) "नित्यो नित्यानां चेतनश्चेतनानामेको वहूनां यो विदधाति कामान्। तत्कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः॥" श्वे. ६। १३॥ इत्यादिकठश्वेताश्वतरादिश्रुतयो-व्याख्याताः। इति।

मू० एतद्विष्णोः परमं पदं ये नित्योद्युक्तास्तं यजन्ति न कामात्। तेषामसौ गोपरूपः प्रयत्नात्प्रकाशये-दात्मपदं तदेव॥ ३॥

एतद्विष्णोः परमं पदमिति०। अत्र मंत्रे अंशद्वयम्। एतद्विष्णोः परमं पदमि' ति प्रथमोंऽशः "ये नित्योद्युक्तास्तं यजन्ति न कामात्" इत्यादि द्वितीयोंशः। तत्र प्रथमेनांशेन निरुक्तपीठाख्य एव परमे धाम्नि श्रुत्य-न्तरप्रसिद्धविष्णुपरमपदत्वं बोध्यते। द्वितीयेन तत्र "तमि" ति तत्पदार्थ-भूतस्य भगवतो यजनेन भगवत्कर्तृक भगवत्पददर्शनरूपफलमुच्यते। तथाच—एतद्विष्णोः परमंपदमित्यस्यायं तात्पर्य्यार्थः—

"तदस्य प्रियमभिपाथो अस्यां नरो यत्र देवयवो मदन्ति। उरुक्रमस्य हि विष्णोः परमे पदे मध्व उत्सः॥ ता वां वास्तून्य-ष्मसि गमयध्यै अत्राह तदुरूगायस्य वृष्णः परमं पदमवभाति भूरि। ऋ. सं.। या ते धामन्युष्मसि गमयध्यै यत्र गावो भूरिश्रृङ्गा अयासः। यत्र गावो भूरिश्रृङ्गा अयासः अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरि। शु० य० वेदसं."

ये ते धामान्युष्मसिगमयध्यै यत्र गावो भूरिशृङ्गा अयासः।
अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरेः। कृ. य. वेद. सं. ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवांसः समिन्धते विष्णोर्यत्परमं पदम् ॥ ( ऋ० सं० य० सं० ) विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः सोऽध्वनःपारमाप्नोति तद्विष्णोः परमं पदम् । ( कठ. उ० १ । ३ । ६ )

इत्यादिऋग्वेदशुक्लयजुर्वेदकृष्णयजुर्वेदसंहितामंत्रकठोपनिषदादिप्रतिपाद्यं यद्विष्णोः परमंपदं धामलोकाद्यपरपर्य्यायं तत् 'एतदेव' यदेवात्र पीठशब्देन निरूप्यते। सामान्येनोक्तस्य विशेषेणोपसंहार अनुभवसिद्धः। तथाऽत्रापि च पुनर्वदयति । "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम्" इति । एवंच तदेतत्पदं ये हृदि भावयन्तस्तत्र तं निरुक्तलक्षणं कृष्णंयजन्ति भावकुसुमैरहर्निशं यथाकालं यथायोगं यथाभावमर्चयन्ति सेवन्ते तत्सेवातिरिक्तकामांश्च न कामयन्ते 'तेषां' तादृशभावयुक्तभक्तानाम्। 'असौ' अनुपदनिरुक्तलक्षणः कृष्णः'गोपरूपः' निरुक्तरसरूपगोपस्वरूपः 'प्रयत्नात्' भक्तप्रयत्नानपेक्षनिजप्रयत्नेनैव तदेव निरुक्तलक्षणम् 'आत्मपदं' स्वस्य पदं धाम दर्शयति–आत्मशब्दप्रयोगात्–प्राधान्येन तत्र स्वस्वरूपं चानुभावयति । "तं यथोपासते तदेव भवति ( शतपथ १० । ६ ) "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमि"ति श्रुतिस्मृतिभ्याम्। साधनायां पीठे भगवत्सेवनस्योक्तत्वात्फलावस्थायामपि पीठे भगवत्स्वरूपानुभवस्यैव वक्तुं युक्तत्वादात्मपदं "दर्शयेदि" ति फलांशवाक्यंच तथा व्याख्यातम्। एवंच तैत्तरीये–"सत्यं ज्ञानमनन्तं ब्रह्म॥ यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इत्यनेन 'यो वेद' इत्याद्यंशेन ब्रह्मोपासनं वेदनापरपर्य्यायं तत्फलं च संक्षेपतो दर्शितं तदेवोपासनम् 'एतस्ये' त्यारभ्य "प्रकाशयेदात्मपदं तदे"त्यन्तेन विस्तृतमितिबोध्यं सुधीभिः।

अस्य पीठस्य यन्त्रादेश्च स्वरूपं प्रकारश्च पुरुषार्थबोधिन्यामाथर्वणोप-
निषद्येकादशतमप्रपाठकादावेवं पठ्यते यथा—

अथ यन्त्रं प्रवक्ष्यामि यतः स्थलं नित्यमुच्यते। क्षणार्थं कृष्ण-चन्द्रस्तु यत्स्थानं न परित्यजेत् ॥ १ ॥ प्रेमरूपा यथा राधा तादृक् कृष्णश्च कौतुकी। स्वशक्त्या विहरेत्तत्र तत्स्थानं न परित्यजेत् ॥ २ ॥ दिव्यं वृन्दावनं स्थानं शेषांगस्थं च सर्वदा। ब्रह्मरूपमिदं स्थानं सच्चिदानन्दरूपकम् ॥ ३ ॥ अष्टकोणं लिखेदादौ दशार्णं तत्र वै लिखेत्। तन्मध्ये कामराजं तु ध्यात्वा कृष्णं लिखेद्बुधः ॥ ४ ॥ नवभिः शक्तिभिः सार्धं सह कृष्णं तु राधया। सम्पूज्य योगपीठे च मध्ये वेदीं स्मरेत्ततः ॥ ५ ॥ षट्कोणं च लिखेद्बाह्ये षड्बीजं तत्र वै न्यसेत्। वृन्दावत्यादि षड् भवस्या पूजयेत् साधकोत्तमः ॥ ६ ॥ वृन्दावती रंगदेवी सुभद्रा च प्रियंवदा। रत्नलेखा च नित्या च शक्तयः परिकीर्तिताः ॥ ७ ॥ इमाः षट्शक्तयः कृष्णे निगूढप्रेमदायिकाः। आसां मंत्रं बीजषट्कं नमोऽन्तं प्रणवादिकम् ॥ ८ ॥ गोपनीयं प्रयत्नेन कृष्णप्रेमबहिर्म्मुखात्। तद्बाह्ये प्रथमावृत्ते रेखामष्टौ तद्धि लाञ्छितम् ॥ ९ ॥ ललिताद्यास्तेषु पूज्याः तासां मध्ये पुरा तथा। द्वात्रिंशदूर्ध्वरेखासु षोडशान्तं विभावयेत् ॥१०॥ सिद्धा षोडश साहस्रं गोपीनां तेषु पूजयेत्। चतुरस्रं चतुर्द्वारं लिखेत् पीठ-चतुष्टयम् ॥ ११ ॥ दक्षिणे श्रुतिसिद्धानां सचरोविंशत्सहस्रम्। प्रतिसव्यां मुनिसिद्धानामष्टाशीतिसहस्रकम् ॥ १२ ॥ पूजयेत्, पुरचरीणांतु षट्त्रिंशपूर्व्वकंतत्तम्। मंडलंहि चतुर्ल्लक्षं साहस्रं पूजयेत्ततः ॥ १३ ॥ आसां मंत्रं हि आगमसंवादि विज्ञायते च। चत्वारो वेदा गीयन्ते वेदानामतो गायत्री तत्र तत्र पूज्या भवति ॥१४॥ चतुर्दिक्षु चतुर्धा च अधिष्ठात्री देवता। त्रिपुरारिचतुःशक्तिः सायुधसपरिवारा सगणा पूज्यते ॥१५॥ क्रीडास्थलमिदं ज्ञयं द्वितीयावृतमेव तु। तद्बाह्ये चतुर्दिक्षु सरस्योह्यत्र निर्म्मलाः ॥ १६ ॥ चतस्रोऽमृतपानीया हंशपद्मादिसंकुलाः। पूर्वे सिद्धिप्रदा नाम्ना रत्नसोपानसंयुता ॥ १७ ॥ तज्जलस्पर्शमात्रेण ज्ञानचक्षु-

र्भवेन्नृणाम् । प्रेमभक्त्या तु पश्यन्ति न पश्यन्तीतरे जनाः ॥१८॥ पतत्त्रीविशालस्तत्र कृष्णप्रेमसुविह्वलाः । ये च माया गुणातीताः प्रेमभक्तिसमन्विताः ॥ १९ ॥ तज्जलं ते तु पश्यन्ति महात्मानो महोदरम् । पश्चिमद्वारसंकीर्णा नाम्ना पुष्पारिणी परा ॥ २० ॥ नानामणिसमाकीर्णा, सोपानैरुपशोभिता । तज्जलस्पर्शमात्रेण साधका दिव्यरूपिणः ॥ २१ ॥ भवन्ति तत्क्षणादेव श्रीकृष्णप्रेमभाजनाः । उत्तरद्वारितत्रतस्थो नाम्ना मलयनीविडः ॥ २२ ॥ मणिवैदूर्य्यसोपानः पुष्परत्नसमाकुलः । वसन्तोत्सवयात्रां तु कुरुते तत्र केशवः ॥ २३ ॥ ततो मंडलवाह्ये च रेखायां केशवस्य च । सखायः षोडश तेष्वेव सगणान्पूजयेत् सुधीः ॥ २४ ॥ रेखाया वाह्यभागे तु सन्ति कल्पमहीरुहाः । तेषां मध्यस्थवेदिकायां सुरभीवृन्दमर्चयेत् ॥ २५ ॥ कालिन्दीम्पूजयेत्तत्र बृन्दवादनभूषणाम् । स्फुरद्रत्नोमयतटीं श्यामलामृतवाहिनीम् ॥ २६ ॥ एतत्पीठं पुण्डरीकं पंचावरणसंयुतम् । तत्रैव सुरभीवृन्दं तत्प्रधानाष्टकं शृणु ॥ २७ ॥ सुरभी, वृन्दा, निसिद्धा, चित्रांगी, कामधेन्वपि । कृष्णा कृष्णमुखो पीता पूर्वादिक्रमसंस्थिताः ॥ २८ ॥ तद्वाह्यष्टदलं वृत्तब्रजं ओं प्रणवपुटम् । तेषु चाक्षरान् मंत्रान् विलिख्य तत्र पूजयेत् ॥ २९ ॥ पूर्वपत्रं कामकूटं तत्र केशिनिपातितम् । महारासपरे तत्र कृष्णगोपीकदम्बकैः ॥ ३० ॥ श्रीपुरं वह्निदिग्यस्ति तत्र कृष्णं प्रपूजयेत् । वासो हरन्तं गोपीनां नीपशाखायताश्रयम् ॥ ३१ ॥ पीठमानन्दकान्यंच निरोधोत्तरदिग्दलम् । यत्र वेणुं वादयन्तौ रामकृष्णौ रसान्वितौ ॥ ३२ ॥ अन्वितौ युवतीवृन्दैर्गोगोपीगीतमोहितैः । ऐशान्यां यद्दलं प्रोक्तं रतिसारं तदुच्यते ॥ ३३ ॥ यत्तपत्नीभिरुल्लासैर्नानोपायनपाणिभिः । अन्वितौ रामकृष्णौ तौ ध्येयौ विश्वेश्वरेश्वरौ ॥ ३४ ॥ पश्चिमे यद्दलं प्रोक्तं महापीठं विदुर्बुधाः । यत्राभिषिक्तो भगवान् शक्रेणेशः स्वयं भुवान् ॥ ३५ ॥ वायुकोणदले पीठं वर्धनं विश्वमंगलम् । यत्र गोवर्धनं शैलं धृतवान् भगवान् प्रभुः ॥ ३६ ॥ दक्षिणे यद्दलं प्रोक्तं जयतं नाम पीठकम् ।

तत्रैव भावयेत् मंत्रं सख्युः षोडश मंडलात् ॥ ३७ ॥ सखितां वाह्यभागे तु द्वात्रिंशद्दलमुच्यते । जन्मादिलीलया तत्र देवदेवो विराजते ॥ ३८ ॥ नानाक्रीडारसं तत्र कृष्णं च परिचिन्तयेत् । तद्वाह्ये स्वर्णप्राचीराकारे कोटिसूर्य्यसमुज्वले ॥ ३९ ॥ चतुर्दिक्षु महोद्याने मंदमारुतसेविते । पश्चिमे सम्मुखे श्रीमत्पारिजातद्रुमाश्रये ॥ ४० ॥ तत्राधस्तु स्वर्णपीठे स्वर्णमंडपमण्डिते । तन्मध्ये मणिमाणिक्यरत्नसिंहासनोज्वले ॥ ४१ ॥ तत्रोपरि परानन्दं वसुदेवं जगद्गुरुम् । त्रिगुणातीतचिद्रूपं सर्वकारणकारणम् ॥ ४२ ॥ चतुर्भुजं महद्धाम ज्योतीरूपं सनातनम् । शंखचक्रगदापद्मधारिणं वनमालिनम् ॥ ४३ ॥ रुक्मिणी सत्यभामा च नाग्निजिती सुलक्षणा । मित्रविन्दा सुनन्दाच तथा जाम्ववन्ती प्रिया ॥ ४४ ॥ सुशीला चाष्टमहिषी वासुदेवावृतास्तथा । उद्धवाद्याः पारिषदाऽवृतास्तद्भक्तितत्पराः ॥ ४५ ॥ उत्तरे दिव्य उद्याने हरिचन्दनसंभृते । तत्राधस्तु स्वर्णपीठे मणिमंडपमण्डिते ॥ ४६ ॥ तत्रोपरि च रेवत्या संकर्षणहलायुधम् । पूर्वोद्याने महारम्ये सुरद्रुमतलाश्रये ॥ ४७ ॥ तस्याधस्तु महापीठे हेममण्डपमण्डिते । श्रीमत्या उषया श्रीमदनिरुद्धं जगत्पतिम् ॥ ४८ ॥ प्राचीरे दक्षिणे भागे मंजुमुक्तान्तरस्थिते । अनन्तवृक्षमूलस्य मणिमण्डितमन्दिरे ॥ ४९ ॥ प्रद्युम्नेन रती देवी तत्रोपरि समास्थिता । तस्याधस्तु महापीठे आधारशक्तिकल्पिते ॥ ५० ॥ तत्रस्थतद्रूपध्यानतत्परम् । तद्वाह्ये स्फाटिके श्रीमत्प्राचीरे सुमनोहरे ॥ ५१ ॥ चतुर्दिदयावृते दिव्ये प्रतिदीप्तिसमुज्वले । अग्रे सुरगणाः सर्वे सुरेन्द्रविधिशङ्कराः ॥ ५२ ॥ दक्षिणे मुनिवृन्दैश्च शुद्धसत्त्वान्वितात्मभिः । तत्पृष्ठे गोपमुख्यैश्च सनकाद्यैर्महात्मभिः ॥ ५३ ॥ वाञ्छान्ति तत्पादांभोजे निश्चलं प्रेमसाधनम् । तद्वाह्ये तु प्रवालाद्यैः प्राचीरे सुमनोहरे ॥ ५४ ॥ कृष्णं चतुर्भुजं विष्णुं पश्चिमे द्वारपालकम् । शङ्खचक्रगदापद्मकिरीटादिविभूषितम् ॥ ५५ ॥ रक्तं चतुर्भुजं विष्णुं शङ्खचक्रगदाधरम् । किरीटकुण्डलोद्दिप्तं द्वारपालं समुत्तरे ॥ ५६ ॥ गौरं चतुर्भुजं विष्णुं शङ्खचक्रगदाम्बुजम् । पूर्वद्वारे

द्वारपालं हरिवर्णं चतुर्भुजम् ॥ ५७ ॥ कृष्णवर्णं चतुर्बाहुं दक्षिणे द्वारपालकम् । एतद्यंत्रं महागोप्यं वैष्णवानां सुदुर्लभम् ॥ ५८ ॥

इत्थं चिन्तयित्वा पूजयति मनसा वा ये परमं ज्ञानं लभन्ति ते प्रेमभक्तथा सुवैष्णवा भवन्ति ।

इत्यार्वणे पुरुषार्थबोधिन्यां यंत्रराजकथने एकादशः प्रपाठकः

पश्चिमादौ क्रमेण सेव्यं ललितामूलमण्डलं पश्चिमे ललिता ताम्बूलं, वायव्ये, श्यामला गन्धपात्रं कौरवे श्रीमती चमरं छत्रं ऐशान्यां हरिप्रिया रत्नमालां पूर्वे विशाला श्वेतपत्रं अश्लेषा तुलसीमालां अग्नौ शैव्या याम्ये पद्मा भोजपात्रं नैऋते भद्रा पट्टवस्त्रं अग्रे चन्द्रावली मुक्तामालां, चित्ररेखा वनमालां, चित्रतल्पा सुधापात्रं, मृगांगी पद्ममालां, श्रीदेवी रत्नछत्रं, शशिरेखा पीतवस्त्रं, कृष्णप्रिया मणिपादुकां, कृष्णवल्लभा चित्रकाष्ठं, वृन्दावती नीलच्छत्रं, धूपपात्रं मनोहरा, घनसारं योगानन्दा, परमानन्दा व्यजनं, सत्यानन्दा स्वर्णस्थालीं करेण प्रेमानन्दा जलपात्रं कृष्णसेवानियोजिताः ।

किशोरी रहस्यालापे प्रथमा सहजानन्दा, परानन्दा परात्मिका एता गोप्यः कृष्णाग्रे नृत्ययुक्ता सेव्या । रामानन्दा सिद्धा च सिद्धगागायिनी, एवं गीतगायनं जया भद्रा पद्मा पद्मावती एता मृदङ्ग वाद्यं सत्यानन्दा जयानन्दा सानन्दा शुभा दया, सुदया च क्षेमलोमा कृपा लोमा कात्या वेणुवाद्यं, कृष्णप्राणकरी प्रेमविलासिनी ईश्वरी प्रेमरमा प्रेमपरमेश्वरी, अङ्ग मृदङ्गादिवादनं प्रेमोन्मदा प्रेमसिद्धा प्रेमधारा प्रियंविदा प्रेमोन्मादा प्रेमसाध्या प्रेमगीता प्रियकरी वीणावादनतत्परा ।

प्रथमा दया साध्या प्रपन्ना जयन्ती जया निश्चला यमुना गङ्गा सुभद्रांगी शुभ्रभूषणा रवावादनं, विमला निर्मला बाला नीला सुशीला स्वर्णरूपा स्वरूपिका कांस्यवाद्यं हेला चेला सुचेला, तरला विमला स्वरूपा शुभ्ररूपा स्वर्णगात्री शुभदा यन्त्रवाद्यादि, कमला सुवला लेखा सानन्दा कुमुदा मन्दा सुमन्दरा सुमदा रेखा ... नमप्रदा ताल-

वादनं, कपिला पिङ्गलाक्षीकुटिला, कृष्णापिङ्गला कुंडला हारी मण्डली मण्डनप्रिया काष्ठवादम् ।

सोमपाऽमृतपा सौम्या शुभा राधा स्वयंवरा शंख वाद्यं, सिद्धेश्वर्या तु वेताला गंडपाली शुचिस्मिता सूत्रवाद्यं रुक्मिणी, बेताली सिद्धेश्वर्या एता मृदंला वाद्यं तत्परा बालेश्वरी सुकृष्णा नेपाली नाकुला तथा एता गोप्यः सावधाना नियुक्ताः ।

इत्यथर्वणे पुरुषार्थबोधिन्या उपनिषदः द्वादशतमः प्रपाठकः ।

सेयम्पुरुषार्थबोधिन्याथर्वणोपनिषद्यावत्युपलभ्यते तावतीह पठिता । तत्र षष्ठप्रपाठकमारभ्य दशमप्रपाठकपर्य्यन्ता स्वरूपनिरूपणप्रसंग एव पठिता । द्वादशप्रपाठकपर्य्यन्ता त्विह पठितेतिशम् ।

एवं भगवत्स्वरूपप्रतिपादकाः परमधामप्रतिपादकाश्च केचिद्वेदमन्त्राः पद्मपुराणे उत्तरखण्डेपंचपञ्चाशदधिकद्विशततमाध्यायमारभ्योमामहेश्वरसंवादेन व्याख्यातास्तदत्र संहृद्यते यथा—

पार्वत्युवाच

तद्विष्णोः परमंधाम व्यूहभेदांस्तथा हरेः ।
सर्वमाख्याहि तत्त्वेन सर्वमेव सुरेश्वर ॥ १ ॥

ईश्वर उवाच—शृणु देवि प्रवक्ष्यामि स्वरूपं परमात्मनः । विभूतिगुणसंघातं तदवस्थात्मकं हरेः ॥ २ ॥ विश्वतः पाणिपादंच चक्षुष्मान्विश्वतः प्रभुः । विश्वानि भुवनान्यस्मिन्धामानि परमाणि वै ॥ ३ ॥ ध्यायन्सोऽत्यतिष्ठन्मनांसि च महर्षिणाम् । एवं बृहत्स्वरूपोऽसौ श्रीपतिः पुरुषोत्तमः ॥ ४ ॥ ईश्वर्या सह भोगार्थं दिव्यमंगलरूपवान् । बृहच्छरीरो विमिमानरूपो युवा कुमारत्वमुपेयिवान्हरिः । रेमे श्रियासौ जगतां जनन्या स्वज्योत्स्नया चन्द्र इवामृतांशुः ॥ ५ ॥ अयं स जगदीश्वर्या कुमारो नित्ययौवनः । कन्दर्पकोटिलावण्यः तस्थौ स परमे पदे ॥ ६ ॥ भोगार्थं परमव्योम क्रीड़ार्थमखिलं जगत् । भोगक्रीड़तया विष्णोः स्वरूपद्वयमास्थितम् ॥ ७ ॥ भोगे नित्या स्थितिस्तस्य लीलां संहरते यदा ।

भोगा लीला उभौ तस्य धार्यते शक्तिनात्तया ॥ ८ ॥ त्रिपाद्यपि परंधाम पादोऽस्येहाभवत्पुनः । त्रिपाद्विभूतिर्नित्या स्यादनित्यं पादमैश्वरम् ॥ ६ ॥ नित्यं तद्रूपमीशस्य परधाम्नि स्थितं शुभम् । अच्युतं शाश्वतं दिव्यं सदा यौवनमास्थितम् ॥ १० ॥ नित्यं संभोगमीश्वर्या श्रिया भूम्या च संवृतम् ॥ ११ ॥ ( सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं सर्वतः स्पृत्वाऽत्यतिष्ठद्दशांगुलम् ॥ १२ ॥ पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ १३ ॥ एतावानस्य महिमा ततो ज्यायांश्च पुरूषः । पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतन्दिवि ) ॥ १४ ॥ नित्यैवेषा जगन्माता विष्णोः श्रीरनपायिनी । यथा सर्वगतोविष्णुस्तथा लक्ष्मी शुभानने ॥ १५ ॥ ईशाना सर्वजगतो विष्णुपत्नी सदा शिवा । सर्वतः पाणिपादान्ता सर्वतोऽक्षिशिरोमुखो ॥१६॥ नारायणी जगन्माता समस्तजगदाश्रया । यदपांगाश्रितं सर्वं जगत्स्थावरजंगमम् ॥ १७ ॥ जगत्स्थितिलयौ यस्या उन्मीलननिमीलनात् ॥ १८ ॥

इतिद्वयोः श्रीपुरुषोत्तमयोः स्वरूपगुणमाहात्म्यमुक्त्वा तयोः
परमधामस्वरूपमाह—

त्रिपाद्विभूतिरूपं च शृणु भूधरनन्दिनि । प्रधानपरमव्योम्नोरन्तरे विरजा नदी ॥ १ ॥ वेदांगस्वेदजनितैस्तोयैः प्रस्राविनाः शुभाः । तस्याः पारे परे व्योम्नि त्रिपाद्भूतं सनातनम् ॥ २ ॥ अमृतं शाश्वतं नित्यमनन्तं ब्रह्मणः पदम् । अनेककोटिसूर्याग्नितुल्यवर्चसमव्ययम् ॥ ३ ॥ सर्ववेदमयं शुद्धं सर्वप्रलयवर्जितम् । हिरण्मयं मोक्षपदं ब्रह्मानन्दसुखावहम् ॥ ४ ॥ समानाधिकरहितमाद्यन्तरहितं शुभम् । तेजसाऽत्यद्भुतं रम्यं नित्यमानन्दसागरम् ॥ ५ ॥ एवमादिगुणापेतं तद्विष्णोः परमं पदम् । न तद्भासयते सूर्यो न शशांको न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं हरेः ॥ ६ ॥ तद्विष्णोः परमं धाम शाश्वतं शिवमच्युतम् । नहि वर्णयितुं शक्यं कल्पकोटिशतैरपि ॥ हरेः पदं वर्णयितुं न शक्यं मया च धात्रा च मुनीन्द्रवर्य्यैः । यस्मिन्पदे अच्युत ईश्वरोऽयं स वेद चेदं यदि वा न वेद ॥

यदक्षरं वेदगुह्यं यस्मिन्देवा अधिविश्वेनिषेदुः। यस्तन्न वेद किमृचा करिष्यति य एतद्विदुस्त इमे समासते ॥ ७ ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। अक्षरं शाश्वतं नित्यं दिवीव चक्षुराततम् ॥ ८ ॥ तत्प्रवेष्टुं न शक्यं च ब्रह्मरुद्रादिदैवतैः। ज्ञानेन शास्त्रमार्गेण वीक्ष्यन्ते योगिपुङ्गवैः ॥ ९ ॥ अहं ब्रह्मा च देवाश्च न जानन्ति महर्षयः। सर्वोपनिषदामर्थं दृष्ट्वा वक्ष्यामि सुव्रते ॥ १० ॥ विष्णोः पदे हि परमे पदे यत्सुखमासते। यत्र गावोभूरिशृङ्गा आसते सुमुखाः प्रजाः ॥ ११ ॥ अत्राह तत्परंधाम गीयमानस्य शार्ङ्गिणः। तद्भाति परमंधाम गोभिः पेयैः सुखावहैः ॥ १२ ॥ नित्याः सर्वे परे धाम्नि ये चान्ये च दिवौकसः। ये वै प्राकृतनाकेस्मिन्ननित्या त्रिदिवेश्वराः ॥ १३ ॥ ते ह नाकं महिमानः सचन्त इति वै श्रुतिः। एवं परंपदं नित्यैर्मुक्तिभागपरायणैः ॥ १४ ॥ दिव्याभिर्महिषीभिश्च राजते प्रभुरीश्वरः। न तद्भासयते सूर्यो न शशांको न पावकः ॥ १५ ॥ यद्गत्वा न निवर्तन्ते योगिनः शंसितव्रताः। सामान्या वर्तते भूमिरन्तेऽस्मिन् शाश्वते पदे ॥१६॥ तस्थतुर्जागरूकेऽस्मिन्युवानौ श्रीसनातनौ। यतः स्वसारौ युवती भूलीले विष्णुवल्लभे ॥ १७ ॥ अत्र पूर्वे च साध्याश्च विश्वदेवाः सनातनाः। ते ह नाकं महिमानः सचन्त इति वै श्रुतिः ॥ १८ ॥ तत्पदं ज्ञानिनो विप्रा यान्ति संवासमिच्छवः। तद्विष्णोः परमं धाम मोक्ष इत्यभिधीयते ॥ १९ ॥ अस्मिन्बन्धविनिर्मुक्ताः प्राप्यन्ते परमं सुखम्। तत्प्राप्य न निवर्तन्ते तस्मान्मोक्ष उदाहृतः ॥२०॥ मोक्षं परं पदं लिगममृतं विष्णुमन्दिरम्। अक्षरं परमं धाम वैकुण्ठं शाश्वतं पदम् ॥ २१ ॥ नित्यं च परमं व्योम सर्वोत्कृष्टं सनातनम्। पर्यायवाचकान्यस्य परधाम्नोऽच्युतस्य हि" ॥२२॥ इत्यादिनेति। तथा—
"दर्शयामास लोकं स्वं गोपानां तमसःपरम्। सत्यं ज्ञानमनन्तं यो ब्रह्म ज्योतिः सनातनम् ॥२३॥ श्रीदामानं च नत्वाऽसौ प्रविष्टोऽन्तस्तदाज्ञया। महाचतुष्के वितते तेजोऽपश्यन्महोच्चयम् ॥ २४ ॥ तत्त्वेककालसंभूतंकोटिसूर्यसमप्रभम्। स व्यचष्ट महत्तेजो दिव्यं सिततरं मुने ॥ २५ ॥ दिशश्च

विदिशः सर्वा ऊर्ध्वाधो व्याप्नुवन्यत । अक्षरं ब्रह्म कथितं सच्चिदानन्द-लक्षणम् ॥२६॥ प्रकृतिं पुरुषं चोभौ तत्कार्याण्यपि सर्वशः । व्याप्तं यद्योगसंसिद्धाःषट्चक्राणि निजान्तरे ॥ २७ ॥ व्यतीत्य मूर्ध्नि पश्यति वासुदेवप्रसादतः । यद्भासा भासितः सूर्यो वह्निरिन्दुश्च तारकाः ॥२८॥ भासयन्ति जगत्सर्वं स्वप्रकाशंतथाऽमृतम् । यद्ब्रह्मपुरमित्याहुर्भगवद्धामसात्त्वताः ॥ २६ ॥ ( स्क० पु० व० वा० मा० )

इत्यादिना स्कान्दे पुराणे वैष्णवखण्डे वासुदेवमाहात्म्ये च तथा गोलोकस्वरूपनिरूपणादित विस्तरतो युग्मतत्त्वप्रबोधिन्यामुत्तराध द्रष्टव्यम् ।

अत्र "विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वस्तपात् । संबाहुभ्यां धमति सम्पतत्रैर्द्यावा पृथिवी जनयन्देव एकः ।" ( श्वे. उ. ५ । ७ । ना. उ. ७ ) ( य.सं. ) "चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतिरवीविपत् । बृहच्छरीरो विमिमान ऋग्भिर्युवा कुमारः प्रत्येत्याहवम् " ( ऋ. सं. २ अं विष्णु सू. ) इति विष्णुसूक्तं पुरुषसूक्तं श्रीसूक्तं च स्वरूपपरतया लीलापरतया च व्याख्यानि ॥ तथैव–"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥" "तदस्य प्रियमभिपाथोऽस्यां नरो यत्र देवयवो मदन्ति । उरुक्रमस्य हि विष्णोः परमे पदे मध्व उत्सः ॥" "ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥" इत्यादिविष्णुसूक्तमंत्राः "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि० "ते ह नाकं महिमानः सचंत यत्र पूर्वे साध्या ह सन्ति देवाः" इत्यादिपुरुषसूक्तमंत्रास्तथाऽन्ये च "ऋचोऽक्षरे परमेव्योमन्०""इयंविसृष्टिर्यत आवभूव०"इत्यादिवेदसं० मंत्राः, "दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः" इत्याद्युपनिषदश्च स्वरूपनिरूपणप्रस्तावे.- "यत्तस्य पीठम्" इत्यस्य व्याख्याने, "एतद्विष्णोः परमं पदम्" इत्यस्य व्याख्याने च पठिता वेदमन्त्रा व्याख्याता भवन्तीत्यनुसंधेयम् ॥ ३ ॥

अथ यान्येतानि ध्यानरसनभजनोपासनानि अमृतत्वप्राप्तये कर्तव्यत्वेनोपदिष्टानि तानि किंमुक्तौ स्वतंत्रसाधनरूपाणि भवन्ति, साधनान्तरव्यापाररूपाणि वा, तत्र स्वतंत्रसाधनानि तु न भवितुमर्हन्ति "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुस्वाम् (क.मु.उ.) इति श्रुतौ साधनान्तरप्रतिषेधेन वरणमात्रलभ्यत्वस्य निर्धारात्। "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इतिगीतावाक्ये च प्रपत्तिमात्रस्यैव मायासन्तरणहेतुत्वनिर्धाराच्च। तस्मात्साधनान्तरव्यापाररूपाण्येव तानि भवितव्यानि। एवंच यस्य साधनस्यैतानि व्यापाराणि तत्साधनमाह।

मू० यो ब्रह्माणं विदधाति पूर्वं यो वै विद्यास्तस्मै गोपायति स्म कृष्णः। तं ह देवमात्मबुद्धि प्रकाशं मुमुक्षुर्वै शरणं व्रजेत् ॥४॥

अत्र वै इति शब्दद्वयमेवकारार्थकम्। तत्र प्रथमो यत्पदार्थद्वयान्वयी। द्वितीयस्तु यद्यपि मुमुक्षुशब्दान्वयित्वेन प्रतीयते तथापि तदन्वयित्वे—"मुमुक्षुरेव शरणं व्रजेत्" इत्यर्थप्रतीतेरार्तादीनां मुमुक्षारहितानां द्रौपदीगजेन्द्रप्रभृतीनां च शरणगमनं विप्रतिषिद्धंस्यादिति स 'वै' शब्दः शरणशब्देनैवाऽन्वेति। ह इतिशब्दोऽप्येवकारार्थकस्तच्छब्देनान्वेति। वेदे मात्रामात्रस्यापि प्रयोजनविशेषशून्यत्वकल्पनस्यानुचितत्वेन पादपूरणार्थकत्वमात्रासंभवात्। तथाच य एव कृष्णः पूर्वं सर्वादिसृष्टेरादौ ब्रह्माणं हिरण्यगर्भं विदधाति जनयति पोषयति च। य एव तस्मै ब्रह्मणे विद्याः पंचपदीविद्याः गोपायति तमुपदिश्य सम्प्रदायप्रवर्तनेन रक्षयति। क्वचित्—"गापयति" इत्येव पाठः। तथाच गीतादिवदुपदिशति। "ततः प्रणतो मयाऽनुकूलेन हृदा मह्यमष्टादशार्णस्वरूपं सृष्टये दत्त्वाऽन्तर्हितः" इति वक्ष्यमाणश्रुतेः। वस्तुतस्तत्र ब्रह्मपदं जीवमात्रो-

पलक्षकम् । विद्यापदं विद्यामात्रोपलक्षकम् । "विदधाति" इतिक्रियापदं जननधारणपोषणसंहारादिसृष्टि तदुपयोगिसर्वक्रियोपलक्षकम् । तथाच "यथोर्णनाभिस्तन्तुनोच्चरेत् यथाऽग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणा सर्वे लोगा सर्वे देवा सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्ति" "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" "आनन्दाद्धयेव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति" 'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" "कोह्येवान्यात्कः प्राण्यात्" इत्यादि तैत्तरीयबृहदारण्यकादिश्रुत्युक्तदिशायः सर्वजगज्जननधारणपोषणादिकर्त्ता याएव च तस्मै तदर्थं जगतोऽर्थं च "एतस्यैव महतोभूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदः (बृ. ४।५।११) इत्यादिश्रुत्युक्तदिशा सर्वविद्याजनकः प्रवर्तकश्च तमेव कृष्णं "कृषिभूर्वाचक शब्दः" "सच्चिदानन्दरूपाय" इत्यादिव्याख्यातदिशा निरतियशयसच्चिदानन्दघनरूपं तथा 'देवं' निरुक्तपरमदेवं 'आत्मबुद्धिप्रकाशम्" आत्मनो बुद्धेश्च प्रकाशकं स्वतः स्वप्रकाशं 'मुमुक्षुः' निरुक्तलक्षणमोक्षेच्छुः 'वै' शरणं अन्यत्र साधनत्वबुद्धिं परित्यज्य शरणमेव व्रजेत् । एवकारार्थकेन शरणान्वितेन वैशब्देन शरणातिरिक्तस्य मोक्षसाधनत्वप्रतिक्षेपः सूचितो भवति । वै शब्दस्य सामान्यतोऽवधारणार्थकत्वेऽपि तादृशार्थतया मुमुक्षुपदान्वितत्वस्वीकारेऽपि च शरणगमनस्यावश्यकर्त्तव्यत्वं तूक्तं भवत्येव । वस्तुतस्तु 'यमेवैष वृणुते स तेन लभ्यः' इति वरणश्रुत्यैकवाक्यतया शरणातिरिक्तस्य मोक्षसाधनत्वनिषेधरूपान्ययोगव्यवच्छेदार्थक एवात्र वैशब्दस्तेन निरुक्तार्थ एव साधुः ।

एतेन "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदाँश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये (श्वे. ६।१८) "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् । नाऽविरतो दुश्चरि-

तान्नाशान्तो नासमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नु-यात् ।" ( कठ. १ । २ । २२ । २३ ) "नायमात्मा प्रवचनेन लभ्यो न-मेधया न बहुनाश्रुतेन । यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् । नायमात्मा बलहीनेन लभ्यो न च प्रमादात्त-पसो वाप्यलिंगात् । एतैरुपायैर्यतते यस्तु विद्वान् । तस्यैष आत्मा विशते ब्रह्मधाम । ( मुण्डक. ३ । २ । २४ ) न कर्म्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्रा-जते यद्यतयो विशन्ति । ( महाना. ० । १२ ) "तस्मान्न्यासमेषां तप-सामतिरिक्तमाहुः ।" ( म. ना. ७६ ) "ब्रह्मणे त्वा महसे ओमित्यात्मानं युंजीत" । ( म. ना. ७६ ) इत्यादिश्रुतयः "शरणागतिसमर्पकत्वेन व्याख्याताः ॥

ननु-"प्रकृतमंत्रे व्रजेत्" इतिलिङन्तप्रयोगाद्विधिप्रतीतेर्भवतु नाम शरणागतिसमर्पकत्वम् । तथापीतरेषां कथं शरणागतिसमर्पकत्वं "मुमु-क्षुर्वैशरणमहं प्रपद्ये" इत्यादौ विधिबोधकप्रत्ययाभावादितिचेत् । उच्यते-यद्यपि तेषु विधिप्रत्ययो न श्रूयते तथापि रात्रिसत्रन्यायेन तेषां शरणा-गतिविधायकत्वं संभवति ॥ तथाहि "प्रतितिष्ठति" इत्यादिना तत्र रात्रि-सत्रस्वरूपंप्रतिष्ठारूपंफलंच श्रूयते नतु तस्य स्वशब्देन लिङादिप्रयो-गेन कर्तव्यत्वंविधायते । तथापि फलाद्यन्यथाऽनुपपत्त्या विधिः कल्प्यते । अन्यथा तद्वाक्यस्य वैयर्थ्यं स्यादिति निर्णीतं पूर्वमीमांसायाम् । तथा प्रकृतेऽपि लिङाद्यभावेऽपि आप्ततमस्य वेदऋषेर्मोक्षार्थमेव साधनान्तर परित्यागेन परमेश्वरशरणागतेर्निरूपणात् इतरेषामपि जीवानां मुमु-क्षूणां मुक्तये परमेश्वरशरणागमनं तात्पर्य्येण विधीयते एव । अज्ञातार्थ ज्ञापकत्वस्य वेदत्वस्य चोभयत्र समानत्वात् । किंच यथा 'तत्त्वमसि" अहं ब्रह्माऽस्मि" इत्यादिमहावाक्ये न जीवकर्तव्यत्वेन स्वनिष्ठब्रह्मात्मकत्व भावनाया विधिः । लिङाद्यभावात् । न वा स्वशब्देन जीवसामान्यं प्रत्य-यमुपदेशः । जीवविशेषस्यैव श्वेतकेतुहिरण्यगर्भादेस्तत्र प्रस्तुतत्वात् ।

तथैव मध्यमोत्तमपुरुषप्रयोगाच्च। तथापि तेन वाक्येन स्वस्मिन्ब्रह्मात्मकत्वभावनं मुमुक्षुमात्रकर्तव्यतया बोध्यते। मोक्षप्रकरणत्वात्। जीवविशेषस्य तत्र जीवसामान्यप्रतिनिधित्वोपगमात्। "आत्मेत्येवोपासीत" इत्यादाविव लिङाद्यभावेऽपि वाक्यान्तरसमभिव्याहारेण तथा तात्पर्य्योपगमाच्च। तथैव प्रकृतेऽपि बोध्यम्। नच तथापि तत्त्वमस्यादिवाक्ये न विधिः। अपि तु वस्तुस्थितेरेवोपदेशः। जीवस्य ब्रह्मात्मकत्वं तु स्वभाविकमेव तच्चानाद्यविद्यया विस्मृतकण्ठमणिन्यायेनाविद्यमानमिव वर्तते तदेव तत्त्वमस्यादिवाक्येन स्मार्य्यते इतिवाच्यम्। प्रकृतेऽपि तथैव शरणागतिपदार्थतात्पर्य्यार्थभूतं भगवदाश्रितत्वमपि जीवस्य स्वाभाविकमेव धर्म्मः "सन्मूला साम्येमाः प्रजाः सदायनाः सत्प्रतिष्ठानाः" इत्यादिश्रुतेः "सर्वएत आत्मानः समर्पिताः" इति बृहदारण्यकश्रुतेश्च। एवंच तत्त्वमस्यादिवाक्यप्रतिपादितं जीवस्य ब्रह्मात्मकत्वमपि तत्रैवान्तर्भूतम्। तथैव व्यवस्थापितं श्रीसुन्दरभट्टाचार्य्यैः रहस्यषोडशीभाष्ये— "एतेन वाक्यार्थोऽपि व्याख्यातः" इत्यादिना। विधिविशेषस्य तु नाग्रहः। केवलं तादृश भावनानुबोधनमात्रमपेक्षते। तच्चोभयत्र समानमिति।

इदंत्विहावधेयम्। शरणागतिर्हि "सन्मूला सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठानाः" "तत्त्वमसि श्वेतकेतो" "स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः" (बृ. उ. २।५।१५) "अहं ब्रह्मास्मि" ब्रह्मदाशा ब्रह्मदाशा ब्रह्मेमाः कितवाः" "ममैवांशो जीवलोके जीवभूतः सनातनः, 'अंशो नानाव्यपदेशात्' इत्यादिश्रुतिस्मृतिसूत्रेभ्यः—सर्वात्मनि सर्वाश्रये सर्वेशे सर्वनियामके भगवति स्वभावतस्तदात्मकस्य तदाश्रितस्यात्मात्मीयस्य वस्तुनोऽनाद्यविद्ययाऽध्यस्तस्वतंत्रत्वस्वकीयत्वादिबुद्धिपरिहारपूर्विका भगवदात्मकत्वभगवदधीनत्वभगवदाश्रितत्वादिभावनया स्थितिरेव। अत्रैव शरणागतिशब्दार्थभूताना-

मन्येषामपि सर्वेषामर्थानां तात्पर्य्येणान्तर्भावात्। शरण शब्दो हि सर्वमनोरथसाधनभूते आश्रये प्रयुज्यते। पद्मपुराणे वृन्दावनमाहात्म्ये बृहद्ब्रह्मसंहितायां च पञ्चपदीमंत्रव्याख्याने—

"राधाकृष्णौ तयोः पादाः शरणं स्यादिदाश्रये। प्रपद्ये गतवानस्मि जीवोहं भृशदुःखितः। सोऽहं यः शरणं प्राप्तो मम तस्य यदस्ति च सर्वं ताभ्यां तदर्थं च तद्भोग्यं नह्यहं मम

इत्यादौ तथा व्याख्यानोपलब्धेः। आगतिरपि तथा भावनाया स्थितिरेव। "सन्मूला सोम्येमा प्रजाः" इत्यादिश्रुत्यादिभ्यो जीवस्यानादित एव स्वभावत एव च भगवदाश्रितत्वेन समर्पितत्वेन तदात्मकत्वादिना चानागन्तुकसदातनस्थितिमत्त्वेन तत्र क्रियात्मकगतेरर्थाभावात्। एवं जीवस्य स्वातंत्र्यादिबुद्धिपरिहारेण तदात्मकत्वतदाश्रितत्वतदधीनत्वादिभावनया स्थितौ यो भावनापदार्थभूतो ज्ञानविशेषः सोऽपि भगवदात्मकत्वादिवत् स्वभावसिद्ध एव जीवस्य चैतन्यगुणांशभूतः। एवंच शरणागतिपदार्थभूतं त्रितयमपि जीवेऽणुत्वचेतनत्वादिवत् स्वभावसिद्धमेव नत्वागन्तुकम्। किन्तु तत् कर्म्मात्मकानाद्यविद्यया स्वनिष्ठचैतन्यादिवत् पिहितमिव यदा भवति तदा स स्वस्मिन् स्वतन्त्रत्वादिकमध्यस्य संसारी भवति। यदा च भगवत्कृपया शास्त्राचार्य्यसंसर्गवत्त्वेन स्वकल्पितं स्वतंत्रत्वादिबुद्धिं परित्यज्य भगवदेकशरणो भूत्वा प्रपन्नवृत्तिमाचरन्नवतिष्ठते तदा भगवत्कृपया संसारो निवर्तते भगवद्भावापत्तिं च प्राप्नुते। तदर्थमेव शरणागतिशास्त्रम्।

एवमेव च रहस्यषोडशीभाष्ये "चरमार्थं च ब्रह्माग्नावात्मानं जुहुयाद्बुधः" इति कारिकाव्याख्याने "ब्रह्मणि जुहुयात्" "आत्मन्यासंकुर्य्यात् स्वतन्त्रसत्तामनादिकर्मप्रयुक्तां त्यजेत्। आत्मानं कर्तृत्वभोक्तृत्वज्ञानाज्ञानपुण्यापुण्यकर्मभिर्देहेन्द्रियमनोबुद्ध्यादिभिश्च आत्मात्मीयवर्गैश्च सह गुरौ निधाय श्रीभगवति पुरुषोत्तमे प्रथमपदार्थे समर्पयेदित्यर्थः॥ आत्मवृत्तिस्वातन्त्र्यस्य चानादिकर्म्मात्मिकाऽविद्याप्रयुक्तत्वात्"। इत्यारभ्य "हुत्वाऽऽत्मानं बुधश्चैव कृतकृत्योऽभिजायते। भगवन्नवनिर्मुक्तो ब्रह्मसा-

युज्यमाऽनुयात्"। इत्यन्तेन विस्तृतं विचारितम्।

इयमेव शरणागतिः, प्रपत्त्यात्मभरन्यासात्मार्पणादिशब्दैश्चान्यर्व्यहार्यते। तदुक्तं भारद्वाजसंहितायां "अयमात्मभरन्यासः प्रपत्तिरिति चोच्यते"। इति 'श्रद्धया परया युक्तो हरिंशरणमाव्रजेत्' इति च। 'युगलार्थस्तथा न्यासः प्रपत्तिःशरणागतिः। आत्मार्पणमिमे पञ्च पर्य्यायास्ते मयोदिताः।' इतिपाद्मे वृन्दावनमाहात्म्ये नारदं प्रति श्रीशिवोक्तेश्च। एवं च प्रपत्तिन्यासात्मार्पणादिशब्दैरपि अनाद्यविद्याकल्पित-स्वातंत्र्यादित्यागपूर्वकतदेकशरणतया स्थितिरेवोच्यते। त्यागस्तु अनादिकर्म्मात्मिकाविद्याकल्पितस्वातंत्र्यादेरेव फलतो भवति। ननु आत्मनात्मीयस्य, तस्य प्रागपि भगवदीयत्वात् परंतु तत् अविद्याकल्पितस्वकीयत्वादिनाऽवृतं सत् अविद्यमानमिव भवति स्वकीयत्वादि बुद्धिनिवृत्तौ व्यक्तं भवति। तेन जीवे भगवदीयत्वादिकं शरणागमनादिना नोत्पाद्यं किन्त्वनादिसिद्धमेव तेन 'शरणं व्रजेत्' 'प्रपद्ये' इत्यादिवाक्यानां 'तत्त्वमसि' 'आत्मेत्येवोपासीत' इत्यादिवाक्यानामिव मनसो विषयतोऽपकृष्य तदुन्मुखीकरणमात्रं कर्तव्यम्॥ ननु "जुहुयादि" त्यादिवत् कृतिसाध्ये प्रवर्तनमिति। एतेन "एष त आत्मा" "स म आत्मेति विद्यात्" इत्यादिश्रुतयो व्याख्याताः "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" (ब्र. ४।१।०) इति सूत्रं च। उक्तदिशा तेषामपि निरुक्तशरणागतिसमर्पकत्वाद्बाधकाभावाच्चेति। बोध्यम्।

एवं सर्वात्मनो भगवतो ध्यानरसनभजनोपासनान्यपि जीवस्यानादिसिद्धानिस्वाभाविका एव धर्म्माः। ध्यानं स्मृतिसंततिः। रसनं निरुक्तलक्षणात्मसमर्पणपूर्वकतत्स्वरूपगुणमाहात्म्याद्यनुशीलनम्। भजनं प्रेममयमानससेवा उपासनं प्रेममयबाह्यसेवा। तदेतच्चतुष्टयमपि स्वात्मविषयकं सत् स्वाभाविकमेव भवति सर्वो हि प्रेक्षावान् स्वात्मानं स्मरति। अनुशीलयति, अन्तर्बहिश्च प्रेम्णा सेवते। तथा आत्मनामप्यात्मभूतभगवत्कर्म्मकमेतच्चतुष्टयंस्वाभाविकमनादिसिद्धमेव वर्तते। अतएव श्रुतिः "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा"

इत्यादि । तथाचैतदपि चतुष्टयं स्वभावसिद्धमेवाविद्ययापिहितमभ्या-सेनोद्धाटनायोपदिशति श्रुतिः "ध्यायेत् रसतेत् भजेत् यजेत्" इत्यादि । तस्मादेतच्चतुष्टयमपि नित्यमेव । तेन न तत्रापि 'जुहुयादित्यादि' वज्जीव-कृतिसाध्ये प्रवर्तनमित्यपि बोध्यम् ।

एतेन यदुक्तं "आत्मेत्येवोपासीत" आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादौ यद्यपि विधिप्रत्ययः तथापि नात्र विधिर्ब्रह्मात्मैकस्य दर्शनश्रवणादेश्च पुरुषप्रयत्नाजन्यत्वेन वस्तुतंत्रत्वेन-प्रमाणतंत्रत्वेन च विधेरसंभवात् । इति विधिच्छायापन्नान्येव तानि वाक्यानि इति तत्तत्प्रकरणस्य न विधिविशेषत्वम् ॥ इति व्यवस्थापितं भाष्ये भामा-त्यांचेति । प्रकृते तु तादृशप्रतिद्वन्धकाभावाद्विधिः संभवति इति-विधिशेष एव प्रकृतविचार इति शंकाऽवसरोनिरस्तः । उक्तदिशा ध्यान-रसनभजनोपासनानां शरणागतेश्च नित्यत्वेन आत्मविषयकतया स्वारसिक-त्वेन च पुरुषतंत्रत्वाभावात । तदावरणाविद्यापनोदार्थमभ्यासोपदेश-स्तूभयत्र समान इ यप्यनुसंधेयम् । विधिशेषत्वाभावे हे वन्तराणितूक्तान्येव पूर्वम् इति ।

अथ "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः" "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" । इत्यादितुरीयाश्रमस्तावकश्रुति-पूक्तानां त्यागन्यासादिपदानां कथं शरणागतिसमर्पकत्वमितिचेन्न, तत्र संन्यासविधेरभावेन तेषां तच्छेषत्वासंभवात् । "दह्रं विपायं परवेश्म भूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दह्रं गगनं विशोकस्तस्मिन्य-दन्तस्तदुपासितव्यम्" इतिमंत्रेणाग्रे, छान्दोग्ये दहरविद्यायामिव प्रकृतोप-निषदि निरुक्तपीठभावनानायामिव च भगवदुपासनस्यैव निरूपणात । तथा "तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः" इत्यस्याप्यग्रे "ब्रह्मणे त्वा महसे ओमित्यात्मानं जुंजीत" इत्यनेन "प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमु-च्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्" इत्यादिवत् प्रणवद्वारा प्रणवप्रतिपाद्ये भगवति आत्मन्यासयोगापरपर्य्यायशरणागतिपरत्वमेव-

तत्प्रकरणपठितवाक्ययोस्तयोर्युक्तम्॥न्यासशब्दस्य च शरणागत्यपरपर्य्यायत्वं सर्ववैष्णवशास्त्रप्रसिद्धमेव। अतएव भारद्वाजसंहितायांप्रथमाऽध्याये-

श्रूयतां सम्प्रवक्ष्यामिन्यासाख्यं योगमुत्तमम्। सिद्धिं चैवास्य परमां द्वयमतेद्यथा श्रुतम्। अयं हि योगो वेदेषु वेदान्तेषु च गीयते तथैव धर्मशास्त्रेषु दिव्यशास्त्रगणेषु च' इत्यादिनोपक्रम्य "अयमात्मभरन्यासः प्रपत्तिरिति चोच्यते" "श्रद्धया यस्तयायुक्तो हरिंशरणमाव्रजेत्।" इत्याद्युक्तम्॥ पाद्मेऽपि वृन्दावनमाहात्म्ये युगलमंत्रप्रसंगे 'युगलार्थस्तथा न्यास प्रपत्तिः शरणागतिः। आत्मार्पणमिमे पंच पर्य्यायास्ते मयोदिताः"।

इति न्यासप्रपत्तिशरणागत्यात्मार्पणशब्दानां समानपर्य्यायत्वमुक्तम्। अतएव च श्रीसुन्दरभट्टपादादिभिराचार्य्यैः रहस्यषाडश्यादिभाष्ये -"स च भगवत्साक्षात्कारो भगवत्प्रसादजन्यः।" "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्।" "यमेवैष वृणुते स तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इत्यादिश्रुतिभ्यः। प्रसादश्च-"तस्मान्न्यासमेषां तपसामतिरिक्तमाहुरिति" श्रुत्युक्तात्मन्यासविद्याजन्यः। तस्मान्न्यासविद्यैवात्र विधेया "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये।" "यो ब्रह्माणं विदधाति पूर्वं यो वै विद्यास्तस्मै गोपायति स्म कृष्णः। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणं व्रजेत्" इतिमंत्राभ्याम्- "इत्यादिना "तस्मान्न्यासमिति" श्रुतेरात्मन्यासपरत्वं तस्य च शरणागतिसमानार्थकत्वमुक्तम्। निरुक्तत्यागश्रुतेरपि न्याससमानार्थकत्वादुक्तहेतोश्च शरणागतिरेवार्थः। युक्तं चैतत्। तुरीयाश्रमग्रहणरूपत्यागमात्रेण मोक्षासंभवात्। तस्य स्वतोमोक्षसाधकत्वे वचनान्तराभावात्। शुष्कत्यागस्य वौद्धत्यागवन्निरर्थकत्वात्। भगवत्यात्मभरन्यासरूपत्यागस्य मोक्षासाधारणोपायत्वं तु स्वयंभगवतैव "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" "तमेव शरणं गच्छ सर्वभावेन

भारत। तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥ सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥" इत्यादिनोक्तम्। श्रुतिरपि "यमेवैष वृणुते स तेन लभ्यः" "मुमुक्षुर्वै शरणमहं प्रपद्ये" "मुमुक्षुर्वै शरणं व्रजेत्" इत्यादिना तथैवाह। तस्मान्निरुक्तार्थ एव सार इति।

ननु "यमेवैष" इतिश्रुतेः कथं शरणागतिसमर्पकत्वमितिचेच्छृणु "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्, (मु. ३।२।३ क. १।२।२२) इत्यस्यायमर्थः। अयमात्मा 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणमि'त्यादिना निरूपितः। 'पुरुषान्न परं किंचिदि' त्यादिना निरूपयिष्यमाणश्च परमात्मा प्रवचनेन स्वाध्यायोऽध्येतव्यः। तमध्यापयीत इत्याद्यध्ययनाध्यापनविधिप्रयुक्तवेदाद्यध्ययनेनाध्यापनेन च न लभ्यो दृश्यः प्राप्यश्च। तदुक्तं गीतायां 'नाहं वेदैर्न तपसे' त्यादि मेधया ज्ञानेन शास्त्रादिजन्यज्ञानेन। 'बहुना श्रुतेन' श्रोतव्यः इत्यादिविधिप्रयुक्तश्रवणेन इदमन्येषामपिसाधनानामुपलक्षणम्। तेन स न केनापि साधनेन लभ्यो भवतीत्युक्तं भवति। किन्तु यं जीवम् एव एष निरुक्तपरमात्मा वृणुते स्वकीयत्वेनांगी कुरुते तेनैव जीवेन एष परमात्मा लभ्यो नान्येन यत एष आत्मा—परमात्मा तस्य स्वीयत्वेन वृतस्य, सम्बन्धसामान्ये षष्ठी तथाच तमुद्दिश्यैव तदर्थमेव वा स्वां स्वकीयां तनुं स्वरूपं विवृणुते प्रकाशयति नान्यमुद्दीश्येतिवाक्यार्थः। तथाच—"तं यथा यथोपासते तदेव भवति तद्धैनान्भूत्वाऽवति तस्मादेवं वित्सर्वैरेतैरुपासीत सर्वं हैतद्भवति सर्वं हैनमेतद्भूत्वाऽवति।" ( शतपथब्राह्मणका. १०। ५। २। २० ) इतिशतपथब्राह्मणेऽग्निरहस्यकाण्डे मण्डलब्राह्मणश्रुतेः। "यो यथा मां प्रपद्यन्ते ताँस्तथैव भजाम्यहम्" गीतायां भगवदुक्तेश्च यो जीवः सर्वात्मभावेन भगवन्तं वृणुते शरणीकरोति तमेव जीवं भगवानपि आत्मसात्करोति नान्यम् इति भवति "यमेवैष वृणुते"

इत्यादिश्रुतेर्भगवच्छरणागतिप्रकाशकत्वमिति । तथा "नाविरतोदुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् (क. १।२।२३) "नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिंगात् । एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥ (मु० ३।२।४) इति कठे मुण्डके च वरणवाक्यशेषः प्रपन्नवृत्तिप्रकाशक इत्यवधेयम् ।

इदम्पुनरनुसन्धेयम् । "शरणं व्रजेत्" इत्यस्यावतरणिकायामुक्तरीत्या ध्यानरसनभजनयजनानां शरणागतिपारतंत्र्यात् शरणस्यांगित्वं तेषामंगत्वमिति । गीतायामपि—अष्टादशाध्यायशेषे 'तमेव शरणं गच्छ सर्वभावेन भारत । तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥" इत्यत्र । "सर्वभावेन" इति तृतीयाश्रुत्या सर्वभावपदोक्तानां ध्यानादीनां "तमेव शरणं गच्छ" इत्यंशेनोपस्थापितशरणगमनस्यांगत्वबोधनात् । सर्वभावपदेन तत्रापि "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" इति सजातीयवाक्योपस्थापितत्वात् ध्यानादीनामेव ग्रहणेन तापिनीश्रुतिसमानरूपत्वमेव । भागवतेऽपि—"तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् । प्रवृत्तं च निवृत्तं च श्रोतव्यं श्रुतमेव च ॥ याहि सर्वात्मभावेन यास्यसे ह्यकुतोऽभयम् ॥" इत्येकादशस्कन्धवाक्ये सर्वात्मभावपदेन—"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" इत्यादिगीताद्युक्तानां ध्यानभजनादीनामेव परिग्रहात् । तेषां च तृतीयाश्रुत्या, 'याहि' इति क्रियापदोक्तशरणगमनांगत्वस्यैव बोधनाच्च । तस्माच्छरणागतिरंगी, अंगानि च ध्यानरसनभजनयजनानि ।

ननु गीतायां भागवते च "सर्वभावेन" "सर्वात्मभावेन" इति तृतीयाश्रुत्या तेषामंगभावनिश्चयेऽपि प्रकृते तादृशश्रुतेरभावात्कथं ध्यानादीनां शरणगमनांगतानिश्चय इति चेत् । तादृशश्रुतेरभावेऽपि प्रमाणान्तरादेव ध्यानादीनामात्मात्मीयसर्वसमर्पणरूपशरणागतावंगभावः । तथाहि । "शरणं व्रजेत्" इति विधिः । "अग्निहोत्रं जुहोति" इत्यादि

विध्यन्तरवत्–साध्यं, साधनम्, इतिकर्तव्यतां, चापेक्षते तत्र साध्याकांक्षायां "आत्मबुद्धिप्रकाशं मुमुक्षुः" इत्यंशेन शरण्यभगवद्विशेषणतया, शरणगमनाधिकारिविशेषणतया च श्रुतौ भगवत्साक्षात्कारो मोक्षश्च साध्यतयाऽन्वीयेते । साधनाकांक्षायां भगवत्सम्प्रदानकमात्मात्मीयसर्वसमर्पणं साधनतयाऽन्वेति । इतिकर्तव्यताकाक्षायां प्रकरणपठितानि ध्यानरसनभजनयजनानीतिकर्तव्यतयाऽन्वितानि भवन्ति । तत्र शरणगमनस्य भगवत्सम्प्रदानकात्मात्मीयसर्वसमर्पणात्मकत्यागरूपस्य "यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्" इति श्रुत्या दानसम्प्रदानदेवताध्यानसाकांक्षत्वात्प्रकरणपठितमेव ध्यानमंगभावंभजते । तथा तादृशसमर्पणस्य तादृशदेवतातादृशद्रव्यतादृशत्यागस्वरूपप्रकाशक मंत्रसापेक्षत्वात् प्रकरणपठितःपञ्चपदीमंत्रः—तादृश सम्प्रदानस्वरूपगुण माहात्म्यप्रकाशकत्वात्, गोपीजनांशेन सम्प्रदेयजीवस्वरूपसम्बन्धप्रकाश कत्वात्, चतुर्थ्यंशेन स्वाहांशेन च तादृशसम्प्रदानकतादृशसम्प्रदेय समर्पणप्रकाशकत्वाच्च समर्पणरूपशरणागताबङ्गभावं लिंगादेव भजते ।

एवं भक्तेरपि "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।" इति गीतावाक्यात्सर्वसमर्पणांगभावनिश्चयान्नियमत एवात्मसमर्पणांगत्वम् । तत्र गीतायां तृतीया श्रुत्यैव । अत्र तु तादृशश्रुतेरभावात् प्रकरणादेव भक्तेरात्मसमर्पणांगता । नच "उभयाकांक्षा प्रकरणम्" ध्यानरसनभजनयजनामन्त्रोक्तानां तु "सोऽमृतो भवति" इति तद्वाक्यशेषेण स्वातन्त्र्येणापि फलसम्बन्धावगमान्निराकांक्षत्वमेवेति वाच्यम् । "यमेवैष वृणुते" इति व्याख्यातश्रुतेः स्वातंत्र्येण भगत्प्राप्तिफलसम्बन्धस्य वाधितत्वाच्छरणागतिप्रसादवरण साक्षात्कारपरम्परयैव मुख्यफलसम्बन्धस्य वक्तव्यत्वेन, इत्यमृतत्वरूपमुख्यफलस्योक्तस्यस्वसंबन्धनिर्वाहाय वरणान्तरंगे साधने आमन्यासे नित्यसाकांक्षत्वात् । शरणविधेर्ध्यानादसाकाक्षत्वं तूक्तमेवेति भवत्युभयोः

साकांक्षत्वात्प्रकरणादप्यंगांगिभावः । यदि च भक्तेरपि प्रपत्तिवदेव साक्षादपि भगवदनुग्रहसाधनत्वमभिप्रेयते तदाऽपि तयोः स्थानाख्यप्रमाणात्परस्परमंगांगिभावः । प्रेमभक्तिहीनप्रपत्तेर्नीरसत्वात्प्रपत्तिहीनप्रेम्णो-निर्भरत्वाभावाच्चेति तेन प्रेमप्रपत्त्योर्नितरामंगाङ्गिभावः । तत्रापि भावविशेषेण भगवत्प्राप्तीच्छायां सत्यां त्वतितरामंगांगिभाव इति बोध्यम् ।

एवंच ध्यानादीनां प्रपत्त्यंगतायमारादुपकारकत्वं सन्निपत्त्योपकारकत्वं चोभयमपि सम्मतम् । ध्यानादीनांपूर्वोक्तदिशाऽत्मात्मीय-सर्वसमर्पणरूपप्रपत्तिस्वरूपनिर्वाहकत्वात्सन्निपत्योपकारकत्वम् । कृत-सर्वार्पणस्य शरणागतस्य तस्य भगवदनुग्रहस्वरूपयोग्यताभिव्यक्तिरूपापूर्वहेतुत्वादाराद्‌उपकारकत्वमित्यपि बोद्धव्यम् ।

तदेतत्सर्वं भगवत्प्राप्तिलक्षणपरमामृतत्वरूपपरमफलमपेक्ष्योक्तम् । त्रिवर्गकामनायां तु निर्भरात्मसमर्पणरूपप्रपत्तेः पूर्णताया असंभवाद् यजनस्यैव सम्पूर्णतया संभवाच्च । अतएव तत्रैव "तेनास्याखिलंभवत्यखिलं भवति" इत्यादिना चतुर्वर्गफलसंबन्धाभ्यासमाहेति यजनस्यैवांगित्वं ध्यानादिप्रपत्तिपर्य्यन्तानामंगत्वमेव तदप्यंगत्वं स्थानाख्यप्रमाणादिति बोध्यम् । पञ्चपदीमंत्रस्य तु तत्र श्रुत्या लिंगाच्च तत्तत्कार्य्यविशेषेऽगभाव इति विशेषः । एवं च तत्रापि मंत्रस्य सन्निपत्योपकारकत्वमाराद्‌उपकारकत्वं च निश्चितम् । ध्यानस्य सन्निपत्योपकारकत्वं निश्चितम् । भक्तेः शरणागतेश्चाराद्‌उपकारकत्वं निश्चितमिति मम प्रतिभाति । अधिकन्त्वन्यत्र-द्रष्टव्यम् ।—

न्यासविद्याऽत्मार्पणविद्याद्यपरपर्यायाः शरणागतेः परमात्मनः प्रसादहेतुतायामसाधारणत्वे भारद्वाजसंहितातयां सोपपत्तिकानि महर्षि भारद्वाजवचनान्येवं पठ्यन्ते—

"भारद्वाज उवाच—

श्रूयतां संप्रवक्ष्यामि न्यासाख्यं योगमुत्तमम् । सिद्धिं चैवास्य परमां द्वयमेतच्छ्रुतं यथा ॥ अयं हि योगो वेदेषु वेदान्तेषु च गी-

यते। तथैव धर्मशास्त्रेषु दिव्यशास्त्रगणेषु च ॥ अनेनैव हि कर्माद्या योगाः सिद्ध्यन्ति देहिनाम्। सिद्धिर्नतद्व्यपेक्षाऽस्य तस्मादेनं परंविदुः॥ निष्किञ्चनस्य साध्यस्य परत्रेष्टस्य साधने। अयमात्मभरन्यासः प्रपत्तिरिति चोच्यते॥ प्रायो गुणवतामेष कृतः सर्वत्र देहिनाम्। सर्वेषां साधयत्येव तांस्तथानर्थानभीप्सितान्॥ अनन्तज्ञानशक्त्यादिकल्याणगुणसागरे। परे ब्रह्मणि लक्ष्मीशे मुख्योयं सर्वसिद्धिकृत्॥ प्रशासितुरशेषाणामात्मनां परमात्मनः। नहि प्रसादनं विष्णोरन्यदात्मार्पणादृते॥" इति।

एवं श्रीसनकादिनारदानुगैराद्याचार्य्यैः श्रीनिम्बार्कमहामुनिभिः पञ्चपदीमहामन्त्रव्याख्यामुखेनात्मन्यासस्वरूपं रहस्यमीमांसायां रहस्यषोडशीश्लोकैरेवमाह—

( अथ रहस्य षोडशी लिख्यते )

श्रीमद्धंसं प्रणम्याथ कुमारान्नारदं मुनिम्॥ ब्रह्मविद्यां प्रवक्ष्यामि गुह्याद्गुह्यां सनातनी॥१॥ यां प्राप्य साधवः पूर्वे भगवद्भावमागताः॥ तस्मात्सर्वात्मभावेन धारणीया मुमुक्षुभिः॥ २॥ अकारार्थो हरिः प्रोक्तो मध्यमार्थो गुरुस्तथा॥ मकारार्थो जीवजातो विज्ञेयो वैष्णवोत्तमैः॥३॥ तथैव क्लर्थः कृष्णः स्याद्द्वितीयो गमयिता गुरुः॥ चरमार्थश्च क्षेत्रज्ञ इति शास्त्रानुशासनम्॥ ४॥ यद्वदागमबीजस्य सामान्या गतिरीरिता॥ तथैव बीजमन्त्रस्य ज्ञातव्या हि मुमुक्षुभिः॥ ५॥ मंगलायाप्यखंडार्थः शास्त्रारम्भे प्रकीर्त्यते॥ भगवन्नामधेयत्वात् प्रोच्यते च महर्षिभिः॥ ६॥ ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः॥ ओमित्येकाक्षरं ब्रह्मेत्युक्तिरर्जुनसारथेः॥ ७॥ चरमार्थं हविः कृत्वा मध्यमं चार्पणं तथा॥ प्रथमार्थे च ब्रह्माग्नावात्मानं जुहुयाद्बुधः॥ ८॥ हुत्वात्मानं बुधश्चैवं कृतकृत्योऽभिजायते॥ भवबन्धविनिर्मुक्तो ब्रह्मसामुज्यमाप्नुयात्॥ ९॥ एतस्यैव हि मन्त्रस्य शिष्टं विवरणं स्मृतम्॥ तेषु क्लर्थश्च व्याख्यातो द्वाभ्यां पद्भ्यां बुधोत्तमैः॥ १०॥ सलक्षणप्रमाणाभ्यां स्वरूपगुण

शक्तिभिः एकेन चरमार्थस्य गुरुणा योग उच्यते ॥ ११ ॥ चरमेणात्म होमस्य विधानं परिकीर्तितम् ॥ अनेनैवास्य शास्त्रस्य ह्यनुबन्धाः प्रकीर्तिता ॥ १२ ॥ गुर्वर्थं यस्य प्राणादि यौवनं धनमेव च ॥ आत्माऽऽत्मीयेषु निर्विण्णोऽधिकारी सम्यगीर्यते ॥ १३ ॥ विषयः प्रथमार्थः स्यात्तद्भावापत्तिलक्षणम् ॥ श्रेयः प्रयोजनं ज्ञेयं ज्ञाप्यज्ञापकयोगता ॥ १४ ॥ आदौ गुरौ न्यसेत्प्राणानात्मानं धनमेव च ॥ सर्वसंबन्धविषयं कृत्वा सेवेत नित्यशः ॥ १५ ॥ देहेन्द्रियमनःप्राणैर्मायां हित्वा समाहितः ॥ भृत्यवत्पुत्रवत्सेवेत्प्रियवन्मित्रवत्तथा ॥ १६ ॥ या देया गुरुणा विद्या भवसम्बन्धध्वंसिनी ॥ तां तदुक्तेन मार्गेण धारयेद्वैष्णवोत्तमः ॥ १७ ॥ इति गुह्यतमं मन्त्ररहस्यं साधुसत्तमैः ॥ ऋते शिष्यान्न देयं चानुष्ठेयं गुरुयोगतः ॥ १८ ॥ इति श्रीभगवन्निम्बादित्यविरचिता रहस्यमीमांसायां रहस्यषोडशी समाप्ता ॥ सैषा रहस्यषोडशी श्रीसुन्दरभट्टपादैर्विस्तृतभाष्येण विवेचितं रहस्यमीमांसायामिति ।

एवंच सांग प्रपत्तिप्रकाशकत्वादेव पञ्चपदीमहामन्त्रस्य गोपालतापिन्यां विस्तरेण विवेचनं माहात्म्यकथनंचेत्यपि बोध्यम् ॥४॥

मू० ओंकारेणान्तरितं ये जपन्ति गोविन्दस्य पञ्चपदं मनुम्। तेषामसौ दर्शयेदात्मरूपं तस्मान्मुमुक्षुरभ्यसेन्नित्यशान्त्यै ॥५॥ एतस्मादन्ये पञ्चपदादभूवन् गोविन्दस्य मनवो मानवानां । दशार्णाद्यास्तेऽपि संक्रन्दनाद्यैरभ्यस्यन्ते भूतिकामैर्यथावत् ॥६॥ यदेतस्य स्वरूपार्थं वाचा वेदयन्ति ॥७॥ ते पप्रच्छुः ॥८॥ तदुहोवाच ब्रह्मसवनं चरतो मे ध्यातः स्तुतः परमेश्वरः परार्द्धान्ते सोऽबुध्यत गोपवेशो मे पुरुषः

पुरस्तादाविर्बभूव ॥९॥ ततः प्रणतो मयानुकूलेन हृदा मह्यमष्टादशार्णस्वरूपं सृष्टये दत्त्वाऽन्तर्हितः पुनः सिसृक्षतो मे प्रादुरभूत् ॥ १० ॥ तेष्वक्षरेषु भविष्यज्जगद्रूपं प्रकाशयन् ॥११॥ तदिह कादापो लात्पृथिवी ईतोऽग्निर्बिन्दोरिन्दुस्तत्संपातादर्क इति क्लींकारादसृजम् ॥ १२ ॥ कृष्णादाकाशं खाद्वायु-रित्युत्तरात्सुरभिर्विद्याः प्रादुरकार्षं तदुत्तरात्स्त्रीपुंसा-दि चेदं सकलमिति, सकलमिति ॥ १३ ॥

इति गोपालतापिन्युपनिषदि तृतीयोपनिषत् ।

अथ । येन मंत्रेण शरणं गन्तव्यं तन्मन्त्रमाह "ओंकारेणान्त-रितमि" ति । ओंकारेण प्रणवेनान्तरितमन्तरालीकृतमित्यर्थः । तथाच स्वरूपतोव्याख्यानतश्च प्रणवात्मकम् । "क्लीमोंकारयोरेकत्वं वदन्ति ब्रह्म-वादिभिः इत्युत्तरतापिन्यां वक्ष्यमाणश्रुतेः क्लींकारस्य प्रणवपर्यायत्वात् पञ्चपदीमन्त्रस्य क्लींकारव्याख्यानरूपत्वेन प्रणवव्याख्यानरूपत्वाच्च । अतएवोक्तं रहस्यषोडश्यां "यद्वदागमबीजस्य सामान्यागतिरीरिता । तथैव बीजमंत्रस्य ज्ञातव्या हि मुमुक्षुभिः" इति । "एतस्यैव हि मन्त्रस्य शिष्टं विवरणं मतम्" इति चेति । 'असौ'-निरुक्तलक्षणः परमादेवोनिरुक्तलक्षण-गोपरूपः 'प्रयत्नात्' । जीवसाधननिरपेक्षः शरणार्तैकवल्लभः 'प्रकाशयेत्' दर्शयेत् 'आत्मरूपम्' निरतिशयसच्चिदानन्दघनं वरणैकलभ्यं 'सत्पुण्ड-रीकनयनमि' त्यादिविशेषितम् । 'नित्यशान्त्यै' भगवद्भावाप्तये-'अभ्यसेत्' निरन्तरमनुसंदध्यात् ॥ जपो हि मानसो विवक्षितः 'जप मानसेचेति-स्मृतेः।' स च 'पञ्चांगं जपन्' इत्यत्रोक्तलक्षणः तथा शरणभावनाप्रधानः शब्दजन्यः भगवन्मयश्चित्तसन्नतिरूपः । इति । अथवा ओंकारेणान्त-रितमित्यस्य प्रणवपुटितमित्यर्थः तत्तर्वमाधु ॥ ५ ॥

पंचपदीमंत्रस्यैव सर्वगोविन्दमंत्रमूलत्वमाह । 'एतस्मादेवे' ति मनवो मंत्राः मानवानां चतुर्वर्गेप्सूनाम् । 'दशार्णाद्याः' "गोपीजनवल्लभायस्वाहा" इत्याद्याः 'ते' दशार्णाद्याः भूतिकामैः चतुर्वर्गकामैः संक्रंदनाद्यैः इन्द्राद्यैः । इत्यादि । शेषंस्पष्टम् । एतेन–त्रिवर्गप्रदत्वलक्षणमपिदेवत्वमुपपादितमिति । "यदेतस्य स्वरूपार्थं वाचा वेदयन्ति" इति यत्यस्मात् एते दशार्णाद्याः एतस्य पंचपदीमंत्रस्यैव स्वरूपार्थं स्वरूपघटकमर्थं वाचा स्वस्वशब्देन वेदयंति अंशतो ज्ञापयन्ति तस्मात्ते मंत्रा एतदंशा इत्यर्थः ॥ ६ ॥

अथ– मुख्यतात्पर्य्येण विशेषतः सर्वविज्ञानप्रतिज्ञामुपपादयितुमवान्तरतात्पर्य्येणैतन्मंत्रस्य परमोपादेयत्वमुपपादयितुं तद्द्वारेण निरुक्तमात्मन्यासं स्तोतुं प्रक्रमते–ते पप्रच्छुरिति । ते सनकाद्याः पप्रच्छु–पंचपदीविद्याया संप्रदायं तस्य निखिलजगदात्मत्वभगवदात्मकत्वादि पप्रच्छुः । पंचपदीविद्यायाः निखिलजगदात्मत्वे भगवदात्मकत्वे च साधिते भगवद्विज्ञानेन सर्वविज्ञानप्रतिज्ञा निरुक्तमाण्डूक्यन्यायेनार्थत एव समुपपादिता भवति । वस्तुमात्रस्य भगवदात्मकत्वे पर्य्यवसानादिति । उत्तरमाह "ब्रह्मसवनं मे चरतः" इत्यादि । ब्रह्मसवन ब्रह्मयज्ञः । स्वस्य सर्वस्य च ब्रह्मात्मकत्वभावनम्, चरतः, कुर्वतः "ब्रह्मसदनम्" इतिपाठे तु ब्रह्मणः स्वस्य गृहम् स्वोद्भवस्थानं विराड्पुरुषनाभिकमलरूपम् 'चरतः'इतस्ततःस्वकारणनिश्चयार्थं परिभ्रमतः । "ध्यातः" पूर्वसंस्कारेण चिन्तितः स्तुतः परमेश्वरः यस्मात्पर ईश्वरो नास्ति तथा विधः । परार्धान्ते ब्रह्मप्रलयकालस्य परार्धस्यान्ते । 'सः' सर्ववेदप्रसिद्धः परमेश्वरः 'का' द्धयत प्रत्नोमह्यं निजस्वरूपदर्शनोन्मुखो जातः । ततःपरागतिः निरुक्तरसानन्दरूपः 'पुरुषः' "पुरुषान्न परं किंचित्सा" तिशयानन्दघेन इति श्रुत्युक्तलक्षणः परमपुरुषः । अत एव निर्ग्रकटाजातः ॥ ततः, पुरुषाकारः । मे' मम 'पुरस्तात्' अग्रे 'आविर्' मया प्रणतः प्रकर्षेण नतः तदनन्तरं अनुकूलेन तदा प्रणिहितेन मन

प्रणतिविषयीकृतः, स इति शेषः । स मह्यं मामुद्दिश्य । अष्टादशार्णस्व-रूपं पंचपदंमन्त्रम् । 'सृष्टये' जगत्सर्गाय दत्त्वा अन्तर्हितः अगोचरो बभूव पुनः सिसृक्षतः स्रष्टुमिच्छतो मे प्रादुरभूत् इत्यादि । तदेतत्सर्वमुक्तं ब्रह्मसंहितायां पंचमाध्याये "ईश्वरः परमः कृष्णः" इत्यारभ्य "विधें वि-धेहि त्वमथो जगन्ति ।" इत्यन्तेन । यथा कतिपयश्लोकानन्तरं पठ्यन्ते–

"तत्र ब्रह्मा भवद्भूयश्चतुर्वेदी चतुर्मुखः । स जातो भगव-च्छक्त्या तत्कालं किल चोदितः ॥ सिसृक्षायां मतिं चक्रे पूर्वसंस्कारसंस्कृताम् । ददर्श केवलं ध्वान्तं नान्यत्किमपि सर्वतः ॥ उवाच पुरतस्तस्मै तस्य दिव्या सरस्वती । कामकृष्णाय गोविन्दगोपीजन इत्यपि॥ वल्लभाय प्रियावह्नेर्मंत्रंते दास्यति प्रियम् । तपस्त्वं तप एतेन तव सिद्धिर्भविष्यति ॥ अथ तेपे स सुचिरं प्रीणन् गोविन्दमव्ययम् । श्वेतद्वीपप-तिं कृष्णं गोलोकस्थं परात्परम् ॥ प्रकृत्या गुणरूपिण्या रूपिण्या पर्युपासितम् । सहस्रदलसम्पन्ने कोटिकिंजल्क-बृंहिते ॥ भूमिश्चिन्तामणिस्तत्र कर्णिकारे महासने । समा-सीनं चिदानन्दं ज्योतिरूपं सनातनम् ॥ शब्दब्रह्ममयं वेणुं वादयन्तं मुखाम्बुजे । विलासिनीगणवृतं स्वैस्वैरंशैरभिष्टुतम् ॥इति

"तेष्वक्षरेष्वतिसू० पंचपदमंत्रावयवाक्षरेषु भविष्यत् भाव्यं तदा-नीमपि सूक्ष्मतयाऽऽकाशादौ सूक्ष्मशब्दस्येव सूक्ष्मशक्तिरूपेणावस्थितं जगत् प्राकाशयम् । तत्कृपयाऽदर्शयम् । अहमितिशेषः । अदर्शयत् इति पाठेतु स पुरुषः दर्शयामासेत्यन्वयार्थः अत्राधिकं यद्वक्तव्यं तदुपपा-दि० "कृष्णं तं विप्राः, इतिमंत्रव्याख्योपक्रमे" इति न पुनरुच्यते । 'इह' आयवाक्तरेभ्यः सृष्टिमाह । 'तदिहे'त्यादि । तत्, ततः तदनन्तरं रात्पृथिवी 'कात्' ककारात स्वबीजात् आपो जलानि । 'लात्' लका-ककारादिविंद्वन्तसम्पू..." ईकारात् अग्निः, 'विन्दो' श्चन्द्रः । 'तत्संघातात्' अर्कः सूर्यः । इति 'क्लीकारात्' जलादिसूर्या-

न्तमसृजम् । शेषमाह 'कृष्णादिति । 'कृष्णात्' कृष्णायेतिपदात् तद्घट-कीभूतात्कृष्णाद्वा आकाशम् । 'खात्' गोविन्दायेतिपदात् तद् घटकीभूतात् गोविन्दाद्वा वायुः। 'उत्तरात्' गोपीजनवल्लभायेतिपदात् सुरभिःविद्याश्चचतु-र्दश । तदुत्तरात्, स्वाहेति पदात् स्त्रीपुंसादिभेदंस्थावरजगमात्मकं सर्वम् आवृतिस्तृतीयोपनिषत्समात्यर्था ॥ इयं व्यष्टिसृष्टिस्तेनाकाशादीनां समष्टिसृष्टौ परमात्मजन्यत्वेऽप्यत्र स्वसृष्टत्वकथनं तस्य न विरुद्धयते। उप-बृंहितानि चैतानि वाक्यानि गौतमीयतंत्रे एतत्मंत्रकल्पे "क्लींकाराद-सृजद्विश्वमिति प्राह श्रुतेः शिरः" इत्यादिनेति । "श्रुतेः शिरः" गोपाल-तापिन्युपनिषदित्यर्थः।"क्लींकारादसृजम्" इत्यादेरत्रैव श्रुतेरिति बोध्यम् ।

**मू० एतस्यैव यजनेन चन्द्रध्वजो गतमोहमात्मानं वेद, इत्योंकारान्तरालिकं मनुमावर्तयेत्, संगरहितो-ऽभ्यानयेत् ॥१॥ तद्विष्णोः परमं पदं सदा पश्य-न्ति सूरयः दिवीव चक्षुराततम् ॥२॥ तस्मादेनं नित्यमभ्यसेन्नित्यमभ्यसेदिति ॥३॥४॥**

इति गोपालतापिन्युपषदि चतुर्थोपनिषत् ।

एतस्य मंत्रस्य महदुपास्यत्वे भूतार्थवादमाह 'एतस्यैवे' त्यादि । "चन्द्रध्वजः" चन्द्रशेखरः शिवः । अन्यो वा कश्चिदर्षिः। वस्तुतस्तु शिव एव, वर्तमानकालप्रयोगात् गतमोहं ध्वस्ताविद्यातमस्कं सन्तं आत्मानं परमात्मानं गोविन्दं वेद जानाति इतिहेतोः परमात्मविविदिषुः । ओं कारालिकमोंकारमयं ओंकारयुक्तमोंकारपुटितं वा मनुं पंचपदम् । 'आवर्तयेत्' निरन्तरमभ्यसेत् । 'संगरहितः' ऐहिकामुष्मिककामना-रहितः । ततः-'अभ्यानयेत्' परमात्मानं प्रत्यक्षमानयेत् । चन्द्रध्वज-वत् । इत्यर्थः । यत्र परमात्मानं प्रत्यक्षं प्राप्नुयात् । तत्पदं पूर्वं 'यत्तस्य पीठमि' त्यादिना 'एतद्विष्णोःपरमं पदमि' त्यन्तेन विशेषितंपदं स्वप्रकाश-चिद्घनत्वेन विशेषयति 'तद्विष्णोरि' ति ॥ विष्णोः निखिलकार्य्यकारण-

व्यापनशीलस्य परमकारणस्य श्रीकृष्णस्य तत् 'यत्तस्य पीठं' 'एतद्विष्णोः परमंपदमि'त्यत्र समुदाहृतसर्वश्रुतिप्रसिद्धं परमंपदम् पीठधामत्रिपाद्विभूतिपरमव्योमाद्यपरपर्य्यायम्। 'सूरयः' विद्वांसो नित्यमुक्ताःशेषगरुडाद्याः स्वयंवेदाश्च सदा कालानवच्छेदेन पश्यन्ति साक्षात्कुर्वन्ति। तत्किं प्रकाशान्तरसाहित्येन पश्यन्ति नेत्याह 'दिवीव चक्षुराततम्' इति। यथा दिवि आकाशे आततम् आसमन्तात् ततं विस्तृतं व्याप्तं सर्वतो व्याप्तं सूर्यप्रकाशं चक्षुः प्रकाशान्तरनिरपेक्षतयैव पश्यति वस्तुन एवस्वप्रकाशत्वात् तथा परमपदमपि प्रकाशान्तरासाहित्येनैव मुक्ताः पश्यन्तीत्यर्थ,। एतेन परमपदस्य स्वप्रकाशत्वमुक्तं भवति। नारायणाथर्वशिरस्यपि 'वैकुण्ठभुवनं गमिष्यति' इतिवैकुण्ठमुपक्रम्य 'तदिदं पुण्डरीकं विज्ञानघनमि'त्यनेन तस्य विज्ञानघनत्वकथनेन स्वप्रकाशत्वमुक्तम्॥ एवमेव च गीतायांपंचदशे "न तद्भासयते सूर्य्यो न शशाङ्को न पावकः। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इत्यनेन प्रकाशान्तराभास्यत्वकथनमुखेन स्वलोकस्य स्वप्रकाश चैतन्यघनत्वमुक्तम्। भागवतेऽपि दशमेऽष्टाविंशतितमाध्याये "दर्शयामास लोकं स्वं गोपानां तमसः परम्। सत्यंज्ञानमनन्तंयो ब्रह्मज्योतिः सनातनम्। ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः। ददृशुर्ब्रह्मणोलोकं यत्राक्रूरोध्यागात्पुरा" इत्यत्र तमःपरत्वं सत्यज्ञानानन्दघनत्वंच तस्योक्तम्। क्वचिदचेतनत्वकथनंतुधर्मभूतज्ञानाभावाभिप्रायेण। तथोपपादितं चिद्घनं जयति लोकमूर्धनीतिपद्यव्याख्याने श्रुत्यन्तसुरद्रुमे पुरुषोत्तमप्रसादचरणैः। विस्तृतंतुयुग्मतत्वसमीक्षायां द्रष्टव्यम्। तदेतदिहापि विस्तृतमुक्तमेव 'एतद्विष्णोरित्यस्यव्याख्यायामितिसंक्षेपः'॥ "तस्मादेतन्नित्यमावर्तयेदिति" यस्मादेष पञ्चपदीमंत्रः सर्वजगन्निदानविग्रहः प्रणवार्थस्वरूपः सर्वविमोहात्ययेन परमात्मस्वरूपदर्शकः परमधामप्रापकश्च तस्मादेनं पञ्चपदं मनुं 'नित्यम्' अयोगव्यवच्छेदेन अवश्यमेव परममुमुक्षुः "आवर्तयेत्, शब्दतोऽर्थतश्च निरन्तरमनुसंदध्यादितिवाक्यार्थः। अभ्यासश्चतुर्थोपनिषत्समाप्त्यर्थः। उक्तार्थदार्ढ्यार्थश्चेति। इति पूर्वतापिन्यांचतुर्थोऽध्यायः॥ ४॥

(अथ पञ्चमोऽध्यायः)–तदाहुरेके यस्य प्रथमपदाद्भूमिर्द्वितीयपदाज्जलम्, तृतीयपदात्तेजः, चतुर्थपदाद्वायुः, चरमपदद्व्योमेति वैष्णवपञ्चव्यावृत्तिमयमन्त्रं कृष्णावभासकं कैवल्यस्यसृत्यै सततमावर्तयेदिति ॥१॥ तदत्र गाथाः। यस्य पूर्वपदाद्भूमिर्द्वितीयात्सलिलोद्भवः तृतीयात्तेज उद्भूतं चतुर्थाद्गन्धवाहनः पञ्चमादम्बरोत्पत्तिस्तमेवैकं समभ्यसेत्, चन्द्रध्वजोऽगमद्विष्णोः परमं पदमव्ययम्॥२॥ततो विशुद्धं विमलं विशोकमशेषलोभादि निरस्तसङ्गम्। यत्तत्पदं पञ्चपदं तदेव स वासुदेवो न यतोऽन्यदस्ति ॥३॥

अथ भगवद्रूपमंत्रान्वयवतः हिरण्यगर्भकृतव्यष्टिसृष्टिरुक्ता। 'तदिह कादाप' इत्यादिना। तेनावन्मात्रेणासमष्टिव्यो मवाय्वादीनांमंत्रात्मकत्वस्य तन्मुखेन भगवदात्मकत्वस्य च सिद्धिः तथाच तैकविज्ञानेन सर्वविज्ञानप्रतिज्ञासमर्थनं सूपपन्नमिति तेषामपिव्योमादीनांमंत्रतःसृष्टिमाह-'तदाहुरेके' इति। एके वेदशाखिन इत्यर्थः। पञ्चव्याहृतिमयमिति पञ्चपदमयमित्यर्थः। कृष्णावभासकं निरुक्तलक्षणकृष्णसाक्षात्कारजनकम्। "तेषामसौ दर्शयेदात्मरूपमि" तिपूर्वमुक्तः। कैवल्यस्य सृत्यै भगवद्भावापत्तिलक्षणपरममोक्षप्राप्तये इत्यर्थः। केवलस्य भावः कैवल्यं तच्च प्रकृतिप्राकृतादिरूपनिजस्वरूपाननुबन्धिवस्तुसम्बन्धनैरास्येन स्वरूपावस्थितिः। "मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थिति" रिति भागवते द्वितीयस्कन्धोक्तेः। सा च निरुक्तभगवद्भावापत्तिलक्षणमोक्षेऽपि संभवतीति न विरोधः। "सततमावर्तयेदि" ति सततमनवरतं आवर्तयेत् अनुसन्दध्यात् इत्यर्थः।

एतस्य शरणमंत्रत्वेन निरन्तरमेतन्मंत्रार्थभावनेन स्वस्य भगवदेकशरणत्व मनुसंन्दध्यादितिपर्य्यवसितार्थः ॥ तदेतन्मंत्रपाठेन द्रढ़यति 'तदत्र गाथा' इत्यादिस्पष्टार्थम् । एवमाकाशादीनां व्यष्टिसृष्टिः समष्टिसृष्टिश्च पञ्चपदी-मंत्रादिति दर्शिता । नच "यतो वा इमानि भूतानि जायन्ते" इत्यादि श्रुतौ सर्वत्र ब्रह्मणः सकाशात्सर्वसृष्ट्युक्तेः, मंत्रतःसृष्टिर्विप्रतिषिद्धेति शंकनीया, मंत्रतद्देवतयोरभेदात् । तथाच वक्ष्यति "यत्तत्पदं पंचपदं तदेव स वासुदेवो न यतोऽन्यदस्ति" इति । प्रणवस्यैव परिस्फुटं रूपंपञ्चपद-मित्युपपादितं पुरस्तात् । प्रणवस्य च सर्वजगद्बीजत्वं माण्डूक्येप्युक्तमि-त्यपि निरूपितं पुरस्तात्तस्मान्न कोऽपि विप्रतिषेध इति । अथ पञ्चपदी विद्यया श्रीकृष्णमाराधयतुः पूर्वम् "सोऽमृतो भवति" "ब्रह्म सम्पद्यते" मुमुक्षुः शरणंव्रजेत्, 'कैवल्यस्यसृत्यैसततमावर्तयेत् इत्यादिवाक्याभ्यासैर-पुनरावृत्तिलक्षणा' भगवद्भावाप्तिःफलत्वेन निरूपिता । इह च "चन्द्रध्वजो-ऽगमद्विष्णोः परमं पदव्ययम्" । इतिविष्णुपदप्राप्तिः फलमिति सूच्यते । एवंच महाविप्रतिषेधः लोकविशेषप्राप्तेः स्वर्गादिप्राप्तिवत्क्षयिष्णुत्वस्या-वश्यंभावेन मुख्यामृतत्वाभावात् । लोकविशेषस्य प्रकृतिविकाररूपत्वेन तत्प्राप्तेः 'ब्रह्म सम्पद्यते' इति निरुक्तब्रह्मभावाप्तिरूपत्वाभावाच्च । किञ्च यदि सर्वजगदुपादानं पञ्चपदात्मकमंत्र एव तर्हि "आत्मन आकाशः संभूतः" "यतो वा इमानि भूतानि जयन्ते" "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिश्रुतिविप्रतिषेधोदुःपरिहरः । तत्र ब्रह्मण एव कारणत्वावधारणात ॥ किच गोपीजनवल्लभविज्ञानेन पूर्वोक्तसर्वविज्ञान-प्रतिज्ञाहानिरपि । तद्व्यतिरिक्तस्य मन्त्रस्य धाम्नोऽपि स्वीकारादित्याह । "ततो-विशुद्धमि" त्यादि । विशुद्धमिति । अशुद्धिर्हि वृद्धिह्रासादिभावविकारेण भवति तद्रहितं शुद्धं विशेषतः शुद्धं विशुद्धम् कालानवच्छेदेन सर्वभावविकाररहितमप्राकृतत्वात् । "विमलम्" अविद्याऽस्मितारा-गद्वेषाभिनिवेशादिमलशून्यं चिद्घनत्वात् "विशोकमिति" शोकोहि अ-भीष्टविप्रयोगादिना भवति तद्रहितम्, आनन्दरूपत्वात् सर्वतः पूर्णत्वाच्च

'अशेषलोभादि' इति। शिष्यत इति शेषः न शेषः अशेषः, अशेषोलोभादि र्यत्र तथेत्यर्थः वासनारूपेणापि लोभो न विद्यते यत्रेतिभावः। लोभोहि अप्राप्तप्राप्तीच्छारूपः सच तत्र न संभवति तत्र सर्वस्य सर्वतःपरिपूर्णत्वेनाप्राप्तवस्त्वभावात्। 'निरस्तसंगमिति' संगाहि स्वार्थासक्तिः। सा च अहमेवं ममेदंरूपोऽहंकारममकारापरपर्याया। सच तत्र न संभवति तत्र सर्वेषां निरस्ताविद्यत्वेन स्वाभाविकरूपेणैव तत्र सर्वेषां सर्ववस्तुषु स्वात्मपर्य्यन्तेषु भगवदीयत्वभगवदात्मकत्वभगवदेकभाग्यत्वादीनां निरन्तरं स्फुरणात्। 'यत्तत्पदमिति' ।यत्तत्पदं "यत्तस्य पीठं" "एतद्विष्णोः परमं पदम्" "तद्विष्णोः परमं पदम्" "परमं पदमव्ययमि"त्यादिना-निरूपितंभगवदेकशरणैर्गम्यं गोलोकब्रह्मपुरादिपदव्यपदेश्यं परमंपदं तदेव पञ्चपदमपि। तदुभयमपि वासुदेवः परः परमात्मा श्रीकृष्ण एव तत्र हेतुः "यतोऽन्यदास्त" इति। यस्मादन्यत्किंचिदपि नास्ति। अथवा यत्-तादृशं पदं तत्पञ्चपदं तदेव स वासुदेवः।यः "वासुदेवोवा इदमग्र आसीत्" इत्यादिश्रुतिप्रसिद्धः परब्रह्माख्यः स श्रीकृष्ण एव नान्यः। वासुदेवस्य विशेषपरिचयं सहेतुकमाह"। "न यतोऽन्यदस्ति" इति यस्माद्वासुदेवात् अन्यत्किंचिदपि नास्ति "सदेव सोम्येदमग्रमासीत्" एकमेवाद्वितीयमिति" श्रुतेः।एतेन "सच्चिदानन्दरूपाय" "कृष्णो वै परमंदैवतमि" त्यादिना प्रस्तुतंयत्कृष्णाख्यं परमं ब्रह्म तदेव वासुदेवपदेऽयूनात्रोक्तं नतु व्यूह-रूपमित्यप्युक्तंभवति ॥ तथाच मन्त्रपरमपदयोर्जगद्विलक्षणविशुद्धभग-वत्स्वरूपत्वेनैक्यात्पूर्वोक्ताः सर्वे विप्रतिषेधाः परिहृताः। इति।

एतेन गोपीजनवल्लभविज्ञानेन सर्वविज्ञानप्रतिज्ञायामुपपत्तिरप्युप-संहृताः। तथाच। अत्राभेदः "प्रकाशाश्रयवद्वा तेजस्त्वात्" इतिसूत्रसिद्धः स्वाभाविकभिन्नाभिन्नत्वलक्षणः तादात्म्यापरपर्य्यायः। अतएवाभयनिर्वा-हः। अन्यथा "यत्तस्य पीठमि"त्यादिना एकतरस्य धामत्वकथनमन्यतरस्य धा-मित्वकथनं विरुद्ध्येतेत्यपि वोध्यम्। एवंचमंत्रकार्यतया सर्वजगतो मंत्रात्मकत्वं प्रतिपाद्य ततो मंत्रस्य धाम्नश्च भगवदात्मकत्वप्रतिपादने सर्वस्यापि कार्य्या-

कार्य्ययोः भगवदात्मकत्वमर्थत एव प्रतिपादितं भवतीत्यर्थत एवैक-विज्ञानेन सर्वविज्ञानप्रतिज्ञायामुपपत्तिः समुपसंहृता इत्यप्यनुसंधेयम्। ननुप्रधानमहदादीनामत्रभगवदात्मकत्वस्योपपादनाभावात्कथं सर्वविज्ञान प्रतिज्ञोपपत्तिनिर्व्वाह इतिचेन्न। कल्पविशेषे प्रधानादिमनन्तर्भाव्यैवाका-शादीनां सृष्टेः, तदानीं प्रधानादीनामस्फुटत्वादाकाशादीनांभगवदात्मक-त्वोपपादनेऽपि सर्वविज्ञानप्रतिज्ञानिर्व्वाहसंभवात्। अतएव छान्दोग्ये प्रधानादिवायुपर्य्यन्तानां सृष्टेरनुक्तत्वेऽपि सर्वविज्ञानप्रतिज्ञोपपादनम्। अतएवच तैत्तरीयेऽपि "आत्मन आकाशः सम्भूतः" इत्यादिना आका-शादिपंचानामेव सृष्टिरुक्ता। वस्तुतस्तु "वायुमब्दादविशेषविशेषाभ्या-मि" ति मार्गोपसंहारन्यायेन प्रधानादिदित्यन्तेषु कार्येषु यत्र यन्न श्रुतं तत्रोपनिषन्तरेषुश्रुतं तत्, उपसंहर्तव्यम्। एवंचात्र तापिन्यामश्रुतं यथा-योगमुपसंहर्तव्यम् ब्रह्मकार्य्यतया। अतएवोत्तरतापिन्याम् वक्ष्यति 'सहो-वाच तं हि वै पूर्वमेकमेवाद्वितीयं ब्रह्मासीत्। तस्मादव्यक्तमव्यक्त-मेवाक्षरम्। तस्मादक्षरात्महान्। महतो वै अहंकारः। तस्मादेवाहंकारा-त्पंच तन्मात्राणि तेभ्यो भूतानि तैरावृतमक्षरं भवति। अक्षरोऽहमोंकारो-हमजरोऽमरोऽभयोऽमृतो ब्रह्माऽभयं हि वै स मुक्तोऽहमस्म्यक्षरोऽह-मस्मि' इति। अस्यार्थस्तु 'स ह' नारायणो ब्रह्माणं प्रत्युवाच 'पूर्वं' स-र्वादिसृष्टेः पूर्वम्। 'एकमेवाद्वितीयं ब्रह्मासीत्' 'कृषिभू वाचकः शब्दोणश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते'। पापकर्षणो गोभूमिवेदविदितो गोपीजनाविद्याकलाप्रेरकस्तन्मायाचेति सकलपरं ब्रह्मैव तत्" इत्यादिपूर्वोक्तलक्षणं सूक्ष्मचिदचिच्छक्तिकं कृष्णाख्यं ब्रह्मैवासीत्। तस्मादव्यक्तमुत्पन्नं। यदेव त्रिगुणसाम्यावस्थापन्नं प्रधानमुच्यते। तदेव च क्वचिदक्षरशब्देनाप्युच्यते। तदाह 'अव्यक्तमेवाक्षरमिति' इदंच सुबा-लोस्फुटंनिरूपितम्'। 'ततो महत् ततत ऽहंकारः' इत्यादि तदेतद्विवेचिते-श्रीकाश्मीरिकेशवभट्टाचार्य्यपादैः "विपर्य्ययेण क्रमोऽत उपपद्यते" इति सूत्रव्याख्याने वेदान्तकौस्तुभप्रभायाम्। तदेतत्स्पष्टं निरूपयिष्य उत्तर-

तापिन्यामेतद्व्याख्याने । इति ॥ ३ ॥

तमेकं गोविन्दं सच्चिदानन्दविग्रहं पञ्चपदं वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोऽहं परमया स्तुत्या स्तोषयामि ॥४॥ ॐ नमो विश्वरूपाय विश्वस्थित्यन्तहेतवे । विश्वेश्वराय विश्वाय गोविन्दाय नमो नमः ॥५॥ नमो विज्ञानरूपाय परमानन्दरूपिणे । कृष्णाय गोपीनाथाय गोविन्दाय नमो नमः ॥६॥ नमः कमलनेत्राय नमः कमलमालिने । नमः कमलनाभाय कमलापतये नमः ॥७॥ वर्हापीडाभिरामाय रामायाकुंठमेधने । रमामानसहंसाय गोविन्दाय नमो नमः ॥८॥ कंसवंशविनाशाय केशिचाणूरघातिने । वृषभध्वजवन्द्याय पार्थसारथये नमः ॥९॥ वेणुवादनशीलाय गोपालायाहिमर्दने । कालिन्दीकूललोलाय लोलकुण्डलधारिणे ॥१०॥ वल्लवीनयनाम्भोजमालिने नृत्यशालिने । नमः प्रणतपालाय श्रीकृष्णाय नमो नमः॥११ नमः पापप्रणाशाय गोवर्द्धनधराय च । पूतनाजीवितान्ताय तृणावर्तासुहारिणे ॥१२॥ निष्कलाय विमोहाय शुद्धायाशुद्धवैरिणे । अद्वितीयाय महते श्रीकृष्णाय नमो नमः ॥१३॥ प्रसीद परमानन्द प्रसीद परमेश्वर । आधिव्याधिभुजङ्गेन दष्टं मामुद्धर प्रभो ॥१४॥ श्रीकृष्ण

रुक्मिणीकान्त गोपीजनमनोहर । संसारसागरे मग्नं मामुद्धर जगद्गुरो ॥१५॥ केशव क्लेशहरण नारायण जनार्दन । गोविन्द परमानन्द मां समुद्धर माधव ॥१६॥

अथ निरूपितं निखिलमप्यर्थं क्रमेण संकलयन् सुखबोधाय आह "तमेकमित्यादि" 'तमिति' निरुक्तलक्षणमित्यर्थः । तदेवाह– एकमिति । स्वरूपतो धर्म्मतश्च स्वतन्त्रसत्ताकद्वितीयतत्त्वशून्यम् । गोविन्दमिति । निरुक्तलक्षणगोभूमिवेदविदितम् । सच्चिदानन्दविग्रहमिति स्वरूपतो धर्म्मतश्च निर्भिन्ननिरतिशयसच्चिदानन्दात्मकपुरुषाकारमित्यर्थः तदुक्तं लक्ष्मीतंत्रे–"निर्दोषपूर्णगुणविग्रह आत्मतंत्रो निश्चेतनात्मकशरीरगुणैश्च हीनः । आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा" इति । विशेषतस्तूपपादितं स्वरूपनिरूपणप्रस्तावे "सत्पुण्डरीकनयनम्" इत्यत्रैवेति तत एवावधेयम् । "वृन्दावनसुरभूरुहतलासीनमिति ।" एतदप्युपपादितम् । 'सततं' निरन्तरं । 'मरुद्गणोहं' नित्यसिद्धदेवतागणोऽहम् 'परमया' सर्वाभ्यर्हितया स्तुत्या स्तोषयामीत्यर्थः । ब्रह्मादीनां नित्यसिद्धाधिदैविकशक्तिरूपेण भगवतः परमे पदे स्थितिः "आद्याः अव्यक्ता द्वादशमूर्तयः" इत्यारभ्य– "रुद्रेषु रौद्री ब्रह्मण्येषु ब्राह्मी" 'स्वपदे तिष्ठति' इत्यादिनोत्तरतापिन्यां वक्ष्यत इति तत्रैव विशेषतो मयापि विवेचयिष्यते इति तत एवावधेयम् ॥४॥

स्तुतिमाह—'ओं नम' इति "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ओमित्येतत्" "ओंतत्सदिति निर्देशो ब्रह्मणः त्रिविधः स्मृतः, इत्यादिश्रुतिस्मृत्युक्तदिशाऽखण्डशक्त्या, माण्डूक्योक्तदिशा "रोहिणीतनयो विश्व आकाराक्षरसंभव" इत्युत्तरतापिन्यां वक्ष्यमाणदिशा च खण्डशक्त्या प्रणवासाधारणवाच्यो यः श्रीकृष्णः तस्मै नमः आत्मात्मीयं सर्वं समर्पयामीत्यर्थः । ओमित्युक्तस्य प्रणवार्थस्य विशेष्यभूतस्य

विशेषणान्याह– 'विश्वरूपायेति' विश्वं जगत्रूपं समुद्रस्य तरंगवत् स्वरूपं यस्य, अथवा विश्वं जगत् तस्य रूपमात्मभूतं यत् तस्मै इत्यर्थः। अत्र "पुरुष एवेदं विश्वम्" पुरुष एवेद-सर्वं यद्भूतं यच्च भाव्यं "इत्यादिश्रुतयोऽनुसंधेयाः । एतेन जगदुपादानत्वमुक्तम् । विश्वस्थित्यन्तहेतवे' इत्यनेन–जगन्निमित्तत्वम् । विश्वेश्वरायेत्यनेन सर्वनियामकत्वम् । विश्वायेत्यस्य विश्वात्मने इत्यर्थः । तेन तस्यैव स्वात्मकशक्तिविस्तारेण सर्वरूपत्वमुक्तं । तथाचाभिन्ननिमित्तोपादानत्वमभिहितम् । तत्रप्रमाणमाह । गोविन्दयेति–"गोभूमिवेदविदित" इति गोविन्दपदार्थात् । निरुक्ताभिन्ननिमित्तोपादानतया वेदवेद्यायेतिसमग्रार्थः तथाच वेदा-एव तत्र प्रमाणमितिभावः । एतेन जन्माद्यस्य यतः' शास्त्रयोनित्वात्–इति सूत्रावनुग्रहीतौ । नमः शब्दाभ्यासः समर्पणरूपप्रपत्तिदाढ्यार्थः ।;

एवं—जगदभिन्ननिमित्तोपादानत्वरूपकार्य्यलक्षणपुरस्कारेण स्तुत्वा स्वरूपलक्षणपुरस्कारेण स्तौति– 'नमोविज्ञानरूपाये" ति चिद्रूपायेत्यर्थः । 'परमानन्दरूपिणे' निरतिशयानन्दरूपायेत्यर्थः । सद्रूपत्वमपि श्रुत्यन्तरादुपसंहर्तव्यम् । 'कृष्णायेति' अपहतपाप्मनेत्यर्थः– "पापकर्षण" इतिपूर्वं कृष्णपदार्थोक्तेः । 'गोपीनाथायेति' गोपी सर्वशक्तिसमष्टिरूपा–महालक्ष्मी श्रीरसाद्यपरपर्य्याया श्रीराधा । "इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिस्तवेशितुः । तवांशमात्रमित्येषा मनीषा मे प्रवर्तते ॥ मायाविभूतयोऽचिन्त्यास्तव मायार्भमानिनः । परेशस्य महाविष्णोस्ताः सर्वास्ते कलाकलाः ॥ आनन्दरूपिणी शक्तिस्त्वमीश्वरी न संशयः ।" 'वहिरंगैःप्रपंचस्य स्वांशैर्मायादिशक्तिभिः । अन्तरंगैस्तथा-नित्यविभूतैस्तैश्चिदादिभिः ॥ गोपनादुच्यते गोपी राधिका कृष्णवल्लभा सर्वलक्ष्मीस्वरूपा सा कृष्णाह्लादस्वरूपिणी ॥ अतः सा प्रोच्यते बिप्र-ह्लादिनी तु मनीषिभि । सा तु साक्षान्महालक्ष्मी कृष्णो नारायणः स्वयमिति ।" पद्मपुराणपातालखण्डोक्ते तस्याः नाथः पतिरित्यर्थः । तथा चैतेन–निरतिशयसच्चिदानन्दरूपत्वमपहतपाप्मत्वं स्वाभाविकसर्वशक्ति

समुपेतत्त्वमुक्तम् तेन समग्रं स्वरूपलक्षणमुक्तं भवति । तथात्वे पुनः प्रमाणमाह गोविन्दायेति । तादृशस्वरूपलक्षणलक्षितत्वेन वेदप्रतिपाद्यायेत्यर्थः । एवंच-"सत्यं ज्ञानमनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् ।" "एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विजिघित्सोऽपिपासः ।" "पराऽस्य शक्तिर्विविधैव श्रूयते । स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतयः समुपसंहृताः ॥

एवं -कार्य्यलक्षणस्वरूपलक्षणाभ्यां स्तुत्वा विग्रहधर्म्मपुरस्कारेण स्तौति-"नमः कमलनेत्रायेति । अनेन सर्वेन्द्रियसौन्दर्य्यं सूचितम् "नमः कमलमालिने इति" अनेन भूषणसौन्दर्य्यमुक्तम् । नमः कमल नाभायेति । अनेन सर्वांगसौन्दर्य्यमुक्तम् । 'कमलापतये नमः' इति अनेन सर्वकमनीयलक्ष्मीकमनीयत्वकथनेन निरतिशयसौन्दर्य्यादिगुणवत्त्वमुक्तम् ।

बर्हापीडाभिरामायेति-एतेन । वेशौज्ज्वल्यमुक्तम् । रामायेति "रमन्ते योगिनोऽनन्तेनित्यानन्देपरात्मनि इति रामपदेनासौ परब्रह्माभिधीयते" इत्युक्तलक्षणायेत्यर्थः । 'अकुण्ठमेधसे' अक्षीणज्ञानशक्तिस्वभावायेत्यर्थः । रमामानसहंसायेति निरतिशयसौन्दर्य्यमाधुर्य्यादिभिर्भगवन्तं रमयतीति रमा परमलक्ष्मी तस्याः मानसे राजहंसः निरन्तरं विहारशीलः 'तस्मै' इत्यर्थे सर्वप्रेमास्पदपरमलक्ष्मीप्रेमास्पदत्वकथनेन सर्वेषां परमप्रेमास्पदत्वमुक्तम् । तत्र प्रमाणमाह-"गोविन्दायेति" पूर्ववत् "आत्मैवेदमग्र आसीत्पुरुषविधः । स इममेवात्मानं द्वेधाऽपातयत्पतिश्च पत्नीचभवताम् "एषोऽन्तरादित्येहिरण्मयपुरुषोदृश्यते" "आनन्दरूपममृतं यद्विभाति ।" इत्यादिश्रुतयोऽनुसंधेया ।

सर्वापन्निवारकत्वमाह 'कंशवंशविनाशायेति केशिचाणूरघातिने' इति च । सर्वबंद्यत्वं भक्तवश्यत्वं चाह "वृषभध्वजवंद्यायेति पार्थसारथये" इतिच । विचित्रलीलत्वं सर्वदोषनाशकत्वं सर्वपालकत्वं चाह द्वाभ्याम् वेणुवादनशीलायेत्यादि । "बल्लवीनयनांभोजमालिने" इत्यादि

श्रीकृष्णायेति श्रिया सहितायेत्यर्थः। एतेन श्रियः कृष्णस्य चोभयोः निरुक्तसर्वलक्षणसबलत्वमुक्तम् ॥ इति ॥

ननु ब्रह्मणो जगदुपादाननिमित्तत्वे विकारित्वम् नियामकत्वे वैषम्यनैर्घृण्यादिदोषवत्त्वं गोपीजनादिभिः सह विविधलीलत्वे, असुरादिहन्तृत्वे च कामक्रोधादिदोषवत्वेनाशुद्धत्वम्। विग्रहविग्रहिधर्मधर्मिकृतभेदवत्त्वेसखंडत्वं। तथाच "निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम्" "निर्दोषपूर्णगुणविग्रह आत्मतंत्रो निश्चेतनात्मकशरीरगुणैश्च हीनः। आनंन्दमात्रकरपादमुखोदरादिःसर्वत्र च स्वगतभेदविवर्जितात्मा" इत्यादिश्रुतिस्मृतिव्याकोप इत्याह। 'निष्कलायेत्यादि-सर्वजगदभिन्ननिमित्तोपादनभूतोऽपि पुरुषाकारोऽपि निष्कलः निरवयवः। अतएव सर्वविक्रियारहित इत्यर्थः। विमोहायेति सर्वनियन्तापि विमोहःसर्वप्रकारकाज्ञानरहितः चिद्घनत्वात् ॥ अतएव तज्जन्यरागद्वेषरहिततया वैषम्यनैर्घृण्यरहितः। तदुक्तं सूत्रकृता "वैषम्यनघृण्ये न सापेक्षत्वात्तथाहि दर्शयति"। 'शुद्धायाशुद्धवैरिणे' इति-एतेन भगवतः नितरां शुद्धत्वमुक्तं तेन तादृशी लीला न कामक्रोधादिप्रयुक्ता येनाशुद्धत्वं स्यात्-भगवत अपहतपाप्मत्वात्। तदेतद्व्दर्यति गोपीदुर्वासःसंवादे इति तत्रैव द्रष्टव्यम्। विग्रहविग्रहधर्मधर्मिकृतं केवलं अन्योन्याभावलक्षणं भेदं निराकरोति। 'अद्वितीयायेति'। तथाच निरतिशयसच्चिदानन्दघनं स्वरूपमेव स्वतःसिद्धपुरुषाकारं, गुणशक्त्यादिकं तु तत्र जले शैत्यमाधुर्य्यादिवत्स्वभावतः स्वरूपापृथक्सिद्धमेव ज्ञेयमिति न सखंडताप्रसंगः पुरुषाकारत्वे प्राप्त परिच्छेदं वारयति। "महते इति। परिछिन्नत्वं चापि" स्वभावतः। स्वरूपमहिम्नैव सर्वसंभवात्। अत्रापि "गोविन्दाय" इतिपदपूर्वपद्यादनुवर्तनीयम्। तथाच' अत्रापि वेदा एव तादृशत्वे प्रमाणं तर्कागोचरत्वात्, इति पूर्ववद्बोध्यम्। तदुक्तं "कृत्स्नप्रसक्तिनिरवयवत्वशब्दव्याकोको वा इत्याशंक्य "श्रुतेस्तु शब्दमूलत्वात् ॥" आत्मनिचैर्वाविचित्रा हि"। इत्यादिनेति "युक्तं चैतत् उभयविधत्वस्य श्रुतिसिद्धत्वात्। तर्का-

गोचरत्वात् 'श्रुतेस्तु शब्दमूलत्वादिति पारमर्षसूत्राच्च। 'श्रीकृष्णायेति' श्रिया सहितायेत्यर्थः। तथाच विशिष्टे प्रतिपादितो धर्म्मो वाधविरहे विशेषणेऽप्युक्तो भवतीति न्यायेन श्रीदेव्यामपि तथात्वं वोध्यम्। "स इममेवात्मानं द्वधा पातयत्पतिश्च पत्नीचाभवतामि" तिश्रुतेः ( बृ. अ. १ ब्रा. ४ ) तयोरेकात्मत्वात्। तदेतदुपपादितंयुग्ममतत्त्वसमोक्षायाम्॥ जीवानां सर्वविधपुरुषार्थसिद्धौ भगवत्प्रसादस्यैवासाधारणहेतुत्वात्, अन्येषां तदुपरंजकत्वेनैव सार्थकत्वात्। प्रसादप्राप्तावपि दीनतापूर्वकशरणागतेरेव च मुख्यहेतुत्वात् दीनतापूर्वकं प्रसादं प्रार्थयति त्रिभिः लोकैः। प्रसीद इति परमानन्द इति निरतिशयानन्द इत्यर्थः "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्न विभेति-कुतश्चने" ति श्रुतेः प्रसीद परमेश्वर" एष सर्वेश्वर-इतिश्रुतेः 'सर्वेश्वरंगोपालमि' तिवक्ष्यमाणश्रुतेश्च स्पष्टं सर्वम्॥ १६॥

मू० अथैवं स्तुतिभिराराधयामि तथा यूयं पञ्चपदं जपन्तः श्रीकृष्णं ध्यायन्तः संसृतिं तरिष्यथेति होवाच हैरण्यः॥ १७॥

अथ यथा "अहमेवं स्तुतिभिराराधयामि तथा यूयं सनकाद्याः पञ्चपदमष्टादशाक्षरीं ब्रह्मविद्यां जपन्तः सर्वतोभावेनानुशीलयन्तः श्रीकृष्णं ध्यायन्तः संसृतिः संसारंतरिष्यथ। भगवद्भावं प्राप्स्यथ इति ह निर्णयमुखेन स्फुटं हैरण्यःहिरण्यगर्भः तान्प्रत्युवाचेत्यर्थः। अत्र कृष्णं ध्यायन्त इत्यनुक्त्वा यत्, श्रीकृष्णमित्युक्तं तेन कृष्णध्यानादौ श्रीसाहित्यस्य नित्यत्वंतदुपेक्षायां ध्यानादेः फलपर्य्यवसायित्वाभावश्च सूचितः। तयोर्नित्यसाहित्यंच–उदुम्वरसंहितावेदान्तरत्नमंजूषाश्रुत्यन्तसुरद्रुमोज्वल-नीलमणिसिद्धान्तरत्नादौ श्रीमदुदुम्वराचार्य्यपुरुषोत्तमाचार्य्यपुरुषोत्तम-प्रसादरूपगोस्वामिवलदेवविद्याभूषणाद्युद्धृते "राधया माधवो देवो माधवेन च राधिका विभ्राजते जनेषु। योऽनयोःपश्यतेभेदं न मुक्तःस्यात्स

संसृतेः ।" इतिऋक्परिशिष्टश्रुतौ । स्फुटमन्वयव्यतिरेकाभ्यामुक्तम् । वेदान्तमंजूषादितोऽपि परमप्राचीनौदुम्बरसंहितायां समुद्धृतऋक्परिशिष्टश्रुतौ "योऽनयोःपश्यतेभेदं न मुक्तः स्यात्ससंसृतेः" इत्यधिकंपठितं तेन तयोर्भेदर्शनस्य नितरां निषेधात् उपासनादौ तयोर्नित्यसाहित्यत्यागे दोषोऽपि श्रावितः । किंच-उदुम्बरसंहितायां चतुर्थव्रतप्रकरणे "वामांगसहिता देवो राधा वृन्दावनेश्वरी। योऽनयोः स्याद्व्यवच्छेदी ध्रुवं स तु वहिर्मुखः।" इतिकृष्णोपनिषद्वाक्येनापि तयोर्नित्यसाहित्यत्यागे दोष उक्तः। यद्यपि साम्प्रतमुपलभ्यमानकृष्णोपनिषदि' इदं वाक्यं नोपलभ्यते । तथापि तादृशवाक्यस्य कृष्णोपनिषत्स्थितत्वेन शिष्टैः समुद्धरणाच्छ्रुतित्वं मन्तव्यं यथा मन्वादिवाक्यत्वेन केषांचिद्वाक्यानांमिताक्षरादौ समुद्धृतानां साम्प्रतमुपलभ्यमानमनुस्मृतावनुपलभ्यमानत्वेऽपि स्मृतित्वं मन्यन्ते सर्वैरास्तिकैरिति ।

तयोःस्वरूपं नित्यसाहित्यंच विस्तृतंपुरुषार्थबोधिन्यामथर्वणोपनिषदि सप्तमे प्रपाठके-"गोकुलाख्ये माथुरमंडले वृन्दावनमध्ये सहस्रदलपद्ममध्ये कल्पतरोमूलेऽष्टदलकेशरे गोविन्दोऽपि श्यामः पीताम्बरधरो द्विभुजो मयूरपिच्छशिरो वेणुवेत्रहस्तो निर्गुणः सगुणो निराकारः साकारो निरीहः स चेष्टते विराजते, इति 'द्वे पार्श्वे चन्द्रावली राधिका चेति यस्या अंशे लक्ष्मोदुर्गादिका शक्तिः", इति । अत्र यद्यपि "राधिका चन्द्रावलीचे" ति वक्तव्यं श्रीराधायाः प्राधान्यात् तथापि 'यस्या अंशे' इत्यत्र यत्पदार्थेन सह राधायाः साक्षादन्वयाय तथोक्तमिति बोध्यम् । एवं तत्रैव नवमे प्रपाठकेऽपि "यत्र सुखं नास्ति दुःखं नास्ति जरा नास्ति मरणं नास्ति क्रोधाऽक्रोधं नास्ति यत्र पूर्णानन्दमयं किशोरवयसो नित्यमष्टकोणनिर्म्मितं योगपोठं तत्र माणिक्यसिंहासने स्थितः गोपीजनवल्लभो दिव्यव्रजवयोरूपो व्रजेन्द्रो व्रजवालैकवल्लभोऽनादिरादिः श्रुतिमुखो द्विभुजो दलिताञ्जनश्यामदेहो

नीलकुन्तलशिखण्डदलमंडितः। तीर्य्यक्कृतगुञ्जावतंसशशांक-
माणिक्यकिरीटशिरो गोरोचनतिलकैः कर्णयोर्मकरकुण्डले ना-
शाग्रे मुक्ताफलं सिन्दूरारुणाधरः तीर्य्यग्ग्रीवः श्रीवत्सकौस्तुभ-
धरो मुक्ताहारविभूषितो वन्यस्रग्वो मालतीदामभूषितश्चन्दन-
भूषितशरीरः करे कंकणकेयूरौकर्यां किंकिणीपीताम्बरधरो गंभीर-
नाभिः कमलहृतजानुयुगलः। पद्मवज्रादिचिह्नितपादतलस्तदं-
शांशेन कोटिमहाविष्णुरिति। एवं रूपं कृष्णचन्द्रं चिन्तयेन्नि-
त्यशः सुधीरिति। तस्य आद्या प्रकृती राधिका नित्या निर्गुणा
सर्वालंकारशोभिता प्रसन्नाऽशेषलावण्यसुन्दरी अस्मदादीनां
जन्मदात्री यस्या अंशा बहवो ब्रह्मविष्णुरुद्रादयो भवन्ति" इति।
एवंच एकमेवाखण्डमद्वयंनिरतिशयचिदानन्दघनं "रसो वै स" इतिश्रुति-
सिद्धरसरूपतत्त्वं रसरूपत्वादेव निजस्वरूपमहिम्नैवानादित एव युगम-
रूपेण स्थितम्। तदुक्तं बृहदारण्यके पुरुषविधब्राह्मणे "स नैव रेमे तस्मा-
देकादेकाकी न रमते स हैतावानास यथा स्त्रीपुमांसौ सम्परिष्वक्तौ स
इममेवात्मानं द्वेधापातयत् पतिश्च पत्नीचाभवतां तस्मादर्धबृगलमिवं
स्व इति स्माह याज्ञवल्क्यः तस्मादयमाकाशः स्त्रिया पूर्य्यते।" अत्र हि एक-
स्यैव परमात्मनोदम्पतीरूपत्वं पत्नीरहितस्यार्धबृगलत्वंतत्सहितस्य च पूर्ण-
त्वमुक्तम्। एवमेव श्रीपुरुषोत्तमगोस्वामिचरणैः खलालपनविध्वंसवादे"
श्रीवल्लभाचार्य्यपादैरपि-भागवते सुबोधिन्यां दशमे भ्रमरगीते "श्रीर्वधूः
साकमास्ते" इत्यस्य सुबोधिन्यामुक्तम्-"दम्पती रूपेण स्वरूपं विभज्यैव
श्रीकृष्णोभगवानवतीर्णइत्यवोचाम"। तथा 'व्रज एव कुमारश्च कुमारी-
चाभवद्धरिः। इतिचोक्तम्। राधोपनिषद्यपि "येयं राधा यश्च कृष्णो रसा-
ब्धि र्देहेनैकः क्रीडनार्थं ऽद्विधा ऽभूत्" इति। राधातापिन्यामपि "येयं
राधा यश्च कृष्णो रसाब्धिः। देहेनैकः क्रीडनार्थं द्विधा ऽभूत्" इति।
पुरुषार्थबो० "राधाकृष्णयोरेकमासनपद्म एका बुद्धिः एकं मनः एकंज्ञानं"
एक आत्मा एकं पदं एका कृतिः" इत्यादि। विष्णुपुराणेपराशरेण

प्युक्तं "नित्यैवैषा जगन्माता विष्णोःश्रीरनपायिनी यथासर्वगतोविष्णुस्त-थैवैषाद्विजोत्तम" इति। अत्र सर्वगतत्वं-सर्वेषांभगवद्धर्म्माणामुपलक्षणम्। तथाच-यथा भगवान्स्वरूपतोगुणतःस्वभावतोनिरस्तसमस्तदोषः, अशेष-कल्यणगुणशक्त्यादिस्वभावो निरतिशयानन्दविग्रहस्तथा, सापि, इति-बोध्यम्। तदुक्तम् प्रपन्नसुरतरुमंजर्य्यांश्रीसुन्दरभट्टाचार्य्यपादैः "बृंहयति बृंहति तस्माद्रुच्यते परंब्रह्म" इतिश्रुतेर्य्यथा स्वरूपेण गुणशक्त्यादिभिश्च सर्वपरिपूर्णो नित्यमुक्तजनतानुभूयमानो भगवान् श्रीपुरुषोत्तमः तथैषापीति बोध्यम्" इति "पत्नी तिवचनात्—वक्ष्यमाणानां भगवदीयगुणानामत्रातिदेशो ऽवगम्यते" इतिचेति एवमेव भगवता आद्याचार्य्येण निम्बभानुना वेदान्तकामधेनौ "स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम्। व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम्। अङ्गेतु वामे वृषभानुजां-मुदा विराजमानामनुरूपसौभगाम्। सखीसहस्रैः परिसेवितां सदा स्मरेम देवीं सकलेष्टकामदाम्" इति ब्रह्मलक्षणपरे निजमहावाक्ये 'अनुरूप-सौभगामि' त्यंशेन सूचितम्। तस्यायमर्थः पत्न्यांपत्यनुरूपसौभगत्वंहि-पतिनिष्ठनिखिलसमुचितसाधर्म्यविशिष्टत्वम्। एवंच वृषभानुजायां कृष्णनि ष्ठयावत्समुचितसाधर्म्यविशिष्टत्वमेव कृष्णानुरूपसौभगत्वम् तथाच यथा कृष्णो भगवान् स्वभावतोऽपास्तसमस्तदोषोऽशेषकल्याणगुणैक-राशिः व्यूहवैभवपुरुषावतारगुणावतारलीलावतारविलासावताराणांमंशी ब्रह्मशब्दार्थस्य परमकाष्ठापन्नः, परात्परः मुमुक्षुवरेण्यः निरतिशयानन्द-विग्रहः। तथा श्रीवृषभानुजापि स्वभावतोऽपास्तसमस्तदोषा निश्शेषक-ल्याणगुणशक्तिरस्वभावा व्यूहवैभवपुरुषावतारगुणावतारलीलावतार-विलासावताराणांपत्नीनामंशिनी ब्रह्मशब्दार्थस्य परमकाष्ठापन्ना परात्परा मुमुक्षुवरेण्या निरतिशयानन्दविग्रहा चेतितात्पर्य्यार्थः। एतेन यथा श्रीकृष्णस्वरूपमेव विष्णुसूक्तादि प्रतिपाद्यस्य विष्णोः परमकाष्ठा-पन्नं रूपमन्यानि रूपाणि तु तदंशभूतानि तथा श्रीराधिकास्वरूपमेव

श्रीसूक्तादिप्रतिपाद्यायाः श्रियः परमकाष्ठापन्नं स्वरूपम् परमश्रीपरमलक्ष्मीमहालक्ष्मीशब्दानां मुख्यं वाच्यंचेत्यपि सूचितम् । तदुक्तं पाद्मे पातालखण्डे वृन्दावनमाहात्म्ये वहिरंगैःप्रपंचस्य स्वांशैर्मायादिशक्तिभिः। अन्तरंगैस्तथानित्यविभूतैस्तौश्चिदादिभिः । गोपनादुच्यते गोपी राधिका कृष्णवल्लभा ।। सर्वलक्ष्मीस्वरूपा सा कृष्णाह्लादस्वरूपिणी । अतः सा प्रोच्यतेविप्रह्लादिनी तु मनीषिभिः ।। सा तु साक्षान्महालक्ष्मी कृष्णो नारायणः स्वयम्" इति। ब्रह्मवैवर्तेप्रकृतिखण्डेऽपि "वैष्णवास्तां महालक्ष्मीं परां राधां वदन्तिहि" इति। गौतमीतंत्रे "सर्वलक्ष्मी सर्वकान्तिः सर्वसंमोदिनी परा" इति। सिद्धान्तरत्ने वलदेव-विद्याभूषणैरप्युक्तं "श्रीकृष्णप्रेयस्यः सर्वलक्ष्म्य एव सा तु महालक्ष्मी' ' इति। इयमेव हि सर्वशक्तिसमष्टिरूपा अन्याश्च शक्तय एतस्या एवांशभूताः । तदुक्तं पाद्मे वृन्दावनमाहात्म्ये वृषभानुगेहंगतेन नारदेन "इच्छाशक्तिर्ज्ञानशक्तिःक्रियाशक्तिस्तवेशितुः, तवांशमात्रमित्येषा मनीषा मे प्रवर्तते । आनन्दरूपिणी शक्तिस्त्वमीश्वरी न संशयः" इत्यादि । इयमेव च भागवते दशमे श्रीरमालक्ष्म्यादिशब्दैः व्यपदिश्यते 'सततमुरसि सौम्य श्रीर्वधूः साकमास्ते' इत्यादौ व्यपदिश्यते। लक्ष्मीर्वाणीच तत्रैव जनिष्यते महामते। वृषभानोस्तु तनया राधाश्रीर्भविता किल। इदमेव 'धोद्राधासवितुःऽद्य'इत्यत्रराधःशब्देनोच्यते। इयमेवप्रेमानन्दाधिष्ठात्रीस्वरूपांद्विधाप्रत्याज्यश्रीपदवाच्यतया लक्ष्मीपदवाच्यतयाचभगवत्पार्श्वेऽवतिष्ठतेतदभिप्रायेणैव । "श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रे पार्श्वे" इतिअत्रश्रीपदवाच्या प्रेमानन्दाधिष्ठात्रीश्च राधैव लक्ष्मीपदवाच्या-ऐश्वर्याधिष्ठात्री। तदेवोक्तं स्कांदे वासुदेव-वैष्णवखण्डे-जयासुशीलाललितामुखानांवृन्दैःसखीनांसहराधयाच। समर्च्यमानंरमयाचभामाकलिन्दजाजाम्बवतीमुखानाम्" इत्यत्र। कदाचिच्चश्रीभूलीलारूपेणापिसाभवति इत्यपिज्ञेयम्। अनयोः दाम्पत्यंस्वरूपवदनादिसिद्धमेव उभयोर्नित्यसिद्धत्वात् एकात्मत्वाच्च। एकात्मत्वादेव नेश्वरद्वैतापत्तिः। अन्योऽन्यरमणेऽप्यात्मारामत्वाद्दिव्याघातश्च । तयोरेकात्मत्वे भवति श्रुतिः "[illegible]नास

यथा स्त्रीपुंमासौ सम्परिष्वक्तो स इममेवात्मानं द्वेधाऽपातयत् । पतिश्च पत्नीचाभवताम्'' इति । अतएव तयोर्मिलितस्यैव पूर्णतमत्वम् तथाच श्रुतिः "तस्मादयमाकाशः स्त्रिया पूर्य्यते" ( बृ० अ० १ । ४ ।। ) इति । एवंच

"इदं ह्यन्वोजसा सुतं राधानांपते । पिबात्वस्य गीर्वणः ।।"

"स्तोत्रं राधानांपते गीर्वाहो वीर यस्य ते विभूतिरस्तु सूनृता ।।"

( ऋ. सं. ३।३।१६ ) ( ऋ. स. १।२।२८ )

इत्याद्या ऋक्सामसंहितामंत्रा अप्यनुसंधेयाः ।

बहुवचनं तु श्रीलक्ष्मीवसुमतीदेवीतित्रितयाभिप्रायेणेति ।।

अधिकंतु मत्कृतयुगमतत्त्वसमीक्षायां द्रष्टव्यमिति तत्रैव हि पुराण-पञ्चरात्रादीनि मतमतान्तराणि च सर्वाणि संगृह्य प्रतिप्रश्नं समालोचतानि इत्यवधेयम् ।

## मू० अमु पञ्चपदं मनुमावर्तयेद्यः स यात्यनायासतः केवलं तत्पदं तत् ।। १८ ।।

अथ शरणागतेस्तद्व्यापाराणां ध्यानरसनभजनयजनादीनां च प्रकृतोपनिषद्ग्रान्तरतात्पर्य्यविषयाणां फलप्राप्त्युपसंहारमाह । "अमुं पञ्चपदमावर्तयेदि" त्यादि "यः निष्कामः सन् ऐहिकाऽमुष्मिकभावनारहितः केवलं भगवदेकपरायणोगुरूपसत्तिपूर्वकं 'अमुं' निरुक्तलक्षणं पञ्चपदं निरुक्तलक्षणपञ्चांगं शरणागतिध्यानरसनभजनोपासनपुरस्कारेणावर्तयेत् । "आवृत्तिरसकृदुपदेशात्" "ध्यानाच्च" इति-फलाध्यायस्थब्रह्मसूत्रोक्तप्रकारेण निरन्तरं भावयेत् 'स अनायासतः "ये तु सर्वाणि कर्म्माणि मयि सन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायन्त उपासते । तेषामहं समुद्धर्ता मृत्युसंसारसागरात् भवामि न चिरात्पार्थ मय्यावेसितचेतसामि'' ति गीतायां भगवदुक्तप्रकारेणायासं विनैव 'केवलं' प्रकृतिस्पर्शशून्यं 'तत्पदं' तस्य भगवतः पदं स्थानं निरुक्तलक्षणं त्रिपाद्विभूतिगोलोकपरमपदपरमव्योमविष्णुपदब्रह्मधामादिपदव्यपदेश्यं । तत् तेन शब्देन सर्ववेदप्रसिद्धं याति प्राप्नोतीत्यर्थः । तत्र प्रविश्य प्रकृतिस्पर्श-

शून्यसच्चित्प्रेमानन्दविग्रहःसन्निरतिशयप्रेम्णा निरतिशयप्रेमानन्दविग्रहं श्रीपरमपुरुषमनुशीलयन्ति । तदुक्तं "एतद्विष्णोः परमं पदं ये नित्योद्युक्तांस्तं यजन्ति न कामान् । तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदेव ।" पञ्चपदं पंचांगं जपन् द्यावाभूमी सूर्य्याचन्द्रमसौ साग्नी तद्रूपतया ब्रह्म सम्पद्यते, "सोऽमृतो भवति" इत्यादि । वक्ष्यति च "सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति" इत्यादि ॥ १८ ॥

मू० अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्व-
मर्षदिति ॥ १६ ॥

अथ यत्पदे यत्स्वरूपं प्राप्नुयात् तत्पदनिरूपणं तद्भगवतः स्वरूपनिरूपणंचैकेनोपसंहरति "अनेजत् 'एजृ कम्पने' धातुतःसतृप्रत्यये एजदिति निष्पन्नं तस्य नञा योगे अनेजदि" तिरूपं तथाच कम्पनादि-विक्रियारहितमित्यर्थः । इदन्तूपलक्षणमन्येषां भावविकाराणां तथाच सर्वभावविक्रियारहितमिति परमार्थः । तच्च" प्राकृतत्वेन संभवतीत्यप्राकृतं ज्ञानानन्दघनमित्युक्तं भवति । एकमिति स्वतन्त्रसत्ताकद्वितीयरहितमि-त्यर्थः । "मनसोजवीयः" मनसोप्यगम्यगतिमित्यर्थः । "यन्मनसा न मनुते । येनाहु र्मनो मतं तदेव ब्रह्म त्वं विद्धि" इत्यादि श्रुतेः । "नैनद्देवा आप्नु-वत्" । देवा ब्रह्मादय एनद्भगवत्स्वरूपं भगवत्पदं च नाप्नुवन् स्वबलेन न प्राप्नवान्तः । तदा अन्यः स्वबलेन प्राप्नुयात् इति तु शंकापि न कार्य्येत्य-भिप्रायः । पूर्वमिति पुराणमनादिसिद्धमित्यर्थः । 'एवंच' तद्भगवतो-भगवद्धाम्नश्चोभयोःसाधर्म्यम् एतावता दर्शितम् । यद्वाऽनेन मन्त्रेण तस्य परमात्मनस्तल्लोकस्य चाचिन्त्यमहिम्ना परस्परविरुद्धधर्माश्रयत्वं प्रसाध्यते यच्चापाततस्तर्काद्विरुद्धयते । तथाच "अनेजत्" सर्वप्रकारक-क्रियारहितमित्यर्थः । तत्र हेतुः–"एकम्" इति केवलम् प्रकृतिस्पर्शशून्य-मित्यर्थः "एके मुख्यान्यकेवला" इत्याभिधानिकोक्तेः । 'मनसोजवीयः' इति । तथापि मनसोप्यतिवेगेन सर्वत्र गमनस्वभावम् । तदेवोपपाद-

यति—"नैनद्देवा आप्नुवन् पूर्वमर्षदिति" देवाः अतितरांवेगवन्तोवा-य्वादयोऽपि "अर्षत्" आर्षन् 'पूर्वं' निरन्तरंधावन्तोऽपि नाप्नुवन् तम-नुगन्तुं न शक्नुवन्तः। 'इति' अतो हेतोः सर्वविक्रियारहितोऽप्यसौ तल्लोकश्चाचिन्त्यमहिम्ना 'गोपगोपीगवावीतम्' इत्यादिपूर्वोक्तसर्वविधलीला-लीलोपकरणैश्च सम्पन्न इति तात्पर्य्यार्थः। श्वेताश्वतरश्रुतिश्च—"अपा-णिपादो जवनो ग्रहीता पश्यत्यचक्षुःस शृणोत्यकर्णः" इत्याद्येवमेवोक्तम्।

पान्थास्तु कोटिशतवत्सरसम्प्रगम्यो वायोरथापिमनसो मुनि-पुङ्गवानाम्। सोऽप्यस्ति यत्प्रपदसीम्न्यविचिन्त्यतत्त्वे गोवि-न्दमादिपुरुषं तमहं भजामि॥ १॥ अंगानि यस्य सकले-न्दियवृत्तिमन्ति पश्यन्ति पान्ति कलयन्ति चिरं जगन्ति। आनन्दचिन्मयसमुज्वलविग्रहस्य गोविन्दमादिपुरुषं तमहं भजामि॥ २॥ इति।

ब्रह्मसंहितायां पंचमाध्याये इत्येतदेवोक्तम्। तथाच तर्कागोचर-त्वाद्वेदैकसमधिगम्यत्वाद्यथोक्तं सर्वमेव साधु इतिबोध्यम्॥

## मू० तस्मात्कृष्ण एव परमो देवस्तं ध्यायेत्तं रसयेत्तं भजेत्तं यजेदित्यों तत्सदित्युपनिषत् "भद्रं कर्णे-भिः" इतिशान्तिः।

इतिश्रीगोपालपूर्वतापिन्युपनिषत्समाप्तिः॥

पूर्व्वतापिन्युक्तार्थोपसंहारमाह "तस्मात्कृष्ण एव परमोदेवः" इति। तस्मादिति पंचम्यन्तेन तच्छब्देन—यस्मात्पूर्वोपपादितप्रकारेण कृष्ण एव निरतिशयसत्यचिदानन्दघनः स्वभावतोपास्ताविद्यादिसम-स्तदोषः निरतिशयानन्तस्वाभाविकयावदात्मभाविकल्याणगुणशक्तिर्नि-खिलजगदभिन्ननिमित्तोपादानभूतः शरणमात्रेण परममोक्षप्रदः व्यूह-वैभवपुरुषावतारगुणावतारलीलावतारविलासावताराणामवतारी प्रकृति कालादीनां नियन्ता सर्वदेवशरण्यश्च। तस्मात्कृष्ण एव परमः

स्वसमानाभ्यधिकशून्यो देव इत्युपसंहारवाक्यार्थः। अवान्तरचिन्तितानामुपसंहारमाह 'तं ध्यायेत्' इत्यादि। तस्यैवानन्यगाः संज्ञाः 'ओंतत्सदिति' इत्याह-'ओंतत्सदिति' एवंच कृष्ण एव कचिदोंकारवाच्यत्वेन निरूप्यते कचित् तच्छब्दवाच्यत्वेन सच्छब्दवाच्यत्वेन च तेन शब्दमात्रभेदो न वस्तुभेद इति तात्पर्य्यार्थः। इदमुपलक्षणं ब्रह्मपुरुषविष्णुशिवरुद्रनारायणादिशब्दानां तेन 'एको रुद्रो न द्वितीयाय तस्थुः'। 'न सन्न चासच्छिव एव केवलः' इत्यादिश्रुतिविरोधः परिहृतः। नचात्र रुद्रादिशब्दानां कृष्णवाचकत्वं कथं तेषां पंचवक्त्रे त्रिनयने प्रसिद्धत्वात् इति वाच्यम्। "आत्मैवेदमग्र आसीत् पुरुषविधः" 'स एकाकी नर एव' इत्यादिश्रुतिपर्य्यालोचनया सर्वथा पुरुषाकाररूपस्यैव मूलरूपत्वस्य वक्तुमुचितत्वात्। तच्च व्यवस्थापितं पूर्वम्। तदेतत्सुष्ठूपपादितं सिद्धान्तबिन्दौ युग्मतत्त्वसमीक्षायां च। मूलनारायणस्तु 'सत्पुण्डरीकनयनमित्युक्तलक्षणपुरुषाकार एवः' पुरुषविध 'नर एव' इत्यादिश्रुतेरित्युपपादितं पूर्वतापिन्यां 'सत्पुण्डरीकमि' त्यत्र तेन न कश्चिद्विरोधः। अन्यान्यश्रुतिविप्रतिषेधपरिहारस्तु। उत्तरतापिन्यां "पूर्वं नारायणः" इत्यस्य व्याख्यायां द्रष्टव्यम्॥ इति

मैथिलान्वयजातस्य मिथिलाभूमिवासिनः।
भगीरथस्य विप्रस्य कृतिः स्यात्कृष्णवल्लभा ॥१॥

इति श्रीगोपालतापिन्युपनिषद्व्याख्यायां वेदान्ततत्त्वसमीक्षाख्यायां
मिथिलामहीमण्डलान्तर्गतहाटीतप्पान्तर्गत-ढंगाहरिपुर-
ग्रामवासिमैथिलझोपाख्य श्रीभगीरथशर्मवि-
रचितायां पूर्वतापिनीविभागः
सम्पूर्णः श्रीकृष्णपदार्पितश्च।

---

## उत्तरतापिनी—

### अथ झोपाख्यमैथिलश्रीभगीरथशर्मविरचितायांगोपालतापिन्युपनिषद्व्याख्यायां वेदान्ततत्त्व समीक्षाख्याया—मुत्तरतापिनीविभागः प्रारभ्यते ।—

एवं पूर्वतापिन्यामुपक्रमोपसंहारोपपत्त्यभ्यासापूर्वताफलार्थवादरूपैर्निवन्धतात्पर्यनिर्णायकैर्लिंगैःस्वरूपतः कार्य्यतश्च परब्रह्मस्वरूपं संलक्ष्य तस्यैव परमदेवत्वं परममोक्षहेतुत्व सर्वविज्ञानहेतुभूताखंण्डैक विज्ञानविषयत्वं विश्वचक्रसंसारकत्वं च संक्षेपतो निर्णीय तत्तदंशनिरूपणमुखेन तत्तदुपनिषत्सु मुख्यतमानां श्रुतिवाक्यानां तत्तस्मिन्नर्थे समन्वयं निदिश्य तत्तदेवार्थं पुनर्व्यासरूपेण निरूपयितुमुत्तरतापिनी पठ्यते। एवंच पूर्वोत्तरतापिन्योः पूर्वापरीभावे प्रकृतसिद्धयनुकूलीभूतचिन्ताविषयत्वरूप उपोद्घात एव संगतिरित्यपि बोध्यम् ।

तत्र श्रीकृष्णलीलायां कामावभासः प्राकृतजनप्रसिद्धः । तस्य वास्तविकत्वे श्रीकृष्णस्यापहतपाप्मत्वंभज्येत । "काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा" इति गीतायां तस्यैवोक्तेः कामस्य महापाप्मरूपत्वात्, सति चैवं न परमदेवत्वादिसिद्धिः । परमतत्त्वस्य सर्वोपनिषत्सु 'एष आत्मा अपहतपाप्मा विजरोविमृत्युविजिघित्सोऽपिपासः' ( छा उ. अ ८ । ७ ) इत्यादिश्रुतिभिरपहतपाप्मत्वेन निरूपणात् । तस्मात्संक्षेपतो निरुक्तं निरूपयिष्यमाणं च सिद्धान्तमुपक्रमे "सर्वेश्वरं गोपालं कृष्णमि" तिपदत्रयेण स्मारयन्—आख्यायिकाविशेषेण निष्कामत्वनिरूपणमुखेनैव संक्षेपतो निरूपितमर्थं प्रकारान्तरेण परिशोधयति । अवान्तरसंगत्या जीवस्यापि विशुद्धत्वनित्यत्वभगवदंशत्वादिकं च परिशोधयति निरुक्तशरणागत्यादिनिर्धारणार्थम् । जीवानां तथात्वेन परोक्षतोऽपि निजस्वरूपज्ञानाभावेऽशुद्धत्वानित्यत्वभगवदनात्मक

त्वादि निश्चये विशुद्धत्वनित्यत्वभगवदात्मकत्वादिघटितमोक्षेच्छानुदयप्रसं-गात्। नहि स्वभावतोऽशुद्धो वा बद्धो वाऽनित्यो वा कदाचिदपि केनापि-साधनेन सर्वथा विशुद्धो वा मुक्तो वा नित्यो वा भवितुमर्हति। नहि-घटादिः चिद्रूपो वा मुक्तो वा नित्यो वा भवितुमर्हति। जीवानां स्वभावतो विशुद्धत्वमुक्तत्वनित्यत्वादि-निर्धारे तु उपाधितोऽशुद्धत्वबद्धत्वादिसत्त्वेऽपि शरणागत्यादिसाधनपरिपाके भगवदनुग्रहात्सर्वोपाधिविलये संभवति मोक्षादिरिति तदर्थं शरणागत्यादौ प्रवृत्तिरपि संभवति, इति संक्षेपतो जीवतत्त्वमपि परिशोधयतीति बोध्यम्।—

**सू० एकदा हि व्रजस्त्रियः सकामाः शर्वरीमुषित्वा सर्वेश्वरं गोपालं कृष्णमूचिरे उवाच ताः कृष्णः ॥१॥**

एकदेत्यादि "व्रजस्त्रिय" इति "सकामाः" इति। कामो हि इन्द्रियविशेषतर्पणेच्छारूपो रजोगुणकार्य्यविशेषः। "काम एष क्रोध एष रजोगुणसमुद्भव" इतिगीतायां श्रीमुखगानात्॥ तेन सहिताः सकामाः। एतत् तासां श्रीकृष्णे तादृशसकामत्वभ्रमे बीजमुक्तम्। यतस्ताः सकामा अतएव श्रीकृष्णेऽपि सकामत्वभ्रमवत्यो जाताः। यदि ताः स्वतो निष्कामा भवेयुः तदा श्रीकृष्णे तादृशं भ्रमं न कुर्य्युः॥ यथा श्रीदेवी तदन्तरंगसख्यो ललिताद्याश्च ता हि श्रीकृष्णवन्निष्कामाः, केवलं विशुद्धप्रेमवत्यः। ता हि यत्कुर्व्वन्ति तच्च श्रीकृष्णार्थमेव कुर्वन्ति। श्रीकृष्णसुखमेव तासां स्वसुखं नेन्द्रियसुखं स्वसुखम्। अतएव ताः श्रीकृष्णमपि तथात्वेनैव जानन्ति श्रीकृष्णो हि भगवान् यत्करोति तत्सर्वं भक्तसुखार्थमेव करोति नतु स्वार्थम्, इति विशुद्धप्रेमवतीनां तासां भावात्।

इदमत्र बोध्यम्। अवतारकालीनलीलायां सामान्यतस्त्रिविधा गोप्यः, नित्यसिद्धासाधनसिद्धासाधनारूढाभेदात्। तत्र श्रीस्तदंगसख्यश्च ललिताद्या नित्यसिद्धाः। तासां कदाचिदपि संसाराप्रवेशात्। श्रीकृष्णवत्तेषामपि तदन्तरंगतमशक्तिरूपाणां नित्यमुक्तत्वात्। साधनसिद्धाश्चित्र-

कलाद्याः। ता हि पूर्वं संसारिण्यःपश्चान्नित्यसिद्धगोपीभावसजातीयभावेन श्रीकृष्णप्रपत्त्या तत्प्रसादेन भर्जितनिखिलकर्म्मवासनाःगोपीभावं प्राप्तवत्यः। ता इमा द्विविधाः श्रियः परमसाम्यं प्राप्ताः—श्रियः कृष्णस्य च सेवैकसुखाः तदतिरिक्ताभिलाषरहिताः तयोरन्योन्यमिलनसुखेनैव नित्यतृप्ताः स्वरूपतो गुणतश्च श्रियःश्रीकृष्णस्य च नित्यनिरतिशयप्रेममय याथात्म्यज्ञानस्फुरणस्वभावाः।' अवतारकालेऽपि तयोनित्यनिरतिशयविशुद्धप्रेममयसेवार्थमवतीर्णाः–तावेव नित्यनिरतिशयप्रेम्णा सदाऽनुकूलयन्ति॥ तृतीयाश्च दण्डकारण्यादिवासिनोमुनयः, तत्तदवतारकालेषु भगवद्रूपगुणमोहिताःस्त्रियश्च. तत्र काश्चित्तादृशसाधनापरिपाके वरदानविशेषबलेनावतारकाले गोपीभावं प्राप्ताः। काश्चित् साधनामध्य एवावतारस्य जातत्वात् तत्रोत्पन्नाः। तत्रैव साधनापूर्तिः। श्रियः परमसाम्यप्राप्तिश्च भविष्यति। तेन तासां साधनाया अपूर्णत्वेन कर्म्मशेषस्य विद्यमानत्वात्-नित्यनिरतिशयभगवद्याथात्म्यज्ञानस्यनित्यनिरतिशयविशुद्धप्रेम्णश्च स्फुरणाभावात्-निरुक्तलक्षणसकामत्वादिकं भगवत्यपि तादृशभ्रमश्च ? चिरंतनकर्म्मशेषत्वादेव तासां पुरुषान्तरसम्बन्धोऽपि ? इति तासां श्रियः परमसाम्यरूपपरमफलसिद्ध्यर्थं श्रीवद्भगवद्याथात्म्यज्ञानं विशुद्धनिरतिशयप्रेमचाविर्भावनीये। तदर्थं च भगवति निजस्वरूपे-चान्यथाज्ञानमप्यपनेतव्यम्। इति तदर्थम्, स्वयं भगवान् तासां हृदि स्थितो ब्राह्मणभाजनव्याजेन दुर्व्वासः समीपं गन्तुं प्रेरितवात्। यद्यपि भगवान् स्वयंवा सिद्धसखीद्वारा वा ताः समुपदेष्टुं शक्नोति तथापि स्वमुखेन स्वैकपरायणसिद्धसखीद्वारा वा स्वमहिमवर्णने तासां तथा विश्वासो न भवेत्–यथा तटस्थेन केनचिन्मुनिना भगवतो-याथात्म्यवर्णने विश्वासो भवेदिति दुर्वासमोमुखेनैव स्वयाथात्म्य श्रावयितुं दुर्व्वाससः उपसत्त्यर्थमेव ताः प्रेरितवान्। एवंच सिद्धसखीनां दुर्वाससः समीपगमनं प्रश्नादि च चौरेषु मिलितो राजेव तासामेव शिक्षार्थं नतु स्वार्थम्। स्वेषांपूर्वमेवाविर्भूतस्वाभाविकज्ञानप्रेमवत्त्वादितिबोध्यम्।

यथाच–गोपीनामेवंभेदः तथोपपादितं विस्तरेण मया युग्मतत्त्वसमीक्षायाम् ब्रह्मवैवर्तपाद्मनारदीयादिपुराणपर्य्यालोचनयेति तत्रैवावधेयम्। "शर्वरीमुषित्वेति" भगवता सह विविधविलासेन समापयित्वेत्यर्थः। "सर्वेश्वरमिति" सर्वेषामीश्वराणामनीश्वराणांचेश्वरमित्यर्थः। ईश्वराणां ब्रह्मादीनां विश्वादितुरियान्तानां व्यूहवैभवादीनांच। अनीश्वराणां तद्व्यतिरिक्तानां सर्वेषां प्रकृतिकालादीनां च ईश्वरं स्वरूपतो गुणतः शक्तितः सर्वतोभावेनचांशित्वात् स्वायत्तस्थितिप्रवृत्तिकत्वादिभ्योनियामकोऽनन्यस्वामी चेति यावत्। "ओं कृष्णाय प्रद्युम्नायानिरुद्धाये"त्यारभ्य"जाग्रत्स्वप्नसुषुप्तितुरीयतुरीयातोऽन्तर्य्यामी गोपालः" इति वक्ष्यमाणश्रुतिभ्यः।

एतेन "सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः। एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्य्यामी एष योनिः प्रभवाप्ययौ हि भूतानाम्" इतिमाण्डुक्यश्रुतेः। 'ओंकारं सर्वेश्वरं द्वादशान्तम्" इति नृसिंहतापिनीश्रुतेश्च सर्वेश्वरत्वं प्राज्ञान्तपर्य्यवसाय्येव। ननु सर्वान्तिमकक्षापन्नब्रह्मस्वरूपपर्य्यवशायि प्राज्ञादूर्ध्वस्य "नान्तःप्रज्ञं न वहिःप्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम्। अदृष्टमव्यवहार्य्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारंप्रपंचोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः।" "ओंकारं तुरियमानन्दामृतरूपं षोडशान्ते" इत्यादिना सर्वेश्वराख्यात् प्राज्ञादूर्ध्वस्य तुरीयस्योभयत्रोपदेशात्, इति निरस्तम्। तत्र सर्वेश्वरशब्दस्य तदर्थस्य च प्राज्ञान्तमात्रपर्य्यसायित्वेऽप्यत्र तथात्वाभावात्। अपि तु विश्वतैजसप्राज्ञतुरीयेभ्योऽप्युत्कृष्टतुरीयातीतपर्य्यवशायित्वेनैव विवक्षितत्वात्। अत्रोपक्रमे वृत्तिभेदेन सर्वेश्वरगोपालकृष्णशब्देभ्य उक्तस्यैव तत्त्वस्य 'योऽसौ जाग्रत्स्वप्नसुषुप्तितुरीयतुरीयातीतोऽन्तर्य्यामी गोपालः" इत्यनेन तुरीयातीतत्वेन निरूपणात्। एवंच प्राज्ञपर्य्यवशायिसर्वेश्वरशब्दो न निरुक्ताशेषनियामकत्वलक्षणः। प्राज्ञे प्राज्ञादूर्ध्वस्य तुरी-

यस्य निरुक्तलक्षणनियामकत्वाभावात्। स्वभावतो निरवशेषैश्वर्य्यपूर्णत्वाभावाच्च। तस्मात्प्राज्ञस्य सर्वेश्वरत्वमापेक्षिकमेव, मुख्यं सर्वेश्वरत्वं तु तुरीयातीतस्यैव, तुरीयातीते सर्वसंभवात्। तत उर्ध्वस्य वस्तुत्त्वस्याभावात्। स्वभावतो निरवशेषैश्वर्य्यपरिपूर्णत्वाच्च स एव मुख्यः सर्वेश्वरः।

अत एव प्राज्ञादूर्ध्वतत्त्वमुपक्रम्य "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कर्म्मणा कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषांलोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकमिच्छन्तःप्रव्रजन्ति। एतद्ध स्म वै पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मा नायं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति" (बृ. अ. ४।२२) "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दवतं पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्॥ न तस्य कार्य्यं करणं च विद्यते तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वभाविको ज्ञानबलक्रियाच॥ न तस्य कश्चित्पतिरस्ति लोके नचेशिता नैव च तस्य लिंगम्। स कारणं कारणाधिपो नचास्य कश्चिज्जनिता नचाधिपः। श्वे० ६-७ इत्यादिना बृहदारण्यकश्वेताश्वतरादौ परमात्मनः सर्वेश्वरत्वमहेश्वरत्वादिकमाम्नायते। नात्र प्राज्ञस्य ततो निकृष्टस्य वा तैजसादेः परिग्रहसंभवः। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति"। इति वाक्यांशेन तस्यैव विज्ञेयत्वेनापदेशात्।

ननु सा जीवपरा श्रुतिः "योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" इत्यादिजीवलिंगादितिचेन्न। पूर्वं "स विश्वकृत् स हि सर्वस्य कर्त्ता" इत्यादिना विश्वकर्तृत्वादिरूपब्रह्मलिंगेन तदवतारात्, विश्वकर्तृत्वस्य समन्वयाध्याये ब्रह्मसाधारणलिङ्गत्वेन व्यवस्थापनात्,

इहापि "सर्वस्य वशी सर्वस्येशानः" इत्यादिना ब्रह्मलिंगकीर्तनात्। नहि सर्वेश्वरत्वसर्ववशित्वादिकं जीवे संभवति। नचास्माकमद्वैतवादिनां नये निजस्वरूपाविर्भावे जाते जीवेऽपि तत्संभवतीतिवाच्यम्। तथासति "यतो वा इमानि" इत्यादिवाक्यान्यपि जीवपराणि स्युः। तथाच "जन्माद्यस्य यतः" इत्यादिसूत्राणि निर्विषयाणि। किंचाग्रे "एष सेतुर्विधरण एषां-लोकानामसंभेदाय" इत्याद्यपि श्रूयते, सेतुवाक्यानि सर्वोपनिषत्सु ब्रह्म-पराण्येव पठ्यंते। "य आत्मा स सेतुर्विधृतिः" "यः सेतुरीजानाम्:" "अमृतस्यैष सेतु:" अत्र सेतुवाक्यानां ब्रह्मपरत्वादत्रापि ब्रह्मपरमेव। सर्वत्र सेतुवाक्यस्य जीवपरत्वे "परमतःसेतून्मानमित्यादिसूत्राणि निर्विषयाणि-स्युः "प्राणेषु, इत्यादि तु अन्तर्यामित्वात्" "स आत्मा स विज्ञेय" इत्यादिनोक्तस्य प्राज्ञातीतस्यैव विज्ञेयत्वाच्च। श्वेताश्वतरेऽपि न प्राज्ञ-प्रकरणसंभवः। "न तत्समश्चाभ्यधिकश्च दृश्यते"॥ "नचेशिता नैव च तस्य लिंगम्" "न तस्य कश्चिज्जनिता नचाधिपः" "एको देवः सर्वभूतेषु गूढ़-सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इत्यादिना तस्यैव सर्वान्तिमत्वेन निरूपणात्। तस्मादूर्ध्वं वस्तुतत्त्वसद्भावस्य पुनः पुनः प्रतिषेधाच्च। यच्चोक्तमीश्वर-सर्वेश्वरत्वादिशब्दस्ये-शितव्यादिपदार्थरूपान्यसापेक्षत्वात् तन्न पर-ब्रह्मणः स्वाभाविको धर्म्म इति तदप्ययुक्तम्। ईशितव्यानां सर्वेषां प्राकृता-प्राकृततत्त्वानां "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल-क्रियाच" इत्यादिश्रुत्युक्तस्वाभाविकस्वात्मकशक्तिविक्षेपरूपत्वेन स्वात्म-कत्वात् तदीशितृत्वस्यान्यानपेक्षत्वात्। अत्राप्यन्ते "एको देवः" इत्यादिमंत्रेणैवोपसंहारेणैकवाक्यताऽवगमाच्च। तस्मात्सर्वेश्वरत्वमहेश्वर-त्वादिकं न सर्वान्तिमतत्त्वपर्य्यवशायि। इतिनिरर्गलवाक्यशात्रम्॥ इति।

"गोपालमि" ति। "यो गोपाञ्जीवानात्मत्वेनासृष्टिपर्य्यन्तमालाति ध्यां तत्सद्गोपालो भवति।" इतिवक्ष्यमाणश्रुत्युक्तलक्षणम्। "कृष्णमि" ति-"कृषभूवाचकःशब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परंब्रह्म कृष्ण

इत्यभिधीयते" "सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।" इत्यादि श्रुतिभ्यां सखंडाखण्डव्युत्पत्त्या निरुक्तव्याकरणसखण्डव्युत्पत्त्या च लक्षितस्वरूपम्, इत्यर्थः। एतावता पूर्वतापिनीनिरुक्तः प्रायः समग्र-एवार्थोऽत्रोपक्रमे स्मारितः, वक्ष्यमाणप्रकारेण विषयपरिशोधार्थम् । अपि चैतेनावतारलीलायामपि परब्रह्म परिपूर्णतममेव प्रकटीभूतम् न त्वं शकलादिनियमनेनावतारान्तरवदित्यप्युक्तं भवति । अतएव–'एतेचांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्' इतिभागवते "रामादिमूर्तिषु कलानियमेन तिष्ठन्नानानावतारमकरोद्भुवनेषु किन्तु । कृष्णः स्वयं समभवत्परमः पुमान्यो गोविन्दमादिपुरुषं तमहं भजामि॥" इतिब्रह्म-संहितायाम् पंचमाध्यये "यतः कृष्णावतारेण भगभेदाः पृथक् पृथक् । दर्शिताः पूर्णरूपेण तस्मात्सम्पूर्ण उच्यते" इतिसात्त्वततंत्रे चोक्तानि । अत्रापि वक्ष्यति "अवताराणां मध्ये" इत्यादिनेत्यपिबोध्यम् ॥ १ ॥

मू० अनु कस्मै ब्राह्मणाय भक्ष्यं दातव्यं भवति दुर्वाससेति ॥२॥ कथं यास्यामोऽतीर्त्वा जलं यमुनायाः यतः श्रेयो भविष्यति ॥३॥ कृष्णेति ब्रह्मचारीत्युक्त्वा मार्गं वो दास्यति ॥४॥ यं मां स्मृत्वा अगाधा गाधा भवति, यं मां स्मृत्वा अपूतः पूतो भवति, यं मां स्मृत्वा अव्रती व्रती भवति, यं मां स्मृत्वा सकामो निष्कामो भवति, यं मां स्मृत्वा--अश्रोत्रियः श्रोत्रियो भवति ॥५॥ श्रुत्वा तद्वाक्यं हि वै रौद्रं स्मृत्वा तद्वाक्येन तीर्त्वा तत्सौर्यां हि वै गत्वाश्रमं पुण्यतमं हि नत्वा मुनिं श्रेष्ठतमं हि वै रौद्र-

श्चेति ॥६॥ दत्त्वास्मै ब्राह्मणाय क्षीरमयं घृतमय-मिष्टतमं हि वै मिष्टतमं हि वै स तु भुक्त्वा उच्छिष्टमन्नं च हित्वाऽशिषं प्रयोज्यान्वाज्ञां त्वदात् ॥७॥ कथं यास्यामो तीर्त्वा सौर्य्याम् ॥८॥ सहोवाच मुनिं दुर्वाशिनं मां स्मृत्वा वो दास्यतीति मार्गम् ॥९॥ तासां मध्ये श्रेष्ठा गान्धर्वी ह्युवाच तं हि ताभिरेवं विचार्य ॥१०॥ कथं कृष्णो ब्रह्मचारी कथं दुर्वाशनो मुनिः ॥११॥ तां हि मुख्यां विधाय पूर्वमनुकृत्वा तूष्णीमासुः ॥१२॥

"अनु कस्मै" इति । कस्मै ब्राह्मणाय भक्ष्यमनुदातव्यमित्यन्वयः । "छन्दसि परेऽपि व्यवहिताश्चेति" सूत्रात् । अनु अनन्तरं यस्मै ब्राह्मणाय भक्ष्यदानेनास्मत्कामाः पूर्णा भवेयुस्तं ब्राह्मणं ब्रूहीत्यर्थः । "दूर्वासेति" दुर्वाससेइत्यर्थः । सन्धिश्छान्दसः । दुर्वासा हि श्रीशंकरांशः । अतो भगवत्तत्त्वं यथावज्जानाति, इति व्रजोपान्त्यवासित्वात्परमप्रसिद्धतया च एतासां नितरां विश्वासविषयश्चेत्येतासां संशयं यथावच्छेत्स्यतीति तत्र प्रेषणे भगवतो निगूढाशयः । शेषंस्पुटम् ॥२॥ "कृष्णेति ब्रह्मचारी" ति कृष्णेति सन्धिश्छान्दसः । शेषंस्फुटम् ।

तासामिति । तासां सर्वेषां व्रजस्त्रीणामित्यर्थः । मध्य इत्यनेनान्वयः । श्रेष्ठेति मूलभूतेत्यर्थः । स्वरूपत आवेशतश्च सर्वासां व्रजस्त्रीणामंशिनीति यावत् । "गान्धर्वी" ति इयंहि "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति वाजसनेयपुरुषसूक्ताध्याये श्रीपदेनोक्ता भगवतः सर्वातिशायिनी सर्वस्त्रीबीजभूता–'सवै नैव रेमे' स द्वितीयमैच्छत् । स हैतावानास यथा स्त्रीपुमांसौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधा पातयत्ततः पतिश्च

पत्नीचाभवताम्'' इतिबृहदारण्यकपुरुषविधब्राह्मणोक्तलक्षणा श्रीसूक्तस्य परमार्थभूता च साक्षाच्छ्रीदेवी वृषभानुनन्दिनी । ''लक्ष्मीर्वाणी च तत्रैव जनिष्येते महामते। वृषभानोस्तु तनया राधा श्रीर्भविता किल ॥ इति ब्रह्मवैवर्तपुराणोक्तेः । तदेतत्सुष्ठूपपादितं मया युग्मतत्त्वसमीक्षाया-मिहापि लेशतः पूर्वतापिन्यामित्यनुध्येयम् ॥

किंच 'गान्धर्वी' इति तस्या एव नाम ''गान्धर्वी राधिका रम्या'' इति राधातापिन्यां तन्नामत्वेन परिगणनात् । नारदीयपुराणे युग्मसहस्र-नाम्निच ''गन्धर्वा सुरतज्ञा च गोविन्दप्राणसंगमा'' इत्यत्रापि तन्नाम-त्वेन परिगणनाच्च । गन्धर्व इति—

''प्रतद्वोचेदमृतं नु विद्वान्गन्धर्वो धाम विभृतं गुहा सत् ।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुः पिता सत् ॥'' (शु य. व. सं. अ. ३२ । ७ ॥ तै. ना. उ. ३ )

इति शुक्लयजुःसंहितायां पुरुषसूक्तोत्तराध्यायपठितमंत्रवर्णात् पुरुषसूक्तप्रतिपाद्यपरमात्मन एव त्रिपाद्विभूतिमतो जगद्बीजपुरुषस्य सर्वेकलानां निरतिशयाधारत्वात् ''रूपमिति गन्धर्वाः''*इति शतपथश्रुतेः प्राकृतगन्धर्वगोचरसातिशयरूपस्य निरतिशयाधारत्वाच्च मुख्यतो नाम-धेयान्तरम् । एवंच गन्धर्व एव गान्धर्वः स परमात्मैव तस्य पत्नीत्वात्ता-दृशसर्वगुणपूर्णत्वाच्च ''श्रीश्च ते लक्ष्मीश्च पत्न्यौ'' इति पुरुषसूक्ताध्याया-न्तिममंत्रप्रसिद्धा श्रीदेव्येव गान्धर्वी गन्धर्वा च सैव वृषभानुसुता सर्वगोप-बालावरिष्ठाऽत्र गान्धर्वीपदेन विवक्षितेत्यपि बोध्यम् । (*श ब्रा. १०।५।२०।२

एवंविचार्य्येति । वक्ष्यमाणलक्षणं तासामाशयं निर्धार्य, तासामसिद्धानांगोपीनां श्रीकृष्णेऽन्यथासन्देहोऽवश्यमपाकरणीय इति निर्धार्य्य दुर्वाससं पृष्टवतीति परमार्थः । अत्र श्रीदेव्या वृष-भानुनन्दिन्याः प्रश्नादिकरणं न स्वार्थमपि त्वसिद्धगोपीजनशिक्षार्थमिति न विस्मर्तव्यम् ॥ १० ॥ कथंकृष्णोब्रह्मचारीत्यादि । तां हि मुख्यांविधा-येत्यादि चं स्पष्टार्थम् ॥ ११ ॥ १२ ॥

मू० शब्दवानाकाशः शब्दाकाशाभ्यां भिन्नस्तस्मिन्नाकाशे तिष्ठति स ह्याकाशस्तं न वेद स ह्यात्माहं कथं भोक्ता भवामि ॥१३॥ स्पर्शवान्वायुः स्पर्शवायुभ्यां भिन्नस्तस्मिन्वायौ तिष्ठति वायुर्न वेद तं हि स ह्यात्माहं कथं भोक्ता भवामि ॥१४॥ रूपवदिदं तेजो, रूपाग्निभ्यां भिन्नस्तस्मिन्नग्नौ तिष्ठति, अग्निर्न वेद तं स ह्यात्माहं कथं भोक्ता भवामि ॥१५॥ रसवत्यापो रसादभ्यो भिन्नः तास्वप्सु तिष्ठति तं ह्यापो न विदुः स ह्यात्माहं कथं भोक्ता भवामि ॥१६॥ गन्धवतीयं भूमिर्गन्धभूमिभ्यां भिन्नस्तस्यां भूमौ तिष्ठति भूमिर्न वेद। तं हि स ह्यात्माहं कथं भोक्ता भवामि ॥१७॥

पूर्वतापिन्यां जीवानां मोक्षसिद्धये शरणागमनध्यानरसनभजनादिकमुपदिष्टम्। परंच तदर्थं जीवानां प्रवृत्तिस्तदैव स्यात् यदा स्वेषु मोक्षार्हत्वं ते जानीयुः। मोक्षो हि भगवत्परमसाम्यलक्षणा भगवद्भावापत्तिः। 'निरंजनः परमंसाम्यमुपैति:' "ब्रह्म ब्रह्म वेद ब्रह्मैव भवति" 'ब्रह्म सम्पद्यते ब्रह्म सम्पद्यते" इत्यादिश्रुतिभ्यः। "मद्भावायोपपद्यते" 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः सर्गेऽपि नोपजायंते प्रलये न व्यथन्ति च।' गी० १४॥ इत्यादिस्मृतिभ्यश्चेत्युक्तं पूर्वतापिन्याम्। स च भगवत्परमसाम्यलक्षणोमोक्षो जीवानां तदैव संभवति यदि जीवाअपि स्वभावतः शुद्धा नित्याःभगवदंशाश्च स्युः। विपरीतत्वे तु तादृशमोक्षस्य संभावनापि न संभवति। स्वरूपयोग्यत्वाभावात्। अतोऽसंभावनाविपरीतभावनादिनिवृत्यर्थं स्वभावतः शुद्धत्वनित्यत्वभगवदात्मकत्व भगवदंशत्वादिरूपाणां भगवज्जीवसम्बन्धबोधकानां सर्वेषां निरूपणेन

जीवतत्त्वं प्रथमतः परिशोधयति। "शब्दवानाकाशः" इत्यादिना। एतेनैव-च तन्नियम्यत्वादिनाऽऽकाशादीनां भगवदधीनस्थितिप्रवृत्तिकत्वलक्षणं भगवदात्मकत्वमपि निरूपयति। तेन सर्वस्यापि चेतनाचेतनात्मकप्रपंचस्य भगवदायत्तस्थितिप्रवृत्तिकत्वनिरूपणात् निरुक्तसर्वेश्वरता, अंशतो निरुक्त-सर्वविज्ञानप्रतिज्ञाचोपपादिता भवति। दुर्वसा अत्र जीवमात्राणां प्रति-निधिः छान्दोग्ये सद्विद्यायां श्वेतुकेतुवत्-इतिध्येयम्।

'शब्दवानाकाशः'। इति। भूताकाश इत्यर्थः। आकाशशब्दोहि भूताकाशे ब्रह्मणि च प्रयुज्यते "आत्मन आकाशः संभूतः" इत्यादिश्रुतेः। ब्रह्मणिच "आकाशाद्ध्येव खल्विमानि भूतानि जायते"। "आकाशो ह वै नामरूपयोनिर्वहिता"। "आकाशस्तल्लिंगात्। (वृ० १।१।२२॥) आकाशोऽर्थान्तरत्वादिव्यपदेशात्"। (ब्र०१-३-४१॥) इत्यादिश्रुतिसूत्रेभ्यः अत्र ब्रह्मरूपाकाशव्यावृत्त्यर्थमाकाशे शब्दवानिति विशेषितम्। यद्वा "शब्दाकाशाभ्यां भिन्नः" इत्यादिना शब्दादिविशेषवैलक्षण्यबोधनार्थं शब्दा द्यपि विशेषितम्। "तस्मिन्नाकाशे" भूताकाशे "शब्दाकाशाभ्यांभिन्नः" विलक्षणः। शब्दाकाशादिगतदोषासंस्पृष्टस्वभावः शब्दाकाशयोरन्तर्यामी सर्वविक्रियारहितस्वभाव आकाशाख्यश्चेतनविशेषस्तिष्ठति यं तं 'आकाशः' शब्दवानाकाशस्तयोरभिमानी देवता वा "न वेद स एव सर्वविक्रियारहित स्वभावः सर्वान्तर्यामी अतएव निरतिशयचैतन्यस्वभावः सर्वशक्तिः 'आत्मा' परमात्मा, 'अहम्' तदंशत्वात्तदात्मकोऽहमित्यर्थः। एतावता—

: पृथिव्यां तिष्ठन्०' "य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष आत्माऽन्तर्याम्यमृतः" यो रेतसि तिष्ठन् 'एष त आत्माऽन्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतोमन्ताऽविज्ञातो विज्ञाता नान्योऽतो ऽस्ति द्रष्टा नान्योऽतोऽस्ति विज्ञाता एष आत्माऽन्तर्याम्यमृतोऽतोऽन्यदार्तम्।" (वृ० ३।७) इतिबृहदारण्योक्तप्रकारेण "यस्याकाशः शरीरं य आ-



काशमन्तरे संचरन्यमाकाशो न वेद। यस्य मृत्युः शरीरं यो मृत्युन्तरे

संचरन्यं मृत्युर्न वेद । स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इतिसुबालोपनिषद्रीत्या च सर्वान्तर्य्यामित्वेनात्मत्वेनामृतत्वाद्दृष्टत्वानन्यद्दृष्टत्वादिधर्मपुरस्कारेण सर्वभूतान्तरात्मत्वेनापहतपाप्मत्वेन दिव्यदेवत्वेनैकत्वाद्वितीयत्वादिभिश्च परमदेवस्य तस्य परमत्वं परिशोधितम् । तथाच निर्लेपत्वापहतपाप्मत्वादिलक्षणस्वभावाऽपास्तसमस्तदोषत्वं, सर्वान्तर्य्यामित्वेन सर्वशक्तिमत्त्वं, अदृष्टत्वसर्वदृष्टृत्वामतमत्वमन्तृत्वाविज्ञातत्वविज्ञातृत्वादिनाऽनन्यदृष्टत्वादिलक्षणमसाधारणनित्यनिरतिशयस्वभाविककल्याणगुणाकरत्वं च व्यवस्थापिता नि भवंति । यद्यप्यत्राकाशादिपर्य्यायपंचकमेवोक्तं तथापि अन्येषामपि पर्य्यायाणामुपलक्षणमेतदिति । "उपसंहारोऽर्थाभेदा" दिति गुणोपसंहारसूत्रोक्तन्यायेन अर्थैक्यादन्तर्य्यामिब्राह्मणोक्तनिखिलानामपि धर्म्मणामुपसंहारः परिहारश्च हेयधर्माणां सर्वेषां सूचित इति न न्यूनतेतिबोध्यम् ।

एवं परमात्मनि स्वभावताऽपास्तसमस्तदोषत्वं स्वाभाविकनिखिलगुणशक्तिमत्त्वंच निरूप्य (जीवानामपि) "द्वौ सुपर्णौ भवतो ब्रह्मणोंशभूतस्तथेतरो भोक्ता भवति" । इति वक्ष्यमाणप्रकारेण "अंशो ह्येष परमात्मनः "ममैवांशो जीवलोके जीवभूतः सनातनः" "अंशो नानाव्यपदेशात्" इत्यादि श्रुतिस्मृतिसूत्रेभ्यो जीवानामपि ब्रह्मांशत्वात् । तच्च स्वरूपतो धर्मतश्चापि वक्तव्यम् । एवंच यथा स्वरूपतः सच्चिदानन्दघनब्रह्मांशभूतत्वाज्जीवा अपि सच्चिदानन्दरूपाः, तथा ते धर्म्मतोऽपि स्वभावतोऽपास्तसमस्तदोषः कल्याणगुणशालिनश्च । परंत्वेतावान् विशेषो यत्परमात्मा स्वरूपतोगुणतश्च सर्वांशित्वात् स्वरूपतो गुणतश्च निरतिशयः परमस्वतंत्रश्च । जीवास्तु अंशभूतत्वात् स्वभावत एव परमात्मापेक्षया स्वरूपतो गुणशक्तितश्च परमात्मतो न्यूनाः, तदेकतंत्राश्च । अत एव तेषां परमात्मशेषत्वात् परमात्मेच्छया बद्धा मुक्ताश्च भवंति । एवमपि न तेषां स्वाभाविकं विशुद्धत्वं हीयते, इत्यभिप्रायेणाह "स ह्यात्मा अहं कथं भोक्ता भवामि" इति हि । यतः यस्माद्धेतोः, सः, इति-अनुपदनिरुक्तलक्षणः सर्वा-

न्तर्यामी सर्वात्मा, अदृष्टत्वद्रष्टत्वादिविशेषितः, आनन्दामृतलक्षणोऽपहत-पाप्मा 'आत्मेति' परमात्मा, अहं स एव परमात्माऽहं अहमर्थो जीव इत्यर्थः तदंशत्वाज्जीवसामान्यस्येतिभावः । अत्र 'स' इति तच्छब्दार्थो विधेयः,अहमित्यस्मच्छब्दार्थ-उद्देश्यः, तथाच तरंगोऽपि समुद्र एव-मुद्रिकाऽपि कनक एव नान्या, तथा जीवोऽपि परमात्मैव। तदंशत्वात्तदा-त्मकत्वेन तच्छब्देन व्यपदिश्यमानः । एवंच—

अयमर्थः । भोक्तृत्वमत्र भोजनक्रियाकर्तृत्वमेव भोजनं प्रस्तुत्यैव "कथं वा दुर्वाशनो मुनिः" इति जिज्ञासाकरणात् । तच्च भोजनक्रिया-कर्तृत्वं द्विधा भवति क्षुधया भक्तवात्सल्येन च । तत्र यत् क्षुधया भवति तत्स्वार्थम् विक्रियाजन्यमज्ञानजन्यं च । "क्षुत्खलु मनुष्यस्य भ्रातृव्यम्" इतिश्रुतेः कर्मात्मकाविद्यामूलकशरीरात्मैक्याध्यासजन्यमनःप्रतिकूल-विक्रियारूपक्षुधायाः शोषणस्वभावायाः निवर्तनेनानुकूलमनोविक्रियार्थत्वात । अत एव सा आत्मनि न संभवति, आत्मनः "विजिघि-त्सोऽपिपास' इत्यादिश्रुतेःक्षुत्पिपासादिविक्रियावर्जितत्वात् । क्षुत्पिपा-सादिविक्रियाभावज्ञानार्थमेव हि जीवानां तरंगादीनां समुद्रादेरिव स्वरूपतो धर्मतश्च तादृशपरमात्मांशत्वमुक्तं संगतं भवति । तथाच "विजिघित्सोऽपि-पासः" इत्यादिश्रुतेर्यथा परमात्मा स्वभावत एव बुभुक्षापिपासादिविक्रिया-रहितस्तथा जीवा अपि स्वभावत एव बुभुक्षापिपासादिविक्रियारहिता इति कथं बुभुक्षानिवृत्त्यर्थं भोक्ता भवामि इत्यभिप्रायेणाह "अहं कथं भोक्ता भवामि" इति । भक्तवात्सल्येन वा लीलाविशेषार्थं वा भोजनादि-क्रियाकर्तृत्वरूपं भोक्तृत्वं तु करणाकरणान्यथाकरणरूपसामर्थ्यविशे-षान्तर्गतत्वात् न प्रतिषिद्ध्यते तत्प्रतिषेधे ह्यंशतः सामर्थ्यविशेषस्यैव प्रतिषेधात् । अंशतोऽसमर्थत्वेऽप्यपूर्णत्वमेव परे ब्रह्मण्युक्तं स्यात् । "न तदश्नोति कश्चन न तदश्नोति कंचन" इत्यादिश्रुतीनामप्येवमेवाशयः । एतदेव "यो वेद विहितं गुहायां परमेव्योमन्साऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति तैत्तरीयेऽपि मुक्तस्य परमात्मना सहैव निखिल-

कामिताशनं श्रूयते। अत एव च "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः, इतिगीतायां श्रीमुखोक्तेश्च नासंगतिः। तथा च यदा खलु क्षुत्पिपासादिविक्रियाऽभावेऽपि लीलाविशेषार्थं वा भक्तविशेषानुरोधेन वा भुङ्क्ते तदा भुञ्जन्नप्यभोक्तैव भवति। क्षुत्पिपासाजन्यप्रतिकूलविक्रियाऽभावात् भोजनानन्तरं तृप्त्याद्यनुकूलविक्रियाभावाच्च। तथाच वक्ष्यति-"यो ह वै कामेन कामान् कामयते स कामी भवति यो ह वै त्वकामेन कामान् कामयते सोऽकामी भवति" इतीत्यवधेयम्॥ एवंच मनःशरीरादिविलक्षणेन परमात्मांशभूतेनात एव स्वभावतः सर्वविक्रियाविवर्जितेन स्वांशिपरमात्माभिलाषभिन्नसर्वाभिलाषशून्येन मया केवलं भवतीनां परितोषार्थमेतावद्भोजने कृतेऽपि न मम दुर्वाशनत्वहानिरिति॥ एवं पञ्चसु पर्य्यायेषु बोध्यम्। अत्र 'शब्दवानाकाशः शब्दाकाशाभ्यां भिन्नस्तस्मिन्नाकाशस्तिष्ठति। आकाशे तिष्ठति सह्याकाशस्तं न वेद" इत्येव केषां चित्पाठः। केषांचित्तु "आकाशस्तिष्ठति" इत्यंशो नास्ति अन्यत्समानम्। एवमेव वायुस्तिष्ठति "अग्निस्तिष्ठति" इत्यादावपि बोध्यम्। तत्सर्वं शाखाभेदादुपपन्नम्। एवमन्यत्रापि पाठभेदः शाखाभेदादुपपन्न इति बोध्यम्॥१३।१७॥

सू० इदं हि मनस्तेष्वेवं हि मनुते तानिदं हि गृह्णाति ॥१८॥ यत्र सर्वमात्मैवाभूत्तत्र वा कुत्र नु ते क्व वा गच्छतीति स ह्यात्माहं कथं भोक्ता भवामि ॥१९॥ अयं हि कृष्णो यो वो हि प्रेष्ठः शरीरद्वयस्य कारणं भवति ॥२०॥ द्वौ सुपर्णौ भवतो ब्रह्मणोंशभूतस्तथेतरो भोक्ता भवति अन्यो हि साक्षी भवतीति ॥२१॥ वृक्षधर्मे तौ तिष्ठतः अतो भोक्त्रभोक्तारौ ॥२२॥ पूर्वो हि भोक्ता भवति तथेतरो-

ऽभोक्ता कृष्णो भवति॥२३॥यत्र विद्याविद्ये न विदामो विद्याऽविद्याभ्यां भिन्नो विद्यामयो हि यः स कथं विषयी भवति ॥२४॥ यो ह वै कामेन कामान् कामयते स कामी भवति। यो ह वै त्वकामेन कामान् कामयते सोऽकामी भवति ॥२५॥ जन्मजराभ्यां भिन्नःस्थाणुरयमच्छेद्योऽयं योऽसौ सूर्य्येतिष्ठति योऽसौ गोषु तिष्ठति योऽसौ गाः पालयति योऽसौ गोपेषु तिष्ठति, योऽसौ सर्वेषु वेदेषु तिष्ठति, योऽसौ सर्वैर्वदैर्गीयते योऽसौ सर्वेषु भूतेष्वाविश्य भूतानि विदधाति स वो हि स्वामी भवति ॥२६॥

ननु यदि जीवा स्वभावत एव क्षुत्पिपासादिविक्रियारहिता स्तन्मूलकनिरुक्तभोक्तृत्वरहिताश्च तर्हि कथं 'बुभुक्षापिपासाभ्यां व्यथंते भोजनपानाभ्यां तृप्ताश्च भवंति, इत्यादिलोकसिद्धो व्यवहार इत्याशंकानिवृत्त्यर्थमाह 'इदं हि मनस्तेष्वेव मनुते तानिदं गृह्णाति' इति ॥ १८ ॥ इदं बुभुक्षापिपासाकामादिविक्रियाऽधारभूतं मन एव। हि यतः मन एव तेषु भोक्तव्यविषयेषु मनुते तत्तादिन्द्रियद्वारा आविश्य भोक्तव्यत्वादिधर्मैः संकल्पयति। अध्यवस्यति च ततः तान् भोक्तव्यपदार्थान् इदं मनः तत्तृष्णानिवृत्त्यर्थं तज्जन्यदुःखनिवृत्त्यर्थं च गृह्णाति भुंक्ते। आत्मनस्तु सच्चिदानन्दघनत्वेन सर्वविक्रियारहितत्वात् किमर्थं स विषयान् भोग्यत्वेन संकल्पयेदध्यवस्येच्च। तस्मान्नात्मनि क्षुत्पिपासादिधर्माः न वा तन्निवृत्त्यर्थं भोक्तृत्वादि च परंतु जीवस्यानादिकर्म्मात्मिकया ऽविद्यया स्वरूपस्य विस्मृतत्वात्, अन्तःकरणेन सहैक्याध्यासात् तादृश भ्रममात्रं भवति।

अयं भावः। तत्तद्विषयोपभोगादौ प्रवृत्तेर्हि तृष्णा मूलमित्यन्वयव्यतिरेकसिद्धम्। तृष्णा हि समीहितभोग्याभावप्रयुक्तदुःखजन्यःसमिहितभोग्यसद्भावसम्पादनेन तद्दुःखप्रहाणेच्छारूपश्चित्ताभिज्वलनस्वभावो मनसोरजोवृत्तिविशेषः "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति बृहदारण्यकश्रुतेः। काम इति तृष्णा विशेषस्यैव पर्य्यायान्तरं एवंच भोक्तृत्वमपि तत्तद्विषयसम्बन्धद्वाराऽनुकूलवृत्तिरूप सुखसाक्षात्कारेण प्रतिकूलवृत्तिरूपदुःखनिवर्तकत्वरूपं निरुक्ततृष्णासहभावेनैव वाच्यं सुखदुःखतृष्णातद्विच्छेदादीनां सामानाधिकरण्येनैवानुभवसिद्धत्वात्। तृष्णायाश्च कामरूपाया मनोवृत्तिरूपत्वस्य "कामःसंकल्प" इतिश्रुत्यैव निश्चितत्वात्। तस्माद्भोक्तृत्वादिकं मनस एव धर्मा नात्मनो नित्याखण्ड संवित्सुखरूपस्य, तथाप्यनाद्यविद्ययाऽत्ममनसोरैक्याध्यासे जाते दर्पणस्थमुखे दर्पणस्थमालिन्यादीनामिव मनोगतानां भोक्तृत्वादिधर्म्माणामात्मनि प्रतिभास एवेति। येषां तु निरुक्तशरणागत्यादिक्रमेण विश्वात्मभूतभगवत्प्रसादो जातः निरस्तश्च तन्महिम्नैवाविद्यानिवृत्तावन्तः करणाद्यध्यासः प्रकटीभूता च ध्रुवास्मृतिः, ब्रह्मसम्पत्तिर्वातदाऽनन्दस्फुरणे तुत्पपासादिविलयाच्च कुतो भोक्तृत्वादिव्यवहार इत्याह। "यत्र सर्वमित्यादि। यत्रेति। ध्रुवास्मृत्यनंतरंब्रह्मसम्पत्तौ च तदनन्तरंभगवत्परमसाम्यावस्थायां सर्वकार्यकरणकर्तृग्रामं आत्मैवाभूत्। निरतिशयचिदानन्दघनपरमात्माविभक्ततयैव निरन्तरंस्फूर्य्यमाणमभूत्। तत्रेति तदवस्थायां कार्य्यकरणादीनां विलयात्। 'कुत्रेति' कस्मिन् भोक्तव्ये विषये नु वितर्के। ते इति इन्द्रियादयः करणग्रामाः विलीनस्वरूपाः प्रवर्तरेन्। क्वेति-क कुत्र वा करणग्रामेषु विषयेषु भोक्तृत्वस्वभावो मनः भोगाय गच्छति? न गच्छतीत्यर्थः। तदा सर्वमेव प्राकृतभोक्तृभोग्यादिव्यवहारविलोपादिति यावत्। तथाच श्रुत्यन्तरम्-मैत्रेयिब्राह्मणे "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् केन कं जिघ्रेत्" इत्यादि। एवंच यदात्मस्फूर्तौ मन आदीनामपि भोक्तृत्वं लुप्यते स परमात्मैवाहं तदंशभूतः विशुद्धज्ञानानन्दरूपः विजि-

चित्तोऽविरासः कथं वैषयिको भोक्ता भवामीतिभावः ।

एवं प्रथमप्रश्नोत्तरेण स्वस्य भोक्तृत्वाभावनिरूपणेनाशनापिपासादिनिखिलप्राकृतधर्मरहितत्वं निरूप्य सामान्यतो जीवस्य ब्रह्मात्मकत्वनिरूपणेन च सामान्यतो जीवतत्त्वं परिशोध्य भगवतत्त्वं परिशोधयितुं 'स आत्मा अहं' इत्यनेनोक्तं जीवस्य भगवदंशत्वं परिशोधयितुं च द्वितीयप्रश्नमुत्तरयितुं प्रक्रमते। 'अयं हि कृष्णः' इति प्रेमाञ्जनच्छुरितभक्तिविलोचनेन साक्षात्कुर्वन्नाह 'अयमि'ति । वक्ष्यमाणमतितरां प्रेष्ठत्वे शरीरद्वयकारणत्वे निष्कामत्वे च हेतुगर्भसंज्ञया भगवन्तं स्मारयन्नाह । 'कृष्णः' इति "कृषिर्भू वाचकः शब्दः" "सच्चिदानन्दरूपाय" 'पापकर्षणः' इत्यादिपूर्वतापिन्युक्तदिशाच्च निरतिशयसत्यचिदानन्दघनोऽपहतपाप्मा च योऽयं सर्वत्र भक्तानां स्फूर्य्यमाणःकृष्णः । य इत्यनन्तरं स इत्यध्याहार्य्यम्–यत्तदोर्नित्यसाकांक्षत्वात् । तथाच स एव च युष्माकम् प्रेष्ठः नितरां प्रेमास्पदो भवत ।। सांख्ययोगाद्युक्ततटस्थेश्वरवादं निराकुर्वन्नाह 'शरीरद्वयस्येति स्थूलसूक्ष्मद्वयस्य समष्टिव्यष्ट्यात्मकस्य च कारणं भवति–"लोकवत्तु लीलाकैवल्यमिति पारमर्षसूत्रोक्तदिशा लीलैकप्रयोजनिकया निजस्वतंत्रेच्छया जनकोभवतीत्यर्थः' "स विश्वकृद्विश्वविदात्मयोनिर्ज्ञःकालकालो गुणी सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः । स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता। य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यते ईशनाय ।" इत्यादिश्रुत्यन्तरेभ्यः । "बंधको भवपाशेन भवपाशाच्च मोचकः। कैवल्यदः परंब्रह्म विष्णुरेव न संशयः" इत्यादि स्मृतिभ्यश्च । एतदुक्तं भवति–यःस्वतु एव निरतिशयसच्चिदानन्दघनः, अपहतपाप्मा समस्तजगदेककारणं स्वयमकारणञ्च स कृष्णः कथं तुच्छविषयसुखलिप्सात्मककामरूपपापेनोपहतः स्यादिति । यश्च स्वयं सर्वकार्य्यकारणेशः स कथं कार्य्यभूतेन कामेन बद्धःस्यादिति ।

अतएव च श्रुत्यन्तरंबृहदारण्ये–"स न साधुना कर्म्मणा भूयान्

नो एवासाधुना कर्मणा कनीयामेष सर्वेश्वरः" इति "नैनं कृताकृते तपतः' इति "एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्" इति "नैनं पाप्मा तरति सर्वं पाप्मानं तरति। नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजो विचिकित्सो ब्राह्मणः" इतिचेति। तस्य तज्ज्ञानां च परैरनभिभवः प्रतिपाद्यत इति।

ननु यथा जीवः भगवदंशत्वात् स्वतःसच्चिदानन्दरूपोऽपहत-पाप्माऽपि अविद्यावशात् इन्द्रियान्तःकरणाद्यध्यासेन निजानन्दस्य ज्ञानादीनां च तिरोहितप्रायत्वात् कामादिनोपहतस्वभावो भवति तथा कृष्णोऽपि स्यादित्याशंकानिवृत्त्यर्थं सामान्यतः सूत्रितमेवार्थं विशदयितुं—

कृष्णस्य जीवत्वसंशयनिराकरणेन सर्वांशिपरमात्मत्वव्यवस्थापनाय च दृष्टान्तदार्ष्टान्तिकभावरूपकेणाह "द्वौसुपर्णौ भवतः" इति सुपर्णौ पक्षिणाविव द्वौ तत्त्वौ भवतः अस्मिन्देहे तिष्ठतः। ब्रह्मणः परमात्मनो अंशभूतः। तथेति एवमित्यर्थः। 'इतरः' अन्यस्तत्रैव भोक्ता भवति वैषयिकसुखदुःखाद्यध्यासी भवति। "अन्यः इति ब्रह्मणोंऽशभूतात्' भोक्तुर्जीवाद्व्यतिरिक्तः जीवानां सर्वेषामंशी, अभोक्ता स्वयं ब्रह्म साक्षी भवति। 'वृक्षधर्मे' वृक्षसाधर्म्ययुक्ते देहे तिष्ठतः इत्यर्थः। तथाच मुण्डके श्रुत्यन्तरम् "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्व जाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अन्योऽनश्नन्नभिचाकशीति।" इति। एवंच जीवस्य शरीरे स्थितिः कर्मफलयोगार्थम्। ब्रह्मणस्तु सर्व व्यापकस्य तत्राभिव्यक्तिः तस्य फलभोगे मोक्षेच सहायतार्थम्। अतएव च श्रुत्यन्तरम्। "एष ह्येव साधु कर्म कारयति। तं यमूर्ध्व-मुन्निनीषति। "एष ह्येवासाधु कर्म कारयति तंयमधो निनीषति" (कौ०उ० अ० १। शां० ब्रा० ३।४) इति। "समाने वृक्षे पुरुषो निमग्नोऽनी-शया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्यमहिमा नमिति वीत-शोकः" इतिच। 'अतो भोक्ताऽभोक्तारावि' ति। यत एकोंऽशभूतोऽत एव परतंत्रोऽन्यश्चांशिभूतः स्वयं ब्रह्म स्वतंत्रः। अतोंऽशभूतो भोक्ता, लीला-

प्रवृत्तब्रह्मणोऽभिध्यानात् संकुचितज्ञानानन्दादिधर्म्मोऽविद्यादिवशात्, अन्तःकरणाद्यध्यासेनान्तःकरणादिधर्म्मैः भोक्ता भवति। अपरस्तु स्वयंब्रह्मत्वेन स्वतः परिपूर्णत्वात्, विषयादिस्पृहाऽभावात्, अभोक्ता नित्यतृप्तो भवति इत्यर्थः।

तत्र यः स्वयं ब्रह्म सर्वप्राकृतधर्म्मनिर्ल्लेपस्वभाव आनन्दामृतात्मा स युष्माकं प्रेष्ठः कृष्ण एव नान्य इत्याह "पूर्वो ही" त्यादि। 'पूर्वः' इति तत्र यःपूर्वः ब्रह्मणोंऽशभूतः स एव भोक्ता भवति। हि शब्द एवकारार्थः। 'तथा' एवं इतरः-अंशभूतानांजीवानामंशी स्वयं ब्रह्म कृष्ण एव भवति नान्य इत्यर्थः। एतेन 'शब्दवानाकाशःशब्दाकाशाभ्यां भिन्न' इत्यादिना प्रतिपादितो यः परमात्मा सर्वनियामकःसर्वात्माऽनन्दामृतरूपः स कृष्ण एव नान्य इत्युपपादितम्। फलितमाह 'यत्रेति यत्र यस्मिन् निरुक्तलक्षणे परे ब्रह्मणि कृष्णे नित्यसिद्धनिरतिशयज्ञानमये, विद्याविद्ये साधनसाध्ये मोक्षबन्धनहेतुभूते न विदामो वयं ब्रह्मविदोऽपि न जानीमःसाधनसाध्याया विद्याया अविद्यायाश्च विरुद्धस्वभावाया तत्र नितरामभावात्। यश्चायं "विद्याविद्याभ्यां भिन्नो विद्यामयः" अत एव नित्यनिरतिशयज्ञानैकघनः स कृष्णः 'कथं विषयी' स्वतःसर्वानन्दस्फुरणस्वभावः। विषयी स्यात् तुच्छवैषयिकसुखाध्यासी स्यात्, इत्यर्थः।

ननु ये विषयान्नोपभुंक्ते मा भवतु ते विषयिणः। यस्तु विषयान् भुंक्ते स न विषयीति विरुद्धमित्याह "यो ह वै कामेने" त्यादि 'यो ह वै' इति। य एव कामेनेति विषयसम्पर्कजन्यसुखाभिलाषेण काकान् विषयान् कामयते। भोक्तुमिच्छति। स कामी भवति कामाख्यमनोविकारयुक्त इत्युच्यते। यो ह वै य एव। तुः पक्षान्तरे। अकामेन विषयसम्पर्कजनितसुखाभिलाषशून्येन कामान् विषयान् कामयते केवलं परार्थमेव विषयान्भोक्तुमिच्छति सः, अकामी कामाख्यविकाररहित एव भवति। इत्यर्थः। तथाच कृष्णः केवलं निरतिशयप्रेमभक्तानां भवतीनां सुखार्थमेव प्रेम्णैव भवतीः भुंक्ते। ननु पृथक् स्वसुखार्थम्-तस्य स्वत

एव निरतिशयानन्दवत्त्वात् । नचैवमन्यतरप्रेम्ण भावात् रसाभास इतिवाच्यम् । तत्सुखसुखित्त्वघटित:प्रेमा त्वन्योऽन्यं वर्तत एव तस्य निरतिशयानन्दरूपस्य ब्रह्मण: प्रियत्वापरपर्य्यायस्य प्रेम्ण: स्वरूपधर्मत्वात् परंकामो न वर्तते रजोधर्मत्वात् पाप्मरूपत्वाच्च ब्रह्मच विरजो विपाप्म च । इति न रसाभास:, अन्योऽन्यप्रेम्ण एव रसपोषकत्वाद्रसरूपत्वाच्च नतु विक्रयाविशेषरूपस्य कामस्य पाप्मन: । अत: कृष्णो निष्कामोऽत एव त्ववरुद्धसौरतत्वाद् ब्रह्मचारी च भवत्येवेतिभाव: । तदुक्तं भागवते रास-पञ्चाध्याय्यामेव "सिषेव आत्मन्यवरुद्धसौरत: । सर्वा: शरत्काव्यकथा-रसाश्रया: ॥" इति ।

कामोऽहि विक्रिया विशेषरूपो ब्रह्मचर्य्यविनाशक: । स च भाव-विक्रियाशून्ये कृष्णे न संभवति । इत्याह 'जन्मजराभ्याति" त्यादि जन्मजरेत्युपलक्षणमन्येषां भावविकाराणाम्, तथाच जन्मजरादिसर्वभाव-विक्रियावर्जित: । अतएव स्थाणु: सदैकरस:, 'अतएवाच्छेद्य:' छेदो हि द्वैधीकरणम् । द्वैधीकरणे हि वस्तुन: पूर्वरूपविनाशो भवति ॥ अयं तु अच्छेद्य: "सदैकरसत्वाच्छेदादिविनाशहेतुरहितोऽतएव नित्य: सदातन: । तथाच अविक्रियेऽच्छेद्ये च कथं नाम विक्रियाविशेषस्य धातुच्छेदक-रस्य च कामस्य, ब्रह्मचारित्वभंगस्य च संभव इति । यद्वा जन्मजराभ्यां भिन्न: कुत: यत:, स्थाणु:, कुत: स्थाणु:, यतोऽच्छेद्य:, इत्येवमन्वय: । अन्योन्यऽन्यंवा हेतुहेतुमद्भाव: । तथाच सर्वभावविक्रियारहितत्वेनोपपत्ति-विरोधादपि न कृष्ण: कामविक्रियायुक्त इतिभाव: । नचैतादृशसर्वभाव विक्रियाहितत्वं प्रकृतिप्राकृतपरे परमात्मन्येव श्रूयते । "एतद्वै तदक्षरं गार्गि ब्राह्मणा वदन्ति अस्थूलमनण्वमहस्वम्" इत्यादौ नान्यत्र । तर्हि श्रीकृष्णे कथमेवं भाव इत्यादि "योऽसौ सौर्य्ये तिष्ठती" त्यादि । यद्यपि "तथेतरोऽभोक्ता कृष्णो भवति," इत्यनेनैवेदमुक्तप्रायम् । इति न पुनर्व-चनमपेक्षते । तथापि तत्र सामान्येन सूचित एवायमर्थ: पुनरत्र विशदी क्रियते विशेषतोऽवधारणार्थम्, इति नानुपपत्ति: । 'सौर्य्ये तिष्ठति' इति-

सूर्य्यसम्बन्धिनि मण्डले तदात्मनि चान्तर्य्यामितया "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुहिरण्यकेश आप्रणखात्सर्व्व एव सुवर्णः" इत्यादिश्रुत्युक्तलक्षणः । "य आदित्ये तिष्ठन्नादित्यमन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्य्याम्यमृतः" इत्यादिश्रुत्युक्तप्रकारेण विराजते, इत्यर्थः । एतावता सर्वमेवान्तर्य्यामिब्राह्मणम् श्रीकृष्णे समन्वायितम् । 'योऽसौ गोषु' इति । इन्द्रियेषु, तिष्ठति तत्तदन्तर्य्यामितया विराजते इत्यर्थः । 'यश्चक्षुषि तिष्ठन्' 'यः श्रोत्रे तिष्ठन्' 'यो मनसि तिष्ठन्' 'यस्त्वचि तिष्ठन्' इत्यादिबृहदारण्यकश्रुतिभ्यः । 'योऽसौ गाः पालयती'ति 'गाः सौरभेयीः पृथिवीश्च ताः पालयतीत्यर्थः । पृथिवी पक्षे बहुवचनं ब्रह्माण्डभेदेन पृथिवीभेदानां संग्रहायेति बोध्यम् । "योऽसौ गोपेष्विति वयस्येषु जीवेषु च तिष्ठति नियामकतयेत्यर्थः । गोपशब्दो हि जीवेऽपि प्रयुज्यते । गोपदवाच्येन्द्रियपालकत्वाभिप्रायेण "गोपान् जीवान्" इतिवदयमाणात् । "योऽसौ सर्वेषु वेदेष्विति । वेदा हि सांगाःसोपनिषदाःसरहस्याः सेतिहासपुराणा ऋग्यजुःसामाथर्व्वाख्याः, तेषु सर्वेषु आद्युपदेशकृत्तया तत्तदर्थप्रकाशकतया तदर्थनियामकतया च तिष्ठतीत्यर्थः । 'पूर्वं यो वै वेदांश्च प्रहिणोति" इत्यादिश्रुतेः "वेदान्तकृद्वेदविदेव चाहमिति" स्मृतेश्च । देवेष्विति पाठेतु सर्वदेवनियामकतयेत्यर्थः । इदमुपलक्षणमन्तर्य्यामिब्रह्मणोक्तानां पर्य्यायान्तराणाम् । एतावता सर्वमेवान्तर्य्यामिब्राह्मणं श्रीकृष्णेसमन्वायितम् । तावतैव च स्वभावतः सर्वदोषविवर्जितत्वलक्षणमपहतपाप्मत्वं सर्वनियामकत्वं सर्वान्तरात्मत्वमानन्दामृतरूपत्वं सर्वनियामकत्वाच्चमनिरंकुशसर्वशक्तिपूर्णत्वादिकं च सूचितम् । अन्तर्य्यामिब्राह्मणान्ते–' सुबाले बृहदारण्यकेच यथाक्रमं "स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" एष त आत्माऽन्तर्य्याम्यमृतः" इतिश्रुतेः । ननु भवतु नाम श्रीकृष्णस्य सर्वान्तर्य्यामित्वं तावताऽपि न मूलरूपत्वसिद्धिः । अन्तर्य्यामित्वस्याऽमूलरूपांशेऽपि

संभवात्। इत्याह। "योऽसौ सर्वैर्वेदैर्गीयते" इति। मूलरूपमेव सर्वैर्वेदैर्गीयते "सर्वे वेदा यत्पदमामनन्ति" इतिश्रुत्यन्तरात्। श्रीकृष्णस्तु सर्वैर्वेदैर्गीयते-"वेदैश्च सर्वैरहमेव वेद्यः" इतिगीतोक्तेः। अतः कृष्ण एव प्रकृतिपरः परमात्मा साक्षात्परं ब्रह्म सर्वमूलभूतो नान्य इतिपर्य्यवसितार्थः। एवंच "अस्थूलमनणु" इत्यादिसर्वाणि वाक्यानि श्रीकृष्णपराण्येव नतु तदतिरिक्तकिंचिद्वस्तुपराणीति। एवंच य एवं विधः स एव श्रीकृष्णः सर्वेश्वरः, वो युष्माकं स्वामीति प्रकरणार्थः। एतेन पापकर्षणो गोभूमिवेदविदतो विदिता च" इत्यनेन सूत्रितौ कृष्णशब्दार्थौ गोविन्दशब्दार्थश्चापि सोपपत्तिकं दर्शितौ। तथा चैतावत्प्रबन्धेन सोपपत्तिकं स्वभावतोऽपास्तसमस्तदोषत्वमशेषकल्याणगुणशक्तिस्वभावत्वं सर्वान्तर्य्यामित्वं सर्वात्मत्वं प्रकृतिपरत्वं परमात्मत्वादिकं च कृष्णैकनिष्ठत्वेन व्याख्यातम्। ब्रह्मचारित्वादिचिन्तनंतु तदुपपादनायैव तावन्मात्रस्योपनिषन्मुख्यतात्पर्य्यगोचरत्वाभावादित्यवधेयम्॥

## अथाऽत्र प्रसङ्गात् श्रीराधाया गोपीनां च श्रीकृष्णेन सह दाम्पत्यं विचार्य्यते निराक्रियते च तद्विरुद्धयुक्त्याभासः।—

इदन्तावद्विशेषतोऽवधेयम्। परमर्षिणा दुर्वाससाऽत्र "स वो हि स्वामी भवति" इत्येव गोपीःप्रति यदुक्तम् तेन तासामौपपत्यं निराकृत्य मुख्यपतित्वानुबोधने एव श्रुतेस्तात्पर्य्यं निश्चीयते। तत्रापि सिद्धवत्कथनात्सिद्धवत्स्वीकाराच्च गोपीनामपि तदुपदेशात्प्रागपि भगवति भर्तृभाव एव निश्चीयते नतु जारभावः। तासां पूर्वं जारभाववतीत्वे "स वो हि स्वामी भवति" इति दुर्वाससः उपदेशानन्तरं तथात्वेऽवश्यं जिज्ञासावतारः स्यात्। नचैवम्। तस्मान्निश्चितानुवादमात्रमिदंवचनम्। ननु पूर्वं "भूतेष्वाविश्य भूतानि विदधाति" इत्यन्तवाक्येन श्रीकृष्णस्य परमात्मत्वनिरूपणात्तन्मुखेनैव "स वो हि स्वामी भवति"

इत्युक्तम्। तथाच परमात्मनः सर्वजगत्स्वामित्वात्तल्लक्षणमेव गोपीनामपि स्वामित्वमुक्तं नतु दाम्पत्यपर्य्यवसायिस्वामित्वमिति चेन्न। तथा सति "स नो हि स्वामी भवति" इत्येव ब्रूयात् तावता स्वस्य गोपीनां सर्वेषां जगतांच भगवत्स्वामिकत्वाऽवबोधसंभवात्। वाक्यानां प्राय एवमेव नियमो यत्सामान्यशब्दस्य यत्र विशिष्योपसंहारः क्रियते तत्तात्पर्य्यविशेषेणैव क्रियते इति। तथाचात्र विशिष्य तासामेव स्वामित्वकथनं नियत उक्तार्थ एव पर्य्यवस्यति।

नच तथाप्यत्रास्तु स्वामिशब्दःपत्युपतिसाधारण इतिवाच्यम्। तथा तात्पर्य्ये "प्रेष्ठो भवति" "कान्तो भवति" इत्यादिकं वदेत्, नतु स्वत्वसाकांक्षंस्वामिशब्दम्। अयं भावः स्वामिशब्दो हि नियमतः स्वत्वसाकांक्षः। तथाच गोपीजनस्वामित्वे उक्ते गोपीजनेषु श्रीकृष्णनिष्ठस्वामित्वनिरूपितस्वत्वमपि नियमत उक्तं भवति तथाचौपपत्यं बाध्यत एव, नहि स्त्रीपुंसोः तादृशस्वत्वस्वामिभावसम्बन्धे सति तयोरौपपत्यसंभवः। यत्र न तादृशस्वत्वस्वामिभावस्तत्रैवौपपत्यनियमात्। नचात्र स्वामिशब्दो नोक्तमुख्यार्थपर्य्यवसायी, अपि तु यथा कथंचित्कामसम्बन्धिपुरुषपर्य्यवसाय्येवेति वाच्यम्। नेदं वाक्यं भवद्भिरचितं भवादृशविरचितं वा काव्यम्। अपितु 'श्रुतिः' यत्र मात्रामात्रमप्यन्यथा कल्पनं वेदैकशरणानांविगर्हितमेव। स्यादत्रापि शब्दवृत्तिसंकोचावसरो यदि तादृशश्रुतावेवौपपत्यं क्वचिदुपदिष्टं स्यात् नचोपदिश्यते क्वचिदपि प्रत्युत तत्सजातीयोपनिषत्सु पुरुषार्थबोधिन्यादावपि "तस्याऽद्या प्रकृती राधिका नित्या निर्गुणा सर्वाऽलंकारशोभिता" "इत्यादिना तदेकप्रकृतित्वकथनात्स्वकीयात्वमेवोच्यते? इति। गोपीचन्दनोपनिषद्यपि "गोप्यो नाम विष्णुपत्न्यः" इत्येव श्रूयते। तथाच पत्नीशब्दाद्दाम्पत्यमेव तत्रापि श्रुतिर्निगमयति। एतमेवत्कल्पग्रन्थे गौतमीयतंत्रेऽपि दशार्णमंत्रव्याख्याने—

"अनेकजन्मसिद्धानां गोपीनां पतिरेव सः।
नन्दनन्दन इत्युक्तस्त्रैलोक्यानन्दवर्धनः।"

इति नन्दनन्दनत्वेन विशिष्य पतित्वाभिधानमवतारदशायामपि नन्दनन्दनस्य ताभिः सह दाम्पत्यमेव निगमयति। नचात्रापि त्वदुक्तकल्पनाऽवसरः भवदुक्तकाव्यत्वाभावात् । कल्पग्रन्थत्वेनान्तरंगप्रमाणत्वान्मंत्रव्याख्यानरूपत्वेन स्तोत्रादिवाक्यापेक्षयाऽतितराम्प्रमाणत्वाच्चेति ।

अत एव श्रीजीवगोस्वामिभिरपि-उज्जलनीलमणिटीकायाम् "लघुत्वमत्र यत्प्रोक्तम्" इत्यस्य व्याख्यायाम्–श्रीगोपालतापिन्यामपि तत्पतित्वमेव दुर्वाससा निश्चितम् 'स वो हि स्वामी भवति" इति। स्वामिशब्दश्चायं स्त्रीप्रसंगे पत्यावेव रूढ़ः। "स्वामिनो देवृदेवरौ" इत्यमरकोशात्" इत्यादिना । एवं श्रीराधाकृष्णार्चनचन्द्रिकायामपि तैरेव–'स च पतित्व एव विश्रान्तः, 'जन्मजराभ्यां भिन्नः, इत्यादौ "स वो हि स्वामी भवति" इति तस्यामेव श्रुतौ ताः प्रति दुर्वासोवाक्यात् । स्त्रीसंबन्धे स्वामिशब्दः पत्यावेव रूढ़ः । 'स्वामिनो देवदेवरौ,, इत्यमरकोशात्" इत्यादिना तथैव व्याख्यातमिति ।

नचास्तु सिद्धान्ततो दाम्पत्यमेव तथापि लोकव्यवहारतस्तथा न संभवः, विवाहाभावादितिवाच्यम् । नित्यसिद्धानां तासां लक्ष्मीरूपाणां नित्यसिद्धविष्णुपत्नीनां कृत्रिमविवाहाऽऽभावेप्यौपपत्याऽसंभवात्, साधनसिद्धानामपि नित्यसिद्धासाम्यंप्राप्तानां लक्ष्मीत्वादेवौपपत्याऽसंभवात् । किंच कात्यायिनीपूजाप्रसंगे ब्रह्मवैवर्तादिपुराणसंवादाद्गान्धर्वविवाहो जात एव निश्चीयते । भागवतेऽपितत्प्रसंगे, "पतिं मे कुरुते नमः" "मयेमा रंस्यथ क्षपाः,, इत्यादिनाऽन्योन्यवरणाद्गान्धर्वविवाहो जात एव निश्चीयते। याश्च काश्चित्साधनारूढ़ाः कर्मशेषात्परोढ़ा अप्यापाततो जाताः, तासामपि भगवत्संबन्धात्कर्मशेषनिवृत्तौ नवतनुत्वप्राप्तित एव स्वरूपतो जारभावनिवृत्तौ दुर्वासस उपदेशानन्तरं तादृशभ्रमोऽपि निरस्त इति तासामपि दाम्पत्यमेव। नच सिद्धान्ततस्तथात्वेऽपि भावत औपपत्यमस्तु रसपोषकत्वादितिवाच्यम् । रसपोषकत्वस्य निर्मूलत्वात्तच्चाग्र उपपादयिष्ये। किंच सिद्धान्ततो दाम्पत्ये भावत औपपत्यमज्ञानविशेषजन्यमेव

त्वया वाच्यम्, तदसंभव एव मुक्तासु तासु भगवति चाज्ञानासंभवात् । साधनारूढ़ानामपि दुर्वाससउपदेशानन्तरमज्ञाननिवृत्तेर्जातत्वात्भवताऽपि नित्यसिद्धानांनित्यमुक्तत्वमेवोच्यते ? विशेषस्त्वग्रे वक्ष्यते । इति ।

तस्मात् "नाऽहं प्रकाशः सर्वस्य योगमायासमावृतः । मूढ़ोऽयं नाभिजानाति लोको मामजमव्ययम् ।' 'अवजानन्ति मां मूढ़ा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् । मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनींश्रिताः ।" "अज्ञत्वंपारवश्यत्वं विधिभेदादिकं तथा । तथा प्राकृतदेहत्वंदेहत्यागादिकं तथा । असुराणां विमोहाय दोषा विष्णोर्नहि क्वचित् ॥" इत्यादिवाक्यानुसारेण प्राकृतानां यथा तथा प्रतीतिर्भवतु नाम ? श्रीभगवानपि प्राकृतान्प्रति निजयुगलरूपं यथा तथा प्रत्याययतु नाम ? तथापि गोपीनां गोपीभर्त्तुः कृष्णस्य च परस्परम्' नियमतो दाम्पत्यानुभूतिरेव भगवदन्तरंगभक्तानामपि तथैवानुभूतिः । यथोक्तं गीतायां "महात्मानस्तु मां पार्थ दैवीं प्रकृतिमास्थिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्" । इति 'येषांत्वन्तगतंपापंजनानांपुण्यकर्मणाम् ॥ तेद्वंन्दमोहनिर्मुक्ताभजन्तेमांदृढ़व्रताः । इति चेति । तत्रापि परमश्रीपरमनारायणयोः श्रीराधाकृष्णयोः "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" "स इममेवात्मानं द्वेधाऽपातयात्पतिश्च पत्नीचाभवताम्" इत्यादिश्रुत्यैकसमधिगम्ययोर्न कथंचिदपि जारभावः कल्पनीयः, परमापराधरूपत्वात् "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा ।" इतिस्मृतेः । अत एव ब्रह्मवैवर्तपुराणे शापप्रसंगे श्रियै शापदात्रा श्रीदाम्नैव तस्यां गोपान्तरपत्नीत्वं मन्यमानानां मूढ़त्वमुक्तम् "मूढ़ा रायाणपत्नीं त्वां वक्ष्यन्ति जगतीतले" इति । ये किल परकीयाभावरसिकास्ते राधाकृष्णयोरवतारलीलायामुभयोः कुमारभावाश्रयणेनानुशीलयन्तु नाम, नात्र दोषः । तथापि श्रीदेव्यां राधायां गोपान्तरसम्बन्धस्तु मायिकोऽपि न कल्पनीय इति मम निश्चय इति ।



श्रीसनकनारदाद्यनुगृहीतश्रीनिम्बार्काचार्यसिद्धान्ते तु "श्रीश्च ते"

इत्यादि "श्रुत्युक्तलक्षणा श्रीरेव राधा" औदुम्बरसंहितायां युग्मव्रतप्रकरणे 'लक्ष्मीर्वाणीच तत्रैव जनिष्येते महामते वृषभानोस्तु तनया राधा श्रीर्भविता किल इतिब्रह्मवैवर्तपुराणवाक्योद्धरणेन स्वयमाद्याचार्य्यैरेव तथानिर्धारणात् सर्वैरेव च तदनुगैस्तथैव स्वीकृतत्वाच्च सदा दाम्पत्यमेव स्वीकृतम् । तथाहि दशश्लोकीव्याख्यायां सिद्धान्तरत्नांजलौ "अंगे तु वामे वृषभानुजां मुदा" इत्यस्य व्याख्यायां श्रीहरिव्यासदेवाचार्य्या आहुः—"अयमाशयः– "अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः" इति श्रीभागवतोक्तेः श्रियो नित्याविनाभावसम्बन्धः सर्वसम्मतः । तत्र श्रियो द्वे रूपे श्रीश्च लक्ष्मीश्चेति तथाहि श्रुतिः "श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे" इति । तत्र याः श्री सा वृषभानोस्तनया या च लक्ष्मीः सा रुक्मिण्यादिरूपा" इति। तत्र ब्रह्मवैवर्तपुराणवचनं प्रमाणमाहुरग्रे–"लक्ष्मीर्वाणी च तत्रैव जनिष्येते महामते । वृषभानोस्तु तनया राधा श्रीर्भविता किल ॥" इति अयंश्लोको ब्रह्मवैवर्तपुराणस्थतयौदुम्बरसंहितायामप्याद्याचार्य्यैरेव पठित इत्युक्तमेवेति । पुनराहुः "तत्र श्री राधायाः सर्वरूपश्रैष्ठ्यं श्रुतिप्रामाण्यात् तथाहि ऋक्परिशिष्टश्रुतिः "राधया माधवो देवो माधवेन च राधिका । विभ्राजते जनेषु । योऽनयोः पश्यते भेदं न मुक्तःस्यात्स संसृतेः" इति । "वामांगसहिता देवी राधा वृन्दावनेश्वरी" इतिकृष्णोपनिषदिचे" त्यन्तेन । तदेतत्सर्वमौदुंबरसंहितायां श्रीमदाद्याचार्य्यैरेवोक्तं चतुर्थव्रतनिरूपणे, तेन नासाम्प्रदायिकं किञ्चिदित्यवधेयंतदीयैरिति ॥ श्रीवल्लभाचार्य्यैरपि भागवतदशमे श्रीसुबोधिन्यां "सततमुरसि सौम्य श्रीर्वधूः साकमास्ते" इत्यत्र "दम्पतीरूपेण स्वरूपं विभज्यैव श्रीकृष्णो भगवानवतीर्ण इत्यवोचाम" तथा व्रज एव कुमारश्च कुमारीचाभवद्धरिः" इतिचोक्तम् । श्रीपुरुषोत्तमगोस्वामि महानुभावैश्च खलालपनविध्वंसवादादिनिबन्धे–"पतिश्च पत्नीचाभवताम्" इतिबृहदारण्यकवाक्यमादायैव राधाकृष्णतत्त्वं विचारितं तेन तत्सम्प्रदायेऽपि राधाकृष्णयोर्दाम्पत्यमेवेति बोध्यम् ।

अथापि केचिद्रसिकंमन्यास्तयोर्जारभावं साधयितुं प्रयतंते तन्मतं मया स्वस्य स्वसमानहृदयानांच बुद्धिपरिशुद्धयेऽत्र विचार्य्यते नतु खण्डनमण्डनार्थम्। तस्माच्छ्रन्तव्यं तदनुगैरिति भूयो भूयोऽभ्यर्थये—
तथाऽयमाद्यः श्लोकः—
न मे प्रवृत्तिः किल खण्डनार्था न मण्डनार्थाऽपि च वादिनांमतैः।
स्वबुद्धिशोधाय मम प्रवृत्तिस्तेन प्रसीदत्वखिलान्तरात्मा ॥ इति।

इदंन्त्विहावधेयम्—ये किल रसिकभक्तमानिनः श्रीराधाकृष्णयोः सच्छास्त्रविरुद्धं जारभावं साधयितुं प्रगल्भन्ते तेषां मतं जिज्ञास्यते? तदीयौ राधाकृष्णौ श्रुतिसिद्धौ तादृशकविकल्पनामात्रसिद्धौ वा?यदि द्वितीय पक्ष इत्युच्यते?तर्हि भवतु नाम यथा तथा न हि तेन शास्त्रशरणानां प्रयोजनम् "या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। ताः सर्वा निष्फला प्रेत्य तमोनिष्ठा हि ताः स्मृताः॥"इ त मनूक्तेः। 'तस्माच्छास्त्रं प्रमाणं ते कार्य्याकार्य्यव्यवस्थितौ' इति श्रीमुखोक्तेश्च। अथ श्रुतिसिद्धौ तदाऽपि नित्यसिद्धेश्वरतया जीवतया वा। द्वितीयः पक्ष इति चेत् तथाऽपि न तेन नित्यसिद्धेश्वरैकशरणानांप्रयोजनम् इन्द्रादिदेवतान्तरवत्। अथ नित्यसिद्धेश्वररूपौ तदा तयोरज्ञानादिकं कुत इति वक्तव्यम्। "यः सर्वज्ञः स सर्ववित् यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मा प्रतिष्ठितः। मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयंसंनिधाय तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टेपरावरे हिरण्मये परे कोशे विरजं ब्रह्म निष्कलं तच्छुभ्रं ज्योतिषां ज्योतिः र्यस्तदात्मविदो विदुः। न तत्र सूर्य्यो भाति न चन्द्र तारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति (मु. उ. ३) इत्यादिश्रुतेः स्वभावेनैवास्तसमस्ताज्ञानस्य स्वप्रकाशस्य सर्वप्रकाशकस्य स्वदर्शनमात्रेण मूलतः सर्वाज्ञाननाशकस्याज्ञानादिकं कथं तथात्वे कथं वा नोपनिषत्सम्मतनित्यसिद्धेश्वरत्वव्याघातः

अथ "रसो वै सः" इतिश्रुतेः-तस्य नित्यसिद्धरसरूपत्वात् रसेषु च शृङ्गारस्यैव मुख्यत्वात्तस्य शृङ्गाररसरूपत्वं वक्तव्यं । शृङ्गारस्य च स्त्रीपुरुषरूपालम्बनद्वयनिष्पाद्यत्वात् । तत्रापि विप्रलंभमानखण्डितादीनां वक्तव्यत्वात् तेषां च विप्रयोगमन्तराऽसंभवात् तत्रापि संयोगविप्रलंभात्मके रसे विप्रलंभस्यैव मुख्यत्वात्-विप्रलंभस्य च स्वकीयापेक्षया परकीयायामाधिक्यसंभवेन तत्रैव निरतिशयतया रसपुष्टेः संभवात् स्वयंभगवान् तदर्थं योगमायया, अनादित एवान्योऽन्यं जारभावं सम्पादितवान्-इतिरसश्रुतिमूलकश्रुतार्थापत्तिसिद्धमेवाज्ञानमिति तस्मिन्नज्ञाननिषेधो व्यामोहिकामायांशभूततमोगुणांशजनिताज्ञाननिषेध एव पर्य्यवस्यतीतिचेन्न । स्यादेवं यदि त्वदुक्तप्रक्रिया कापि श्रुतौ निरूपिता भवेत् । नच लौकिकरसशास्त्रानुभवाभ्यां सिद्धेयं प्रक्रिया समुपयुक्तत्वाद्रस-श्रुतिविचारेप्युपयुक्त वेतिवाच्यम् । स्यादेवं यदि बाधकं नोपलभ्येत तच्च तस्मिन्नेव रसप्रकरणे "यदा ह्येवैतस्मिन्नदृश्येऽनिरुक्तेऽनिलयेऽभयं प्रतिष्ठां विन्दतेऽथसोऽभयं गतो भवति । अथ यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयंभवति" इत्यत्रापि तत्राऽनात्मबुद्धिर्भयहेतुस्तस्मात्तादृशपरमात्मरसबुभुक्षुभिरणवप्यन्तरं न कर्तव्यमिति रसप्रकरणीयतादृशरसानुभवप्रकारदर्शिकैव श्रुतिर्वदतीति कुतस्तरां तद्विपरीतप्रकारवादिनीनां वाचां तत्र प्रवेशः ॥ नच "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इतिभूमविद्याश्रुतावज्ञानं वदति इतिवाच्यम् । भगवदनुभवकाले जीवानां वस्त्वन्तरस्फुरणं न भवति इत्येव श्रुतिः कथयति नतु भगवतो मुक्तभक्तानां वा तदानींविपरीतभानं भवतीति वदति त्वयाच राधायां भगवतोऽभिमन्युपत्नीत्वबुद्धिः भगवतिच राधाया जारबुद्धिरिति विपरीतभानं साध्यते अथ च तद्बुद्धेर्मायिकत्वं राधायाः स्वरूपशक्तित्वंपरमलक्ष्मीत्वं चोच्यते इति ।

अथ यदुक्तं तयोर्जारबुद्धिर्न व्यामोदिकामायाकल्पिताऽपि तु योगमायाकल्पिता, सा हि भगवतो लीलोपयिकी शक्तिरिति । तत्रोच्यते । योग

मायामायान्तरयोः को भेदः? अन्यत्रान्यप्रत्यायनमेव व्यामोहनं तच्चोभयत्र समानं? नचान्यत्र दुःखहेतुव्यामोहनमत्र तु सुखजनकमितिभेदः, लौकिक स्त्रीपुरुषप्रीतौ यद्व्यामोहनं भवति तदपि त्वदुक्तरीत्या समुत्कण्ठातिशय-पोषकत्वात् त्वदुक्तन्यायसामान्यात्सुखजनकमेवेति न भेदः। वस्तुतस्तु "मायां तु प्रकृतिं प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" दैवीह्येषा गुणमयी मम 'माया दुरत्यया' ज्ञानिनामपि चेतांसि देवी भगवती हि सा बलादाऽकृष्य मोहाय महामाया प्रयच्छति" इत्यादिश्रुतिस्मृतिसिद्धा एकैव सा। सैव योग-मायादिशब्दैरपि व्यपदिश्यते। तथाहि "ज्ञानिनामपि चेतांसि" इतिस्मृति-सिद्धमायाया व्यामोहकत्वं त्वया वक्तव्यम्, तस्याः 'बलादाकृष्य मोहाय महामाया प्रयच्छति' इति स्वशब्देनैव व्यामोहकत्वकथनात् तस्या एव च भागवते हरिवंशे च योगमायेत्यपि संज्ञाभिधीयते। तथाहि भागवते दशमे द्वितीयाध्यये "भगवानपि विश्वात्मा विदित्वा कंशजं भयम्। यदूनां निजनाथानां योगमायां समादिशत्, इति। अग्रे तस्या एव 'दुर्गेति भद्र-कालीति विजया वैष्णवीति-चेत्यादिना दुर्गाचण्डिकेत्यादिनामकथनात्' इति न सप्तशतीप्रोक्तात् भागवतोक्तामाया भिन्ना। रासप्रकरणेऽपि "योग-मायामुपाश्रितः" इत्यादिना सैवाभिधीयते जन्मप्रकरणीययोगमायातः रासप्रकरणीययोगमायाया भिन्नत्वे प्रमाणाभावात्। तत्रापि गोपव्यामोह-नार्थमेव तदुपयोगाच्च नतु गोपीव्यामोहनार्थम् प्रयाजनाभावात् "नासूयन्खलु कृष्णाय मोहितास्तस्य मायया" इत्यादिना गोपान्प्रत्येव स्वशब्देन तदुपयोगकथनात् गोपीः प्रति स्वंप्रति च तदुपयोगस्य क्वाप्य-कथनाच्च। यदि गोप्यः व्यामोहिताः भवेयुस्तर्हि कथं "कुर्वन्ति हि त्वयि रतिंकुशला स्म आत्मन्नित्यप्रिये पतिसुतादिभिरार्तिदैः किं' इत्यादिना भगवन्तमात्मत्वेन नित्यप्रियत्वादिभिश्च परब्रह्मासाधारणधर्मैः, जानीयुः। किंच त्वदुक्तदिशा जारत्वेनैवानुजानीयुः। नच यदि योगमाया व्यामोहिकामायातो न भिन्ना तर्हि तस्याः कथं "योगमाया महेशानी तस्याधि-ष्ठात्री" इत्युक्तलक्षणगोपालमंत्रतत्पीठाधिष्ठातृत्वं "नन्दगोपसुतं देवि पति-

न्मे कुरुते नमः" इत्युक्तं भगवत्प्रापकत्वंचेति वाच्यम्। तस्याधिष्ठातृत्वं न तत्स्वामित्वलक्षणमपि तु द्वारपालकत्वलक्षणमेव। तस्याः, भगवत्प्रापकत्वमपि स्वकृतव्यामोहापसारकत्वमात्रं, भगवता हि भगवदेकशरणातिरिक्तजीवानां स्वलीलायांप्रवेशाभावाय सा तत्र द्वारे स्थापिता। सा हि तत्रस्थिता भगवदेकशरणातिरिक्तान् जीवान्व्यामुह्य प्रपंचगोचरान् करोति। अतएव किलकमप्युच्यते भगवदेकशरणान् तु न व्यामोहयति। अपितु अनादिसिद्धस्वकृतव्यामोहमप्यपसारयति॥ इति। तदुक्तं गीतायां—

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥ इति।

अपि च तस्यां लीलायां मुक्तानामपि जीवानां केषांचिदेव "यमेवैष वृणुते स तेन लभ्यः" इतिश्रुत्युक्तदिशा तल्लीलार्थं भगवद्वृतानामेव प्रवेशो भवतु नान्येषामिति ज्ञानिनोऽपि लीलांशे व्यामोहयति। "ज्ञानिनामपि चेतांसि देवी भगवती हि सा। बलादाकृष्य मोहाय महामाया प्रयच्छति" इति॥ गोपकन्यानां तु तत्पूजनं सीतारुक्मिण्यादिकृततत्पूजनवत्कन्यकामर्यादारक्षार्थमेव, तासां नित्यसिद्धत्वात्। तदुक्तं ब्रह्मवैवर्ते श्रीराधिकांप्रति स्वयंकात्यायिन्यैव "व्रतंते लोकशिक्षार्थमि" त्यादिना तत्रैवेति।

यदप्युक्तं रसशास्त्रे परकीयायामेव रसातिशयो व्यवस्थाप्यते, इति तदप्यज्ञानविजृंभितमेव। भगवान्हि औपनिषदः पुरुषः "तं त्वौपनिषदं पुरुषं पृच्छामि" "नावेदविन्मनुते तं बृहन्तमि" त्यादिश्रुतेः। नतु लौकिककामादिशास्त्रसिद्धः। एवंच नहि लौकिककामादिशास्त्रबलेन तस्य स्वरूपमन्यथयितुं शक्यते। तदीयरसशास्त्रमपि नारदादिप्रणीतं भक्तिसूत्रादिकमेव। तत्र तु सर्वासांगोपीनां जारभावो निषिद्ध्यते एव, किमुत भगवतःसाक्षात्स्वरूपभूतायाः परमश्रियो वृषभानुनन्दिन्याः। तथाच तेषां सूत्राणि "नारदस्तु तदर्पिताखिलाचारता तद्विस्मरणे परमव्याकुलतेति॥१॥ अस्त्येवमेव॥२॥ यथा व्रजगोपिकानाम्॥३॥ तत्रापि न माहात्म्यज्ञानविस्मृत्यपवादः॥४॥ तद्विहीनं जाराणामिव॥५॥ नास्त्येव त-

स्मिन्स्तत्सुखसुखित्वम् ॥६॥ इत्यादि। किंच लौकिकरसशास्त्रेऽपि वात्स्यायनोये भारते वा न कापि तदुक्तसमर्थकानि वाक्यान्युपलभ्यंते महता प्रयत्नेनान्वेषणे कृतेऽपि। येन जारभावे रसातिशयः सिद्ध्येत। तद्विरुद्धानि तु बहूनि वाक्यानि तत्र विद्यन्ते। "सवर्णायामनन्यपूर्वायां शास्त्रतोऽधिगतायां धर्मोऽर्थः पुत्राः सम्बन्धः पक्षवृद्धिरनुपस्कृता रतिश्च" (३।१) इतिवात्स्यायने तृतीये ऽधिकरणे प्रथमेऽध्याये स्वकीयायामेवाकृत्रिमा रतिर्निरूपिता। तथा तत्रैव तद्भाष्येऽपि "अनुपस्कृता रतिः, अकृत्रिमा, विश्वासातिशययोगात्" इत्युक्तम्। परकीयायां तु नास्त्येव रसः तत्र लोकभयस्य धर्म्मभयस्य च सततं विद्यमानत्वेन रतिकालेऽपि विक्षेपस्य विद्यमानत्वात्। सति विक्षेपे कुतःसमृद्धारतिः सत्त्वोद्रेकासंभवात्। अतएव प्राकृतैरप्युक्तं (पत्ता खटका वृन्दा भटका) रममाणयोरपि जारयोः वाय्वादिनापि पत्रादिविक्षेपेऽपि रतिमध्येऽपि लोकागमनसंशयेन प्राणभयात्पलायनं भवति। आस्तिकानां तु स्वचित्तदोषात यथा कथंचित्कृतेऽपि तथा भूते कर्म्मणि बुभुक्षानिवृत्यर्थं निगीर्णविषमिव चेतो दुनोतीति सहृदयहृदयसाक्षिकम्॥ तथापि तत्र स्वकीयापेक्षयाऽधिकसुखाभिमानः पामराणामेव भवति, तेषां जन्मजन्मान्तरतः दूषितसंस्कारवत्त्वादिति। अथ गोपिकानां श्रीकृष्णे जारभावेऽपि न धर्मभयः तस्य सर्वात्मत्वेन सर्वपतित्वान्नवा लोकभयः तस्य सर्वेश्वरत्वात्, न विक्षेप इति चेत्तथापि गोपिकानां श्रीकृष्णे सर्वात्मत्वेन सर्वपतित्वेन सर्वेश्वरत्वेन च रतेः पूर्वं ज्ञानानन्तरमेव धर्मलोकभयादिकं न रतिसुखबाधकत्वेन समुदयात्। तच्च त्वया जारभावरसिकेन स्वीक्रियत एव नहि? तादृशज्ञाने जाते जारभावस्यैव विलयप्रसंगात्। लोकवेदलंघनक्रियया साधितस्य महत्वस्य विनाशप्रसंगाच्च। तस्माज्जारभावे नास्त्येवानुपस्कृता रतिः॥ अतएवोक्तं तत्रैव—

"विशुद्धिं विषयस्यादौ कारणानि च तत्त्वतः।

प्रसमीक्ष्य प्रवर्तेत परस्त्रीषु न [illegible]" ॥ इति।

तथाच वात्स्यायनकामशास्त्रविचारेणापि न जारभावे रसातिशयः। अनार्षग्रन्थानां तु प्रामाण्यमेव नास्ति तत्र प्रायो लेखकानां निजनिज-वासनाचित्रणस्यैव प्राधान्यात् । याश्च पारदारिकेऽवस्था दर्शिताः ता अपि कामावस्था एव न प्रेमाऽवस्था, अतएव न तत्र तत्सुखसुखित्वं कामप्रेम्णो नितरां विरुद्धस्वभावत्वात् यत्तु दौर्लभ्यप्रयुक्त उत्कर्ष उक्तः । तदपि न नहि दौर्लभ्यं वस्तुतत्त्वं वस्तुत उत्कर्षयति—अपितु औत्क-र्षमध्यासयत्येव नवा वस्तु दौर्लभ्यं कश्चित्समीहते तथासति दारिद्र्य-मेव सर्वः समीहेत तदानीं सर्वेषां भोग्यानां दौर्लभ्यत्—यदाकदा-चित् भोग्यकणिकालाभेऽपि परमानन्दानुभवात् । नैतावता दारिद्र्य-स्योत्कर्षः, दरिद्राणामानन्दस्य वा, तथा सति स एव सर्वैः काम्येत तस्माद्गोपिकानां श्रीकृष्णे प्रेमातिशयो न जारभावप्रयुक्तो नवा दौर्लभ्यप्रयुक्तः, अपितु तासां प्रेमशक्तिरूपत्वात् कृष्णस्य च प्रेम्णोनिस-र्गाधारनिरतिशयानन्दरूपत्वाच्च साक्षान्मन्मथरूपत्वादनादिनिजस्वरूप-महिमसिद्ध एवेति सुधीभिरवधेयम्

यदपि भरतमुनिनामोल्लेखनं तदपि-असंगतमेव । भरतमुनिप्रणीत रसशास्त्रे तादृशवाक्यानुपलंभात् तद्विपरीतसिद्धान्तोपलंभाच्च । तथाहि षष्ठाध्याये नाट्यशास्त्रे—"तत्र शृङ्गारो नाम रतिस्थायिभाव-प्रभव उज्ज्वलवेशात्मकः । यत्किंचिल्लोके शुचिरुज्ज्वलं भवति तच्छृंगा-रेणोपमीयते । यस्तावदुज्ज्वलवेशात्मवान् स शृङ्गारवान् , इत्युच्यते । यथा गोत्रकुलाचारोत्पन्नानि आप्तोपदेशसिद्धानि पुंसां नामानि। एवमेव आचारसिद्धो ह्युज्ज्वलवेशात्मकत्वाच्छृंगारो रसः । स च स्त्रीपुरुषहेतुक उत्तमयुवप्रकृतिः ।" इत्यादिनेति । अत्र आचारसिद्धत्वकथनात् स्फुटमौ-पपत्ये मुख्यरसत्वं व्यावर्त्यते । अतएव साहित्यकारैः "परोढ़ां वर्जयित्वा चे"त्यादिना परोढ़ाया मुख्यशृङ्गाररसालंबनत्वं निषिध्यते इति । 'लघु-त्वमत्र यत्प्रोक्तमि'त्यादि वाक्यानि तु न भरतमुनेः, नवा स्वकीयाभावापेक्षया जारभावस्य श्रेष्ठत्वबोधनाय । अपित्ववतारकाले श्रीकृष्णलीलायामापातः

प्राकृतानां प्रतीयमानस्य परोढ़ाभावस्य लौकिकपरोढ़ाभाववत् न लघुत्वं, परमार्थतः तस्य स्वकीयाभाव एव पर्य्यवसानात्. इति तत्तात्पर्य्यात्। नचैतावता श्रीकृष्णे परे ब्रह्मणि परमलक्ष्म्यां श्रीवृषभानुजायां च जारत्वभ्रमं स्वरूपविस्मृत्यादिकं च कल्पयितुं शक्यते तस्य बद्धजीवत्वापादकत्वादिति सच्छास्त्रदृष्ट्याऽलोचनीयम्॥

इदंत्विह विशेषतोऽवधेयम्—परोढ़ाभाववादिनः—श्रीराधा, साक्षात्महालक्ष्मीः। अन्यास्तु सर्वा नित्यवैकुण्ठेश्वरी द्वारकेश्वरीप्रभृतयो लक्ष्म्यः तदंशभूताः। परमन्यास्तु सर्वाः श्रीकृष्णस्यपत्न्यः, सर्वांशिनी परमलक्ष्मी श्रीराधा तु परकीयैव। यद्यपि—अभिमन्युगोपे तस्याः पतिभावो योगमायाकृतः न तु चिद्रूपस्तथापि स सदातन एव। तथा श्रीकृष्णेऽपि तस्याः, कृष्णस्य च तस्यां जारभावोऽपि योगमायाकृतो नतु चिद्रूपस्तथापि नित्यएव त्रिकालेऽपि बाधाभावात्। श्रीराधाकृष्णयोर्व्रजे दाम्पत्यं तु न पारमार्थिकं न वा भावमूलमत एव न चिद्रूपं नवा योगमायाकल्पितं तयोर्व्रजे विप्राग्निसाक्षिविवाहस्य भागवतादावश्रुतत्वात्। तस्माच्छ्रीकृष्णस्तामभिमन्युपत्नीत्वेनैव जानाति नतु निजपत्नीत्वेन लक्ष्मीत्वेन च, साऽपि तं निजोपपतित्वेनैव जानाति नतु कदाचिदपि निजपतित्वेनेत्यादि वदन्ति। तत्र पृच्छ्यते "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" ईश्वरींसर्वभूतानां तामिहोपह्वये श्रियम्" नित्यैवेषा जगन्माता विष्णोः श्रीरनपायिनी। यथा सर्वगतोविष्णुस्तथैवेषा द्विजोत्तम। देवत्वे देवदेहेयं मानुषत्वे च मानुषी विष्णोर्देहानुरूपां वै करोत्येषात्मनस्तनुम्।" इत्यादिश्रुतिस्मृतिसिद्धा या महालक्ष्मीः सैव राधापदवाच्या उताऽन्या। अथ सैव तर्हि तस्याः विष्ण्वेकपत्नीत्वस्य सर्वश्रुतिस्मृतिसदाचारसिद्धत्वात् तस्या अतत्पत्नीत्वकथनं महत्साहसम्—महापातकं च। नच तस्याः वैकुण्ठादिगतरूपे एव पत्नीत्वं नतु व्रजस्थरूप इति वाच्यम्। नहि स्थानभेदेन मूलं रूपं तस्य स्वाभाविकधर्म्माश्च भिद्यन्ते। महालक्ष्म्याः विष्णुपत्नीत्वं स्वाभाविको धर्म्मः, तथैव श्रुतिस्मृतिसिद्धत्वात् "अस्येशाना जगतो विष्णुपत्नी"

"विष्णुपत्न्यघोरास्येशाना" ( कृ.य.वे.तै. सं. ४ । ४ । १३ । ५ ) "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" ( शु.य.वे.सं. ३१ । १८ ) "स इममेवात्मानमंद्वेधा-पातयत्पतिश्च पत्नीचाभवताम्" ( बृ० १ ) इत्यादिश्रुतौ तयोर्विवाहमन्त्रैव दाम्पत्यस्य प्रतिपादितत्वात् । एवंच यदि भवतो राधिका व्रजाख्य-प्रदेशावच्छेदेनापि महालक्ष्मीः श्रुतिप्रतिपाद्या च । तर्हि तस्या विष्णुमात्र-पत्नीत्वं स्वीकर्तव्यम् । अथ जारभावलोभात्—तन्न स्वीकर्तुं शक्यते-तर्हि तस्याः श्रुतिसिद्धमहालक्ष्मीत्वात्सन्तोषःक्रियताम् । अथ श्रुतिस्मृतिसिद्ध महालक्ष्मीत्वं तु वृन्दावनेश्वर्यामेव । पत्नीत्वं तु वैकुण्ठेश्वर्यामिति । तत्तु न संभवति "श्रीश्चते लक्ष्मीश्च पत्न्यौ" इत्यादिश्रुत्यधिगतयो महालक्ष्मीत्वविष्णुपत्नीत्वयोः साहित्येनैव सद्भावाद् विच्छेदे प्रमाणा-भावाच्च । अथ "श्रीश्च ते लक्ष्मीश्च" इत्याद्युक्तप्रमाणसिद्धमहालक्ष्मीतो भिन्नैवेयं महालक्ष्मी-र्या महालक्ष्मीभूत्वापि कृष्णस्य परकीयैवेत्युच्यते ? तदा रुक्मिणीवैकुण्ठेश्वरीप्रभृतीनां तदंशत्वकथनमयुक्तमेव । अथ मन्त्र-तसिद्धापि महालक्ष्मी श्रुतिसिद्धा "राधया माधवो देवो माधवेन च राधिका विभ्राजते जनेषु" इत्यादिऋक्परिशिष्टश्रुतेः । "वामांगसहिता-देवी राधा वृन्दावृन्दावनेश्वरी" इतिपूर्वाचार्योद्धृतकृष्णोपनिषच्छ्रुतेश्च । तस्या लक्ष्म्यन्तराणामंशिनीत्वमपि श्रुतिसिद्धम् । "द्वे पार्श्वे चन्द्रावली राधिकाच यस्या अंशे लक्ष्मीदुर्गादिका शक्तिः" इतिपुरुषार्थबोधिनी-श्रुतेरितिचेन्न । नहि तत्र क्वचिदपि तस्या अभिमन्युपत्नीत्वमुक्तं परकी-यात्वं तत्सहचरितमन्यद्वा किञ्चित्त्वदुक्तम् , येन त्वदुक्तं स्यात् । प्रत्युत 'वामांगसहिता देवी'ति वामांगसाहित्यकथनात् "तस्याऽद्या प्रकृती राधा" इति–आदिप्रकृतित्वकथनाच्च तयोः स्वाभाविकदाम्पत्यसूचनात् , जार-भावः प्रतिषिद्ध्यत एव । नच तयोर्दाम्पत्ये विप्राग्निसाक्षिकविवाहो-ऽपेक्षितस्तयोर्दाम्पत्यस्य स्वरूपवदनादिसिद्धत्वात् । "स नैव रेमे स इममेवात्मानं द्वेधा पातयत्पतिश्च पत्नीचाभवताम्" इतिश्रुतेः । नहि जगत्पित्रोरनादिसिद्धयोर्दाम्पत्ये विप्राग्निसाक्षिकविवाहोऽपेक्षितः । तथा-

सति नित्यवैकुण्ठेश्वरयोर्लक्ष्मीनारायणयोरपि दाम्पत्यं न स्यात्। नचैवं। तवापि सम्मतम्। तस्मादयुक्तमेषा तव कल्पना।

नचास्तु नित्यलीलायां तथैव, अवतारलीलायां तु लोकव्यवहारानुरोधात् दाम्पत्यार्थं विप्राग्निसाक्षिकविवाह आवश्यकः। अन्यथा रुक्मिण्यादिभिः सहापि विवाहो निष्प्रयोजनः स्यादितिवाच्यम्। यथाऽवतारलीलायां मनुष्यवद्व्यवहरणेऽपि न तस्य मनुष्यत्वमपि तु परमब्रह्मत्वमेव। मनुष्यत्वं त्वासुरजीवदृष्ट्यैव तत्र ब्रह्मत्वस्य स्वाभाविकत्वात्। मनुष्यत्वस्यानुकरणमात्रत्वेन मायिकत्वाच्च अतएवोक्तं "अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो ममाव्ययमनुत्तमम्। मोघाशाशा मोघकर्म्माणो मोघज्ञाना विचेतसः।राक्षसीमासुरींचैव प्रकृतिं मोहिनीं-श्रिताः (गीत० अ० ७) इति। यथा वा व्याधशरसंयोगेन शरीरत्यागप्रतीतावपिवस्तुतो न कृष्णस्य शरीरत्यागःतादृशप्रत्ययनस्यासुरव्यामोहनार्थत्वेन मायिकत्वात्। तदुक्तं श्रीशुकेन "राजन्परस्य तनुभृज्जननात्ययेहा मायाविडंबनमवेहि यथा नटस्ये" त्यादिना। तथाऽन्यत्रापि "अज्ञत्वं पारवश्यत्वं विधिभेदादिकं तथा। तथा प्राकृतदेहत्वं देहत्यागादिकं तथा। असुराणां विमोहाय दोषा विष्णोर्नहि क्वचित्" इत्यादि। तथा च नित्यसिद्धदम्पत्योस्तयोः कल्पविशेषे अवतारलीलायां विवाहाभावप्रत्यायनमन्यपत्नीत्वप्रत्यायनंचासुरजीवव्यामोहार्थमेव। अवतारकाले यथा दैवजीवप्रबोधार्थमैश्वर्य्यमाधुर्य्यादिकंप्रकटयति तथाऽत्रासुरव्यामोहार्थं परतंत्रत्वादिकं जीवधर्म्ममपि प्रत्याययत्येव तत्र प्रमाणं तूक्तमेव "अज्ञत्वं पारवश्यत्वमि" त्यादि। अत एव ब्रह्मवैवर्त-शापदात्रा श्रीदाम्नैवोक्तम्। 'मूढा रापाणपत्नीं त्वां वदयन्ति जगतीतले।" इति। अत्र तस्यां परोढात्वज्ञानवतां मूढत्वं श्रीदाम्नैवोक्तम्। तस्मादवतारलीलायामपि कल्पविशेषे तयोर्विवाहाभावेऽपि वाह्यतःपरकीयावद्व्यवहरणेऽपि स्वाभाविक-दाम्पत्यं न हीयते। नवा परोढात्वमाधीयते चेति बोध्यम्।

वस्तुतस्तु तयोर्विवाहोऽपि जात एव सच वर्णित आदिपुराणादौ।

अत एव पञ्चरात्रे ज्ञानामृतसारसंहितायां श्रीराधासहस्रनाम्नि 'नन्दनन्दन-पत्नीच" "यशोदानन्दपत्नीच' इत्यादिनामपरिगणनम्। यस्मिन्कल्पे श्रीदामशापः, तस्मिन्कल्पेऽपि ब्रह्मणा भाण्डीरवने तयोर्विवाहः कृत एव। तदेतद्वर्णितमेव ब्रह्मवैवर्ते जन्मखण्डेपञ्चदशाध्याये गर्गसंहितायांच। गोपपत्नी तु छायाराधा तदन्यैव तदपि तत्रैवोक्तम्। श्रीदामशापानुरोधार्थं प्रकटविवाहो न कृतः। श्रीदामशापोऽपि भगवदिच्छयैवासुरव्यामोहार्थं, श्रीकृष्णस्य देहत्यागाद्युक्तिवत्। तदुक्तं श्रीदाम्नैव "मूढा रायाणपत्नीत्वां वदयन्ति जगतीतले" इति। अतएवोक्तं। शिवपुराणेऽपि "श्रीपार्वती-विवाहप्रसंगे मेनाचरितनिरूपणे 'कलावती सुता राधा साक्षाद्गोलोकवासिनी। गुप्तस्नेहनिबद्धा सा कृष्णपत्नी भविष्यति" इत्यादि। अधिकं तु युग्मतत्त्वसमीक्षायां द्रष्टव्यम्। तत्रैतस्य महता प्रपंचेनास्माभिर्निरूपितत्वादिति।

यदिच न मया वस्तुतस्तस्यां परकीयात्वं स्वीक्रियते अपित्वनादियोगमायाकल्पितः, अनादिसिद्धः परोढ़ाभावो नैतावता स्वाभाविकदाम्पत्यंहीयतेऽपितु तदपि न फलोपधायि व्रजभूमौ, फलोपधायि तु प्रपञ्चातीते-गोलोकादिधाम्न्येव, व्रजभुमौ तु परोढ़ाभाव एवेत्युच्यते। एवमपि राधाकृष्णयोः तादृशभावस्य ज्ञानमन्तराऽसिद्धेरज्ञानस्वीकारेबद्धजीवतुल्यतापत्तेरौपनिषदब्रह्मत्वासिद्धेरिति॥

इदंपुनरिहावधेयम्। पराढ़ाभाववादिभिर्भक्तै र्यथा श्रीराधायां-परकीयात्वाज्ञत्वपरवश्यत्वादिकं साधयति। तथा स्वीकारे तस्यां महालक्ष्मीत्वं तु सुदूरपराहतम्-उपनिषद्व्याससूत्रदृष्ट्या विचार्य्यमाणे तयोर्मुक्तजीवत्वमपि न संभवति। "निरंजनः परमं साम्यमुपैति" "स एकधा भवति द्विधा भवति" 'शतधा सहस्रधाच "स स्वराड्भवति' 'स यदा मातृलोककामो भवति तदा संकल्पादेवास्य मातरः समुत्तिष्ठति।" "यं कामं कामयते ते सर्वे समुत्तिष्ठन्ति" "संकल्पादेव तच्छ्रुते" "भोग-मात्रसाम्य लिंगाच्च।" इत्यादिश्रुतिसूत्राभ्यां मुक्तमात्रस्य सदैव सविभू-

तिकसमग्रब्रह्मानुभवो निरन्तरं सिद्धः। तदुक्तं काश्मीरिकेशवभट्टाचार्य्यैर्वेदान्तकौस्तुभप्रभायाम्।" संकल्पादेव तच्छ्रुतेः (ब्रह्म. सू. अ. ४ पा. ४ सू. ८) संकल्पादेव संकल्पमात्रादेवास्य सर्वप्राप्तिः, तच्छ्रुतेः। "संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" (छा. ८) इति। "संकल्पादेव पित्रादिसमुत्थानश्रवणात्" "लोके हि सत्यसंकल्पत्वाभावादेव प्रयत्नान्तरसापेक्षत्वं नहि परमात्मव्यतिरिक्तः कश्चित्सत्यसंकल्पोऽस्ति। मुक्तस्य तु तत्प्रसादात्तत्साम्यमुपगतस्य तथात्वमस्त्येवेति।" इति। "विकारावर्ति च तथाहि स्थितिमाह ॥ ४।४। १९ ॥ विकारावर्ति जन्मादिविकारशून्यं निखिलदोषास्पृष्टमाहात्म्यं निरतिशयकल्याणगुणाब्धि सविभूतिकं ब्रह्मैव मुक्तोऽनुभवति। तद्विभूत्यन्तर्गतत्वेन हिरण्यगर्भादिभोगानुभवोप्यविरुद्धस्तदाश्रितत्वात्सर्वस्येतिभावः। सविभूतिकब्रह्मानुभवितृत्वेनैव सर्वानुभवितृत्वात् मुक्तस्य तस्य 'सर्वेषु लोकेषु कामचारो भवति' इत्याद्युच्यते। भोगमात्रसाम्यलिंगाच्च. ब्र. ॥ ४। ४। २१ ॥ यथा सर्वज्ञत्वसर्वशक्तिमत्त्वादिसद्गुणाश्रयस्य परमात्मनः स्वविभूत्यनुभवानन्दरूपभोगः सदैकरसः तथा तन्मात्रभोगः सविभूतिब्रह्मयाथात्म्यानुभवितॄणां मुक्तानामपि समः "ब्रह्मविदाप्नोति परं" इत्युपक्रम्य "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तै. उ. ब्र.) इति। "निरंजनः परमं साम्यमुपैति" (मु. उ.) इत्यादिश्रुतिभ्यः। इति।

एवमेव श्रीरामानुजाचार्य्या अपि श्रीभाष्ये "संकल्पादेवतच्छ्रुतेः" "मुक्तः परं ब्रह्मोपसम्पद्य ज्ञानस्वरूपोऽपहतपाप्मत्वादिसत्यसंकल्पत्वपर्य्यन्तगुणक आविर्भवति" इत्युक्तम्। तमधिकृत्य सत्यसंकल्पत्वप्रयुक्ता व्यवहाराः श्रूयंते। 'स तत्र पर्य्येति जक्षन् क्रीड़न् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा" इति। किमस्य ज्ञात्यादिप्राप्तिः प्रयत्नान्तरसापेक्षा, उत परमपुरुषस्येव संकल्पमात्रादेव भवतीति विशये लोके राजादीनां सत्यसंकल्पत्वेन व्यवह्रियमाणानां कार्य्यनिष्पादने प्रयत्नान्तरसापेक्षत्वदर्शनात्, अस्यापि तत्सापेक्षता। इति प्राप्ते उच्यते-

"संकल्पादेवे,ति कुतः 'तत्छ्रुतेः' "स यदि पितृलोक कामो भवति तदा संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" इति हि संकल्पादेव पित्रादीनां समुत्थानं श्रूयते नच प्रयत्नान्तरसापेक्षत्वाभिधायिश्रुत्यन्तरं दृश्यते येन संकल्पादेव, इत्यवधारणस्य विज्ञानघन एवेतिवद्व्यवस्थापनं क्रियेत ।इति ।

पुनश्च "अतएवानन्याधिपतिः" ॥ ४ । ४ । ६ ॥ इतिसूत्रभाष्ये-

यतो मुक्तः सत्यसंकल्पोऽत एवानन्याधिपतिः । अन्याधिपतित्वं हि विधिनिषेधयोग्यत्वं विधिनिषेधयोग्यत्वे हि प्रतिहतसंकल्पत्वं भवेत् । अतः सत्यसंकल्पत्वश्रुत्यैवानन्याधिपतित्वं च सिद्धम् । अतएव च "स स्वराड्भवति" इत्युच्यते ॥ ६ ॥ "प्रत्यक्षोपदेशादितिचेन्नाधिकारिकमंडलस्थोक्तेः' ॥ इति-आधिकारिकाः, अधिकारेषु विनियुक्ताः हिरण्यगर्भादयः, मंडलानि तेषां लोकाः तत्स्था अपि भोगाः, मुक्तस्याकर्मवश्यस्य भवन्ति इत्यर्थः "तस्य सर्वेषु लोकेषु कामचारो भवती" त्यनेनोच्यते । अप्रतिहतज्ञानो मुक्तो विकारलोकान् ब्रह्मविभूतिभूतान् अनुभूय यथा कामं तृप्यति" इत्यर्थः ॥ यदि संसारिवन्मुक्तोऽपि विकारवर्तिनो भोगान् भुङ्क्ते तर्हि बद्धस्येव मुक्तस्याप्यन्तवदेव भोग्यजातमल्पं स्यात् तत्राह—"विकारावर्तिच तथाहि स्थितिमाह" विकारेजन्मादिके न वर्तते इति विकारावर्ति निधूतनिखिलविकारं निखिलहेयप्रत्यनीकगुणैकतानं निरतिशयानन्दं परं ब्रह्म सविभूतिकं सकलकल्याणगुणमनुभवति मुक्तः । तद्विभूत्यन्तर्गतत्वेन विकारवर्तिनां लोकानामपि मुक्तभोग्यत्वं । तथाहि परात्परेब्रह्मणि निर्विकारेऽनधिकातिशयानन्दे मुक्तस्यानुभवितृत्वेन स्थितिमाह । "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते ऽनिलयेऽभयं प्रतिष्ठां विन्दते । अथ सो ऽभयं गतोभवति ।" "रसो वै सः रस ँह्येवायं लब्ध्वाऽनन्दो भवति ।"(तै.उ.)इत्यादिका । तद्विभूतिभूतं च जगत्तत्रैव वर्तते तस्मिँल्लोकाः श्रिता सर्वे तदु नात्येति कश्चन" इतिश्रुतेः । अतःसविभूतिकब्रह्मानुभवन् विकारान्तर्वर्तिनो ऽधिकारिकमण्डलस्थानपि भोगान् भुङ्क्ते इति सर्वेषु लोकेषु कामचारो

भवति" इत्यादिनोच्यते इत्यादि।

परकीयावादिनां मते राधाकृष्णौ सर्वेश्वरौ परं च स्वात्मानमपि नित्यसिद्धसर्वेश्वरत्वेन न जानीतः। श्रीकृष्णस्यैव वृन्दावनस्थस्यैव प्रकाशविशेषा द्वारकास्थान्यपि रूपाणि श्रीराधाया एव कायव्यूहरूपा अंशविशेषा रुक्मिण्याद्याः परं सा द्वारकामपि न जानाति कुतो रुक्मिणीं सत्यां वा, सा, हि कृष्णस्य सर्वातिशायिनीशक्तिराह्लादिन्यादिपदाभिधेया परं कृष्णः तां सा च स्वात्मभिमन्युपत्नीत्वेन जानाति नतु कृष्णीयत्वेनापि, सा वैकुण्ठेश्वरीमहालक्ष्मीतोऽपि वरा तथाप्यभिमन्युतो नित्यमुद्विग्नचित्ता वृन्दावनेऽपि सुखं न लभते, यदा कदाचित् कृष्णसम्बन्धसुखंप्राप्य निश्वसिति। वैकुण्ठेश्वरी महालक्ष्मीतु वृन्दावनस्थं श्रीकृष्णं समग्रमेव सर्वावतारविशिष्टमपि निरन्तरंनिःसपत्नमनुवन्त्यपि राधाकिंकरीतोऽपि न्यूनतमा, इत्यादिपरस्परविप्रतिषेधयुक्तोविचारः। तस्मादेतेषांविचारो वेदादिसच्छास्त्रैकशरणानां न बुद्धिगोचरतामारोहतीति जानीमः। वस्तुतस्त्वेतत्कविकल्पितराधापेक्षया नित्यसिद्धविमलादिशक्तयो वरीयस्यः। ता हि वैकुण्ठवृन्दावनादौ सर्वत्र योगपीठेस्थित्वा सर्वान्रसानास्वादयन्ति। एतेषां राधा तु जारभावमात्रमन्यत्किंचिदपि न जानात्येवेत्यादि। तस्माद्विप्रतिषिद्धैवैषा कल्पनेति सुधीभिरवधेयम्?

तस्मात्सर्वतःपरिपूर्णा सर्वशक्तिमयी योगमायाया अपि योगमाया सर्वेश्वरस्य श्रीकृष्णस्य नित्यानपायिनी निरस्तसाम्यातिशया युगपदेव व्यूहवैभवगुणावतारलीलावतारपुरुषावताराद्यनेकरूपिणा भगवता साकं तत्तदनुरूपानन्तरूपैर्नित्यं रममाणा एकैव श्रीराधालक्ष्मीरमादिशब्दैर्व्यपदिश्यते। तयोर्दाम्पत्यं तु स्वभावत अनादिसिद्धमेव। तत्सर्वमुक्तं प्रपन्नकल्पवल्लीभाष्ये श्रीसुन्दरभट्टपादैः "बृंहति बृंहयति तस्मादुच्यते परंब्रह्म" इतिश्रुतेर्यथा स्वरूपेण गुणशक्त्यादिभिश्च बृहत्तमो वेदान्तप्रतिपाद्यः "सदा पश्यन्ति सूरयः" इतिश्रुतेर्नित्यमुक्तजनतानुभूयमानो भगवान् श्रीपुरुषोत्तमस्तथैवैषापि पत्नीति [illegible] भगवदीयगु-

णानामत्रातिदेशोऽवगम्यते। वक्ष्यमाणगुणादयोऽप्यत्रानुसंधेया इत्यर्थः" इत्यादिनेति।

एवंच सैव हि महालक्ष्मीः श्रीराधा परमे व्योम्नि नित्यवृन्दावने परिपूर्णतमरूपेण परिपूर्णतमेन निजप्रियेण श्रीकृष्णेन साकमनन्ताभिः स्वानुरूपाभिः सखीभिः सह नित्यं लीलायते। यदाच कार्य्यविशेषाद्वा निजेच्छया वा परिपूर्णतमः कृष्णोऽवतरति तदा साऽप्यवतरति। यदाच अंशविशेषभूतः सन्कृष्णोऽवतरति तदा साऽप्यधिकारिणि जीवे स्वसौन्दर्यादेरंशांशं प्रकटीकरोति। इति सापि राधाशब्देन व्यपदिश्यते एतादृशीनां साधनारूढानां साधनसिद्धानां च चरितमुद्दिश्यैव "सुबोधिनीजागरपुण्यवैभवात् प्रसन्न ईशो विधिवाक्यसत्यकृत्। चकार रासोत्सवनर्तनं सह कदा वने वै विहरामि राधया" इत्यादिवाक्यानि ता उद्दिश्यैव वस्तुतः परोढाभावादिप्रवादाः। इति।

यदिच नास्माकं श्रीराधायां तत्सहचरीषु वा परोढात्वस्य परोढाभावस्य वा सिद्धान्ततस्स्थापने तात्पर्य्यं सिद्धान्ततस्तु पूर्वमुक्तं सवमेवास्माकमपि परमाभीष्टमेव। तथापि येषां संस्कारविशेषपारतंत्र्यात्-परोढाभाव एव रसातिशयः तेषां परितोषाय तद्भावेऽपि श्रीकृष्णलीलायां चमत्कारातिशय एव नान्यत्रेव किंचिदपि न्यूनता, इत्यवबोधाय। किंच एतादृशी श्रीकृष्णलीलैव यत्राविरोधेनैव सर्वविधरसस्य निरतिशयता निदुष्टता चेति तयोः सर्वरसपूर्णत्वाय च निरूप्यते" इत्युच्यते तर्हि-उच्यतां नाम तादृशतात्पर्य्येण तावदंशवर्णने क्षत्यभावात्॥ अथात्रैते श्लोका भवन्ति—

एतादृशोऽपि भगवद्भक्ता लोके भवन्ति हि। स्ववासनानुसारेण वदन्ति रसपद्धतिम्॥ १॥ वासनादेशभेदाच्च कालभेदात्तथा जनैः। जाता भक्तानपि बुधान्बाधते बलवत्तरा॥२॥ तस्माच्छास्त्रविरुद्धा हि भक्तानामपि भारती। प्रमाणतां नचाप्नोतीत्येतत् तत्त्वविदां मतम्॥ ३॥ इति निश्चित्य सच्छास्त्रैः सद्वाक्यैरेव निर्णयः। क्रियतां कृष्णतत्त्वस्य तद्विरुद्धं च त्यज्यताम्॥४॥ इति

## अत्र प्रसंगात् योगमायास्वरूपविचारः क्रियते ।

इदन्त्विह विशेषतोऽवधेयम् । श्रीगोपालमन्त्रकल्पे गौतमीयतन्त्र-परमागमचूड़ामण्यादौ श्रीगोपालमन्त्रस्य कीलकम्, अधिष्ठातृदेवता च दुर्गाशब्देन योगमायाशब्देत चोच्यते । यथा "कृष्णः प्रकृतिरुद्दिष्टोदुर्गा-धिष्ठातृदेवता" इति । अस्य मन्त्रस्य कारणमाराध्यं च कृष्णः । अधि-ष्ठातृदेवता च दुर्गा इति तद्वाक्यार्थः । "योगमाया महेशानी तस्याधि-ष्ठातृदेवता" इत्यपि कल्पान्तरवाक्यम् । 'तथा ह्रीं कीलकम्' 'दुर्गा कीलकमुच्यते' इति च । तथा च दुर्गायोगमायादिपदवाच्यदेवीविशेषस्त-न्मंत्रस्याधिष्ठातृदेवता, इति सर्वकल्पसम्मतः सर्ववादिसम्मतश्च निर्णयः । अत एव तन्मंत्राधिष्ठातृतदाराध्ययोर्दुर्गाकृष्णयोरभेदमाह गौतमीयतंत्रे— "यः कृष्णः सैव दुर्गा या दुर्गा कृष्ण एव सः" इत्यादिनेति । तत्र जिज्ञास्यते सेथं दुर्गायोगमायादिपदवाच्यतया प्रकृते का विवक्षिता ? किं—"योगनिद्रा हरेरेषा तया सम्मोह्यते जगत्" इत्यादिना दुर्गासप्त-शत्यादौ प्रसिद्धा, भागवते जन्मप्रकरणे "योगमायां समादिशत्" "दुर्गेति भद्रकालीति विजया वैष्णवीति च । माया नारायणीशानी शारदेत्यम्बिकेति च ॥" इत्यादिना भगवद्दत्तवरा योगनिद्रा, उत भग दर्धांगरूपा परमाह्लादिनी परमलक्ष्मी श्रीराधैव । या "यः कृष्णः सा राधा या राधा कृष्ण एव सः" इत्यादिना बहुधा निरूप्यते, याच बृहद्गौत-मीयतंत्रे—गोपालमंत्रबीजव्याख्यायां "ककारः पुरुषः कृष्णः सच्चिदा-नन्दविग्रहः । ईकारः प्रकृती राधा" इत्यादिना प्रतिपाद्यते । ( तदेत-त्पूर्वतापिन्यां मंत्रव्याख्यायां द्रष्टव्यम् ) इति । तदत्र गोपालमंत्रोपासन-सम्प्रदायविदः श्रीनिंबार्कसम्प्रदायाचार्य्याः श्रीहरिव्यासदेवाचार्य्याः तथा वंगीयवैष्णवसम्प्रदायाचार्य्याः श्रीजीवगोस्वामिपादाश्च वक्ष्यमा-णनारदपञ्चरात्रपरमागमचूड़ामणिश्रुतिविद्यासंवादस्थगोपालकल्पवाक्येन निर्णयमाहुः—यत्प्रकृतमंत्रे अधिष्ठात्री देवता दुर्गायोगमायादिपदवाच्या श्रीराधैव परमेश्वरीति । तत्र परमागमचूड़ामणौ श्रुतिविद्यासंवादवाक्यानि—

यथा "जानात्येका परं कान्तं सैव दुर्गा तदात्मिका। या परा परमाशक्तिर्महाविष्णुस्वरूपिणी ॥ १ ॥ यस्या विज्ञानमात्रेण पराणां परमात्मनः। मुहूर्तादेव देवस्य प्राप्तिर्भवति नान्यथा ॥ २ ॥ एकेयं प्रेमसर्वस्वस्वभावा गोकलेश्वरी। अनया सुलभो ज्ञेय आदिदेवोऽखिलेश्वरः ॥ ३ ॥ भक्तर्भजनसम्पत्तिर्भजते प्रकृतिः प्रियम्। ज्ञायतेऽत्यन्तदुःखेन सेयं प्रकृतिरात्मनः। दुर्गेति गीयते सद्भिरखण्डरसवल्लभा ॥ ४ ॥ अस्या आवरिकाशक्तिर्महामायाऽखिलेश्वरी। यया मुग्धंजगत्सर्वं सर्वदेहाभिमानिनः ॥५॥"

इति। नन्वत्र दुर्गापदेन योगनिद्रादिविलक्षणा परमलक्ष्मीः श्रीराधैव विवक्षितेति न निश्चेतुं शक्यते? श्रीराधालक्ष्म्यादिविशेषकपदाभावादिति चेन्न। "एकेयं प्रेमसर्वस्वस्वभावा गोकुलेश्वरी" इति विशेषकवाक्यसद्भावात्। अपिच "जानात्येका परं कान्तं सैव दुर्गा तदात्मिका॥ इत्यत्र सैव दुर्गेत्येवकारो लोकप्रसिद्धदुर्गातो व्यवच्छेदायैव प्रयुक्तस्तेनापि तथा निश्चेतुं शक्यते एव। किंच "जानात्येका परं कान्तम्" इत्यंशेन प्रकृतदुर्गायाः कान्तत्वं भगवत्युपक्रम्यैव सर्वमुच्यते तेन प्रकृतदुर्गाया भगवत्कान्तात्वं निश्चीयते एव प्रसंगश्चापि तत्र तथाविध एव, नच लोकप्रसिद्धदुर्गाया भगवत्कान्तात्वं न वा तस्यास्तत्र प्रसंगः। तस्मात् "अखण्डरसवल्लभा" पर्यन्तवाक्येनोक्ता प्रसिद्धदुर्गातोविलक्षणैव दुर्गा भगवत्कान्ताभूताऽत्र प्रतिपाद्यते, या किल श्रीराधादिपदेनाख्यायते। अत एव तदर्थानुकूलव्युत्पत्त्यन्तरं पठ्यते "ज्ञायतेऽत्यन्तदुःखेनेन" इत्यादि। आवरिकाशक्तिवाचकत्वे तु दुःखेन गन्तुं ततुं शक्या, इतिदुर्गापदार्थः। अत एव च—

"अस्या आवरिका शक्तिर्महामायाऽखिलेश्वरी।
यया मुग्धं जगत्सर्वं सर्वदेहाभिमानिनः ॥"

इति पृथगुच्यते। अत्र 'अस्या' इतीदम्पदेन 'अखण्डरसवल्लभा' इत्यन्तवाक्येनोक्ता दुर्गा विवक्षिता। एवं च द्वे शक्ती अत्र विवक्षिते

भगवत्स्वरूपान्तर्भूता परमा शक्तिः, आवरिकाख्या मायाशक्तिश्च" यथा "या परा परमा शक्तिर्महाविष्णुस्वरूपिणी" इति। 'अस्या आवरिका-शक्तिर्महामायाऽखिलेश्वरी" इतिचेति। तत्र या परमा सा राधा। याच पर-माशक्तेरावरिका सा सैवाऽवरिका मायादिपदाभिधाना योगनिद्रा। तयो-रुभयोरेव दुर्गायोगमायादिपदवाच्यत्वं व्युत्पत्तिभेदात्। तत्र परमा राधास्वरूपा दुर्गा गोपालमंत्राधिष्ठात्री। 'यदुक्तम् 'कृष्णः प्रकृतिरुद्दिष्टो दुर्गाधिष्ठातृदेवता' इति। एवंच तदभिप्रायेणैव "यः कृष्णः सैव दुर्गा या दुर्गा कृष्णः एव सः" इति गौतमीयतंत्रे गोपालकल्पवाक्यम्।

नच प्रसिद्धपदमपहाय दुर्गापदेन तत्र राधाभिधाने किंबीजमिति वाच्यम्। दुर्ज्ञेयत्वदुराराध्यत्वादिबोधनायैव दुर्गापदेन तदभिधानात्। कल्पग्रन्थे बहुत्र प्रसिद्धपदमपहायाप्रसिद्धपदेन तदभिधानं दृश्यते। यथा योगियाज्ञवल्क्यकल्पानुसारिवाजसनेयिनां सन्ध्यावन्दने प्रणवस्य परमा-त्मदैवतस्यापि शब्दतोऽग्निदैवतत्वेनैवोपासनम् तथापि व्याख्यानतस्तत्राग्नि शब्दस्य परमात्मतात्पर्य्यकत्वकथनमिति। तथात्राऽपि बोध्यं परोक्षेणेति। याच द्वितीया मायाख्या-आवरिका शक्तिः सा गोपालमंत्रस्य तत्पीठस्य लीलायाश्चावरणकर्त्री 'तन्मंत्रस्य कीलकमुच्यते। 'ह्रीं कीलकम्' इति गो-पालकल्पात्। अत एव गोपालपीठे तन्मन्त्रस्य कोणत्रये न्यासः। पुरु-षार्थबोधिन्युपनिषदि "त्रिपुरादिचतुः शक्तिः सायुधा सपरिवारा सगणा तत्र पूज्यते" इति श्रुता त्रिपुराशक्तिरप्यावरिकैव तत्र पीठन्यासे विवक्षि-ता। सा हि चतुर्दिक्षु चतूरूपेणावस्थिता सलीलोपकरणं श्रीपुरुषोत्तममा-वृत्यानधिकृतेभ्यो रक्षति। गृहकपाटकीलकमिवाऽत्र मंत्रपीठयोरावरण-कीलकमुच्यते। इयमेव च त्रिपुरसुन्दरी पाद्मे वृन्दावनमाहात्म्येऽर्जुन कृतलीलादर्शने सर्वप्रथममर्जुनेन दृष्टा पूजिता चेति। इयमेव च भागवते हरिवंशे च जन्मप्रकरणे योगमायायोगनिद्रादिपदेनाख्यायते, नन्दगेहे प्रकटीभूता च भवति। इयमेव च दुर्गासप्तशत्यां "नन्दगोपगृहे जाता यशोदागर्भसंभवा" योगनिद्रा हरेरेषा तया सम्मोह्यते जगत्। ज्ञानिनामपि

चेतांसि देवी भगवती हि सा बलादाकृष्य मोहाय महामाया प्रयच्छति ॥"
इत्यादिना बहुधा स्तूयते । अत्राप्युच्यते–"अस्या आवरिकाशक्ति-र्महामायाऽखिलेश्वरी । यया मुग्धं जगत्सर्वं देहाभिमानिनः ॥" इति । इयमेव च कात्यायिनीदेवी या भगवदाज्ञया स्वकृतलीलाऽवरणस्यापनयार्थं भगवल्लब्धवरा भगवत्प्रेरणया गोपकुमारीभिः पूजिता । "कात्यायिनि-महामाये महायोगिन्यधीश्वरि । नन्दगोपसुतं देवि पतिं मे कुरुते नमः" इति।

एवंच जन्मप्रकरणे योगमायापदेनावरिका शक्तिरेव विवक्षिता । कंशादिव्यामोहनार्थं तदुपयोगात् । रासलीलाप्रकरणे तु "योगमाया-मुपाश्रितः" इति योगमायापदेन द्वे–'अपि योगमाये विपश्चिते, परमा शक्ति-रावरिका शक्तिश्चेति । तत्र परमशक्तेः श्रीराधाया रासलीलाधिष्ठातृ-रूपाया लीलारसानुभवार्थमेव परमोपयोगः । सा हि स्वस्वरूपेण स्वांश-भूताभिर्गोपीभिः स्वाविष्टगोपीभिश्च भगवन्तं रासरसमनुभावयति । तदुक्तं तत्रैव "अखण्डरसवल्लभा" इति । अत एव तस्या अधिष्ठातृत्वम् । आ-वरिकाख्यशक्तेस्तु लीलाऽधिकारहीनेभ्यो गोपादिभ्योऽन्येभ्यश्च प्राकृतेभ्यो लीलाया संगोपनार्थं लीलाया आवरणे समुपयोगः । यया व्यामोहिता लीलाधिकाररहिता जना न जानन्त्येवान्यथैव वा जानन्ति । यथोक्त-मत्रैव "अस्या आवरिका शक्तिः" इत्यादिनेति । अत्रेदम्पदेन तात्पर्य्येण लीलाधिष्ठातृश्रीराधाप्रधानस्य सर्वलीलापरिकरस्य परिग्रहः । तथा च प्राकृतेभ्यो लीलाया आवरणार्थमावरिकाशक्तिरूपाया योगमायाया उप-योग इतिसुधीभिरवधेयम् ।

एवंच श्रीराधायां कृष्णस्य परपत्नीभावः कृष्णे च राधाया उप-पतिभावो योगमायाकृत इति सुतरामसिद्धः । प्राकृतानां व्यामोहनार्थ-मेव तस्या उपयोगात् नतु तल्लीलापरिकराणाम् । परमशक्तिरूपायां श्रीरा-धायां श्रीकृष्णे चावरिकाख्यशक्तेरुक्तदिशा उपजीव्यविरोधात्सामर्थ्याभावा-च्चापि नान्यथाबुद्धिजनकत्वसंभवः । परमशक्तिरूपाया योगमायायाः श्रीराधा-यास्तु न स्वस्या एव स्वव्यामोहकत्वमात्मा, श्रयत्वादसंभवाच्चेति बोध्यम् ।

यथात्र स्वरूपशक्तिमायाशक्त्योरुपजीव्योपजीवकभावस्तथोक्तं पुरुषार्थबोधिन्यामाथर्वणोपनिषदि "तस्याऽद्या प्रकृती राधिका नित्या निर्गुणा सर्वाऽलंकारशोभिता प्रसन्नाऽशेषलावण्यसुन्दरी। अस्मदादीनां जन्मदात्री।।" इति "द्व पार्श्वे चन्द्रावली राधिका च। यस्या अंशे लक्ष्मी दुर्गाविजयादिशक्तिरिति।।" इतिचेति। पद्मपुराणे च वृन्दावनमाहात्म्ये-पार्वतीमहेश्वरसंवादे—

तत्प्रिया प्रकृतिस्त्वाद्या राधिका परदेवता।
तत्कलाकोटिकोट्यंशा दुर्गाद्यास्त्रिगुणात्मका।। इति

तत्रैव च श्रीवृषभानुगेहे नारदकृतश्रीराधास्तुतौ—

इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिस्तवेशितुः।
तवांशमात्रमित्येषा मनीषा मे प्रवर्तते।।
मायाविभूतयोऽचिन्त्यास्तव मायार्भमानिनः।
परेशस्य महाविष्णोस्ताः सर्वास्ते कलाकलाः।।
आनन्दरूपिणी शक्तिस्त्वमीश्वरी न संशयः।। इति

सर्वज्ञसूक्ते च—

ह्लादिन्या संविदाश्लिष्टः सच्चिदानन्द ईश्वरः।
स्वाविद्यासंवृतो जीवः संक्लेशनिकराकरः।। इति

विष्णुपुराणे च—

ह्लादिनी सन्धिनी संवित्त्वय्येका सर्वसंश्रये।
ह्लादतापकरीमिश्रा त्वयि नो गुणवर्जिते।। इति

पद्मपुराणे वृन्दावनमाहात्मये मंत्रव्याख्यायाम्—

वहिरंगैः प्रपंचस्य स्वांशैर्मायादिशक्तिभिः।
अन्तरंगैस्तथा नित्यविभूतैस्तैश्चिदादिभिः।।
गोपनादुच्यते गोपी राधिका कृष्णवल्लभा।
सर्वलक्ष्मीस्वरूपा सा कृष्णाह्लादस्वरूपिणी।
अतः सा प्रोच्यते विप्र ह्लादिनी तु मनीषिभिः।।

इत्यादि पूर्वतापिन्यासन्ते द्रष्टव्यम्।

अन्यच्च नारदीयब्रह्मवैवर्तादिषु पुराणेषु द्रष्टव्यम्। तथाच तादृश-लीलानुभवाधिकारहीनानामेव तत्रान्यथाबुद्धिरित्यवधेयम्।

यच्च भागवते कासांचिद्गोपीनामन्यपूर्वात्ववर्णनं तद्भगवत्प्रेम-भक्तिमाहात्म्यख्यापनाय। एतादृशी भगवत्प्रेमभक्तिर्यया पातिव्रत्यसदृशा-साधारणस्त्रीधर्मत्यक्तानामपि गोपीनां भगवदसाधारणप्रसादप्राप्तिरिति। अपिच भगवतः श्रीकृष्णस्य कर्मवश्यत्वाभावबोधायापि तथा वर्णनम्। यथाच बृहदारण्यके कौषीतक्युपनिषदि च श्रूयते–"स न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयान् एष सर्वेश्वरः" इत्यादि। अपिच भगवतः सर्वाधिकप्रियत्वाकर्षकत्वादिबोधाय तथा वर्णनम्। यथैवं विधः प्रेमास्पदो भगवान् यं दृष्ट्वा कुलवधूजना अपि लोकवेदमर्य्यादां समुल्लंघ्य तमभिगग्मुरिति इत्यादिकमूहनीयम्।

नेयं प्रवृत्तिर्मम खण्डनार्था न मण्डनार्था किल वादिनां मतेः।
स्वबुद्धिशोधाय मम प्रवृत्तिस्तेन प्रसीदत्वखिलान्तरात्मा॥ इति दिक्

( टिप्पणी—पृ० २४६ पं० २२–श्रीहरिव्यासदेवाचार्य्याः, इत्य-नन्तरम् × सिद्धान्तरत्नांजलौ × इति। पं० २३–श्रीजीवगोस्वामि-पादाश्च, इत्यनन्तरम् × श्रीराधाकृष्णार्चनदीपिकायाम् × इत्यधिकं पठनीयम् )॥ २६॥

मू० सा होवाच गान्धर्वी कथं वाऽस्मासु जातोऽसौ गोपालः कथं वा ज्ञातोऽसौ त्वया मुने कृष्णः को वाऽस्य मन्त्रः किं वाऽस्य स्थानं कथं वा देवक्यां जातः को वाऽस्य ज्यायान्नाम भवति कीदृशी पूजा गोपालस्य भवति साक्षात्प्रकृतिपरो योऽयमात्मा गोपालः कथं त्ववतीर्णो भूम्यां हि वै॥ २७॥

एतावदुपदेशेन अस्माकं स्वामी श्रीकृष्ण एवयः आदित्यवर्णतमसः

परस्तात्" "अक्षरात्परतः परः" इत्यादिश्रुत्युक्तलक्षणः कार्य्यकारणातीत तमःपरमात्मा नान्य इतिगोपीभिरवधारितम्। यथा च वक्ष्यति "साक्षात्प्रकृतिपरोऽयमात्मा गोपालः" इति। अथ तस्यैव परिशुद्धये पुनः प्रश्नाष्टकं पृच्छति "सा होवाचेत्यादिनेति। तत्रायमाशयः। यदि कृष्ण एव सर्वतो निरतिशयज्ञानानन्दमयोऽपहतपाप्मा सत्यकामः सत्यसंकल्पः, परमात्मा तर्हि किमर्थमस्मासु जातः, आप्तकामत्वेन प्रयोजनविरहात्। अपहतपाप्मत्वेन कर्म्मबन्धनाभावाच्चेत्ययमेकः प्रश्नः। अथ विद्यादार्ढ्यायऽय द्वितीयः गुरुपरंपराप्रश्नः। तत्प्राप्तये उपासनार्थं तृतीयोमन्त्रप्रश्नः। पूजाशब्दोऽत्रोपासनापरः तत्र द्रव्ययज्ञरूपपूजाया अप्यन्तर्भावात्। तस्यां ध्यानादीनां वक्ष्यमाणानामनन्तर्भावाच्च। प्रकारान्तरेण तद्विज्ञानार्थमुपासनासौकर्य्यसिद्ध्यर्थं च चतुर्थःस्थानप्रश्नः। पंचमः 'कथं वा देवाक्यां जन्म, इति यद्यपि प्रथमप्रश्नगतार्थ इव भाति तथापि न पुनरुक्तिः प्रथमप्रश्नस्य प्राकट्यपरत्वादितरस्य जन्मपरत्वादिति। मतान्तरे तु श्रीकृष्णस्य यशोदायां देवक्यां च द्विधा प्राकट्यनिरूपणात्। तत्र मूलरूपेण यशोदायां व्यूहरूपेण देवक्यामिति तदेव प्रश्नभेदक इत्याद्यपिबोध्यम्। षष्ठः सप्तमश्च नामविषयकपूजाविषयकौ च प्रश्नावप्युपासनार्थावेव। अष्टमः प्रश्नस्तु अवतारप्रयोजनविषयकः। तेषां प्रश्नानामुत्तराणि पश्चात्संगृह्य दर्शयिष्यते मया। यान्युत्तराणि ब्रह्मनारायणसम्वादेनोक्तानि तत्र यद्यपीदमस्य प्रश्नस्योत्तरमिदमस्येत्येवं रूपेण स्फुटतया नोक्तानि। तथापि सर्वाण्येवोत्तराण्युक्तानि भवन्त्येव। तथाहि न भवतीनां कृष्णस्य च जीववत् पृथक्जन्म। अपि तु निजस्वरूपात्मिकाभिरनपायिनीभिर्भवतीभिःसहैव कृष्णो निजाप्राकृतेऽक्षरे धाम्नि नित्यंलीलायते। इहापि तादृश स्वरूप एव भवतीभिःसह प्रकटीभूत-इति। तदेद्-धामस्वरूपनिरूपणेन "व्रजस्त्रीजनसंभूतः" इत्यादिनाचसूचितम्। द्वितीयप्रश्नस्तु "ब्रह्मणे ब्रह्मपुत्रेभ्यो नारदात्तु श्रुतं मया' इत्यनोत्तरितः। तृतीयस्तु "क्लींमोंकारयोरेकत्वं वदन्ति ब्रह्मवादिनः इत्यनेनोत्तरितः। चतुर्थस्तु "तासां मध्ये "साक्षाद्ब्रह्म-

गोपालपुरी" त्यनेन । पंचमस्य नास्य देवक्यां जन्म उत्पत्तिलक्षणः किंतु प्रादुर्भाव एव भक्तपरितोषार्थं महाराजस्य प्रजागृहगमनादिवत् तदेतद्येन लोकास्तुष्टाभवन्ति, इत्यादिप्रश्नवाक्येन सूचितम्। मातृपितरावनन्तभाव्य प्रादुर्भावमात्रेण तथाविधवात्सल्यरसपरिपोषासंभवादिति । ब्रह्मकृष्णनारायणगोविन्दगोपालादिसर्व एव तस्य ज्यायान्नाम भवति। स्वार्थसंग्राहकत्वात् "ओंकारक्लींकारौ सर्वे मुख्यौ तत्र सर्वनाम्नामन्तर्भावात्। आत्मात्मीयसर्वसमर्पणपूर्वकं स्वस्य तदात्मकत्वतदीयत्वलक्षणभावनमेवमुख्यमुपासनं तत् ' ओंतत्सद्गोपालः, सोऽहमस्मीति भावयेत्" इत्यादिनावक्ष्यति अवतारेषु इच्छैव हेतुः सृष्टाविव "लोकवत्तु लीलाकैवल्यम्" इति । २७॥

अथ तेषां सर्वेषां शब्दत उक्तानां भावसूचितानां च प्रश्नाना मुत्तरंवक्तुं तादृशनिखिलप्रश्नोत्तरमयं पूर्वतापिन्यां "ब्रह्मसदनं चरतो मे ध्यातः स्तुतः परमेश्वरो गोपवेशो मे पुरुषः पुरस्तदाविर्बभूव" इत्यनेन सूचितमेवार्थं कार्य्यब्रह्मपरब्रह्म (ब्रह्मनारायण) संवादात्मकं दुर्वासोमुखेन श्रुतिःस्वयमेव पठति ॥

मू० स होवाच तां ह वै एको हि वै पूर्वं नारायणो देवः ॥ २८ ॥ यस्मिँल्लोका ओताश्च प्रोताश्च तस्य हृत्पद्माज्जातोऽब्जयोनिस्तपायित्वा। तस्मै वरं ददौ ॥२९॥ स कामप्रश्नमेव वव्रे तं हास्मै ददौ ॥३०॥ सहोवाचाब्जयोनिर्योऽवताराणां मध्ये श्रेष्ठोऽवतारः को भवति येन लोकास्तुष्टा देवास्तुष्टा भवन्ति यं स्मृत्वा मुक्ता अस्मात्संसाराद्भवन्ति कथं वास्याऽवतारस्य ब्रह्मता भवति ॥ ३१ ॥

सहोवाचेत्यादि। स दुर्वासा ह निश्चयेन प्रश्नतत्त्वमुत्तरतत्त्वं चावधार्य्य आह इत्यर्थः । पूर्वं हीति पूर्वं "यस्मादव्यक्तादव्यक्तमेकाक्षरं तस्मा-

क्षरान्महान्" इति वक्ष्यमाणलक्षणाव्यक्तमहदादिसृष्टेः पूर्वं एकः, विभक्त-नामरूपात्मकद्वितीयरहितः॥ 'नारायणो देवः' नारायणाख्यः परमकारण-भूतः परमात्मा श्रीलक्ष्मीपतिरेवासीत्, वै शब्द एवकारार्थकः। आसी-दिति क्रियाऽध्याहारः॥ एवकारार्थको वै शब्दः तदानीमन्ययोगं व्यवच्छिनत्ति तेनाव्यक्तादिसृष्टेः पूर्वं श्रीलक्ष्मीपतिरेवासीन्नान्यत् किमपी त्युक्तं भवति॥ एवमेव निरूपितं महोपनिषदि "तदाहुः। एको ह वै नारायण आसीत्। न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावा पृथिवी न नक्षत्राणि न सूर्यो न चन्द्रमाः। स एकाकी न रमते (नर-एव) तस्मिंश्चतुर्दश पुरुषा जायंते एका कन्या दशेन्द्रियाणि पंचदशी बुद्धिः। भूतानि पंच तन्मात्राणि पंच महाभूतानि। स एकः पंचविंशतिः पुरुषः। तत्पुरुषः पुरुषो निवेश्य नास्य प्रधानसंवत्सरा जायन्ते। "संवत्सरादधि जायन्ते" इत्यदि। अत्र देवशब्दप्रयोगात् नारायणशब्द-प्रयोगाच्च सुबालोपनिषत्प्रक्रियापि स्मारिता भवति तत्रापि हि तृतीय-पर्य्याये षष्ठखण्डे–'नैवेह किंचनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायान्ते" इत्यंशेन छान्दोग्ये श्वेतकेतुविद्यायाम् "तद्धैक आहुरसदेवेद-मग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत। कुतस्तु खलु सोम्यैवं स्यात्। इति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीत् एक मेवाद्वितीयम्" इतिवत् परमतमनूद्य तद्विपरीतसमूलसाधारांस्वसंमतां सृष्टिमाह–"दिव्यो देव एको नारायणः" इति। तत्रैव च प्रलयेऽपि सर्व-मविभक्तनामरूपतया "चक्षुश्च द्रष्टव्यंच नारायणः" इत्यादिनाऽन्तर्भा-वयन्नाह–'सर्वं नारायणः' इति॥ अत्र आसीदिति क्रियाशेषः। तेन तत्राप्येवमेव निरूपिम्। 'एतेन "सदेव सोम्येदमग्र आसीत्" इति सच्छ-ब्दोऽपि नारायणस्यैव पर्य्यायान्तरमिति न वाक्यभेदः।

ननु सुबालमहोपनिषदादौ भवतु नारायणशब्दो मूलकारणपरः, इह तु तथा न संभवति—अग्रे 'सहोवाच तं हि वै पूर्वंह्येकमेवाद्वितीयं ब्रह्मासीदि" तिमूलकारणस्य ब्रह्मणः पूर्वकालीनत्वेन स्वभिन्नत्वेन च निरू-

पणादितिचेन्न । तमोऽक्षराव्यक्तमहद्भूतादितन्मात्राऽऽकाशादिपंचक-सृष्ट्यनन्तरं ब्रह्मोत्पत्तेरिति बहुकालव्यवधानात् । ब्रह्मोपदेशकाले तेषां भूतत्वेनोक्तेः। 'अहमासमि' त्यनुक्त्वा 'ब्रह्मासीदि' त्युक्तिस्तु ब्रह्मादिशब्द प्राधान्येन निरूपकाणां कारणवाक्यानां, नारायणादिशब्दप्राधान्येन निरूपककारणवाक्यैः सहैकवाक्यताबोधायैव । अत एवाग्रे तत्रैव "अक्षरोऽहमोंकारोऽहमि" त्यादिना सर्वस्य स्वात्मकत्वोपदेशः ॥ न च तृतीयपुरुषाऽवतारादूगर्भजलशायिनारायणात् ब्रह्मण उत्पत्तिर्भवति नतु मूलपुरुषात् तस्मादत्र ब्रह्मोत्पत्तिकथनान्नात्र नारायणोमूलरूप मितिवाच्यम् । प्राथमिकसृष्टौ मूलपुरुषादपि ब्रह्मोत्पत्तिरित्यग्रे व्यक्ती भविष्यति, इति । यदि तदानीं नारायण एवासीत्—नान्यत्किमपि तर्हि, इदानीमुपलभ्यमानं जीवजड़ात्मकं जगत्किमासीत् नासीदितिचेत् तर्हि, असत्कार्य्यप्रसंगः । आसीदित्युच्यते तर्हि नारायण एव आसीन्नान्य-दिति कथमिति तदानीन्तननारायणस्वरूपवर्णनेनैवोत्तरमाह—"यस्मि-ल्लोका ओताः प्रोताश्चेति ।" यस्मिन्परमदेवे नारायणे लोकाः लोक-पदोपलक्षितानि जीवजड़ात्मकानि जगन्ति । 'ओताप्रोताश्चेति' अत्रो-तप्रोतशब्दौ सम्मील्य एकमेव परमलयाख्यमर्थं बोधयति । तदुक्तं सुबालोपनिषदि द्वितीयखण्डे—"पृथिव्यप्सु प्रलीयते आपस्तेजसि प्रलीयन्ते तेजो वायौ विलीयते वायुराकाशे विलीयते आकाशमिन्द्रि-येषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ वि० भूतादिर्महति वि.महा-नव्यक्ते विलीयतेऽव्यक्तमक्षरे विलीयते अक्षरं तमसि विलीयते तमः परे देवे एकीभवति परस्तान्न सन्नासन्नासदसदित्येतन्निर्वाणानु-शासनमिति वेदानुशासनमिति वेदानुशासनमिति ॥" अत्र स्फुटम्—सर्वेषां पृथिव्यादितमः पर्य्यन्तानां कार्य्याणां परे देवे नारायणे एकी-भावेन स्थितिरुक्ता । तृतीयपर्य्यायेऽपि तत्रैव "दिव्यो देव एको नारायणश्चक्षुश्च द्रष्टव्यं च नारायणः" इत्युपक्रम्य "सर्वं नारायणः" इत्यनेनेदमेवोपसंहृतम् । तस्मात्सर्गप्राक्काले आदिनारायणात्मनैव सर्वे-

षां स्थितिः। तदेवोक्तं श्रुत्यन्तरे "आत्मैवेदमग्र आसीत् पुरुषविधः।।" "ब्रह्म वा इदमग्र आसीत्" "सदेव सोम्येदमग्र आसीत्" इत्यादि। एतेषु सर्वत्र इदंशब्देन सर्गकाले नामरूपाभ्यां विभक्तस्य जीवजडात्मकप्रपंचस्य परामर्शः, तस्य परमात्मरूपेण स्थितिश्च प्रतिपाद्यते। तस्मात्सर्गप्राक्काले आदिनारायणात्मनैव सर्वेषां कार्य्याणां स्थितिः, तत एव प्रादुर्भावश्चेति। यथोक्तं सुबाले 'तदाहुः किं तदासीत् तस्मै सहोवाच न सन्नासन्न सदसदि"ति ग्रन्थखण्डे सत्पदेन स्थूलकार्य्यस्य पृथिव्यादेरसत्पदेन सूक्ष्मकार्य्यस्याकाशादितमःपर्य्यन्तस्य सदसत्पदेनोभयमिलितस्य स्वातंत्र्येण सत्त्वं प्रतिक्षिप्य तेभ्यो विलक्षणस्याग्रिमखण्डे लयवाक्ये-उक्तस्य परदेवाख्यस्याविभक्तनामरूपात्मकस्य चिदचिच्छक्तिकस्य परदेवस्य सत्त्वमाक्षिप्य तत एव "तस्मात्तमः संजायते तमसाभूतादिर्भूतादेराकाशः" इत्यादिना सर्वसृष्टिमाह तत्र लयप्रकरणे द्वितीयखण्डेऽन्तर्य्यामिप्रकरणेऽष्टमखण्डेचोक्तानामक्षराव्यक्तमहदिन्द्रियतन्मात्राणां मध्ये प्रथमत्रयाणां तमसि, इन्द्रियतन्मात्राणां भूतादावन्तर्भावेन सृष्टिश्चिंतनीया। एवमेव महोपनिषद्यपि "एको ह वै नारायण आसीत्" इत्यादिनानुपदोक्त प्रकारेण नारायणमात्रसत्त्वमुपपाद्य तत एव "स एकाकी नर एव तस्मिन् चतुर्दश पुरुषा जायन्ते एका कन्या दशेन्द्रियाणि पञ्चदशी बुद्धिः। भूतानि पंच तन्मात्राणि पञ्च महाभूतानि स एकः पञ्चविंशतिः पुरुषः" इत्यादिना सर्वसृष्टिमाह। इति सर्वेषां कार्य्याणांसर्गप्राक्काले नारायणात्मनैव स्थितेः, सर्गकाले तत एवाविर्भावाच्च नासत्कार्य्यवादप्रसंगो न वा एकत्वश्रुति विरोधः ।। इति।

नारायणशब्दस्तु पुरुषाकारस्य श्रीलक्ष्मीपतेरेव संज्ञाः "पूर्वपदात्संज्ञायामगः" इत्यनेन संज्ञायामेव णत्वविधानात्। तस्य पुरुषाकारत्वं तु, आथर्वणिकपाठानुसारिमहोपनिषदि 'स एकाकी नर एव' इत्यंशेन नराकारत्वसमर्पणादेवावगम्यते। तदुपपादितं। पूर्वतापिन्यां 'सत्पुण्डरीकमि' त्यस्य व्याख्यान इति तत एवावधेयम् तेन न देवान्तरवादप्र-

स्रंग:। एतेन "एको रुद्रो न द्वितीयाय तस्थु:' 'यदा तमस्तंन्न दिवा न रात्रिर्न सन्न चासञ्छिव एव केवल:' इत्यादिश्वेताश्वतरादिश्रुतयोऽपि व्याख्याता:। इदमत्र बोध्यम्॥ श्वेताश्वतरे हि 'किं कारणं ब्रह्म" इत्यादिना ब्रह्मजिज्ञासामाक्षिप्य तदुत्तरत्वेन "ते ध्यानयोगानुगता अपश्यन्— देवात्मशक्तिं स्वगुणैर्निगुणामि'' त्यादिनोपक्रम्य 'तदा देवमविज्ञाय' 'दु:खस्यान्तो भविष्यति'' त्युपसंहारपर्य्यन्तवाक्येन' परमकारणं विचारितम्। तत्रोपक्रमे शब्दान्तरापेक्षया देवशब्दस्यैव परमकारणनामधेयत्वेन बहुशोऽभ्यास:। तथापि तत्र तत्रावान्तरवाक्येषु कारणवाक्येष्वपि च रुद्र-शिवादिशब्दानामप्यभ्यासो दृश्यते तेन प्रतीयते यत्-श्वेताश्वतरे देवादि-शब्दो शिवाख्यदेवतापर एवेति। तस्मात् श्वेताश्वरतरपर्य्यालोचनया पंचवक्त्रत्रिनेत्राकारदेवताविशेष एव सर्वकारणत्वपर्य्यवसानं स्यादिति। यद्यपि तत्राकारो न श्रूयते तथापि शिवरुद्रादिशब्दानां तादृशदेवतायामेव बहुश: प्रयोगस्य लोकप्रसिद्धेरिति।

सुबाले तु परमकारणं प्रथमपर्य्याये परदेवशब्देनैवाभिहितम्— "तम: परेदेवे एकी भवति परस्तान्न सन्नासन्न सदसत्'' इति तत्रैव सर्वलय श्रुते:। तथापि तत्र परदेवशब्द: किंपर इत्याकांक्षायां तृतीयपर्य्याये परदेवत्वेन कारणनिरूपकप्रथमखण्डवदेव ''नैवेह किंचनाग्र आसीद-मूलमनाधारमिमा: प्रजा: प्रजायन्ते'' इतिशून्यवादमाक्षिप्य "दिव्योदेव एको नारायण:" इत्युक्तम्। तेन सुबाले देवशब्दो नारायणपर एव इति-निर्णीतो भवति श्वेताश्वतरे रुद्रादिशब्दानामिव सुबाले–विष्ण्वादिशब्दानां तदाकारसमर्पकानामभ्यास: समान एव। नारायणशब्दस्तु लक्ष्मीपते रेव संज्ञेत्युक्तं प्रसिद्धञ्च,तेन सुबालपर्य्यालोचनतया परदेवो श्रीलक्ष्मीप-तिरेव स एव परमकारणमिति प्रतीयते। तत्र जिज्ञास्य:–क: परमकारणम् पंचवक्त्र स्त्रिनेत्रो वा पुरुषकारो विष्णुर्वा? नचोभयमपि संगतं वेदोक्त-त्वात् "श्रुतिद्वैधं तु यत्रस्यात्तत्र धर्म्मावुभौ स्मृतौ" इतिमन्वाद्युक्ते:॥ "उदिते जुहोति अनुदिते जुहोति" इत्यादौ तथा दर्शनाच्चेति वाच्यम्।

अनुष्ठेयस्य कर्मणः पुरुषतंत्रत्वेन तत्र तथा संभवात्। ब्रह्मणस्त्वखण्डत्वेनैकरसत्वेनैकत्वेन च तथा निर्णेतुमशक्यत्वात्-ईश्वरद्वैतापत्तेश्च। एतेन कल्पभेदेन व्यवस्थेत्यपि निरस्तम्। नच ऋषिमतभेद इत्यपि शंक्यम्। अपौरुषेयवेदमूर्धन्यरूपाया उपनिषद ऋषितंत्रत्वाभावात्। तत्तच्छाखाद्रष्टृत्वन्तत्र तत्तदृषित्वंद्रष्टृत्वमात्रेण पठितत्वमात्रेण वा उपनिषदस्तत्तदृषिनामसम्पृक्तनामधेयत्वात्। 'समग्रवेदस्यैवेश्वरनिश्श्वसितत्वेनैकग्रन्थत्वादेकवाक्यतायां परमावश्यकत्वाच्चेति।

अथैकमेव परं ब्रह्म, अनन्तप्रकाशम्। तच्चान्तराऽन्तराकल्पभेदेन विभिन्नरूपेण भासते इति कचित्कस्यचिदाकारस्योक्तिः कचिच्च कस्यचिदिति न विरोध इतिचेत्। युक्तं चैतत्कल्पनम्। यदि अन्यथा विप्रतिषेधः परिहरिणीयो न भवेत्, परिहरिणीयत्वे तु यथा संभवं परिहारे यतितव्यम्। 'अन्यथा असद्वा इदमग्र आसीत्' 'सदेव सोम्येदमग्र आसीत्' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायंते' 'आकाशाद्ध्येव खल्विमानि भूतानिजायंते–इ यादावपि तथैवसंगतिः। असत्त्व सत्त्वानन्दत्वाकाशत्वादीनामपि ब्रह्मप्रकाश विशेषत्व मेव स्यात् तथा सतितेषामेकार्थसमर्पकत्वाय 'सवाकर्षात्' 'आकाशस्तल्लिंगात्' इत्यादि सूत्रप्रणयनप्रयासोव्यासचरणानां व्यर्थ एव कथं न स्यात्। ( टि०—कारणवाक्यानां निराकारपरत्वं मायोपदितचैतन्यमात्रपरत्वं च पूर्वतापिन्यामेव स्वरूपनिरूपणप्रस्तावे "किन्तद्रूपम्" इत्यस्यावतरणिकायां चिन्तितम्। अत्रापि किंचिदेतत्प्रकरणस्यैव शेषे वक्ष्यते, इति तत्रैव द्रष्टव्यम् ) तस्मात् स्वरूपतोविग्रहतो गुणतोधर्मतः प्रकाशतश्चैकार्थप्रतिपादकत्वचिन्तनमेव ज्याय इति। नच सत्वासत्वयोर्नितरां विरुद्धत्वाद्गत्यन्तरचिन्तनं परमावश्यकम्, त्रिनेत्रत्वद्विनेत्रत्वादिकं तु न नितरां विरुद्धमिति न गत्यन्तरचिन्तनमावश्यकमिति वाच्यम्। तथापि एककालावच्छेदेन त्रिनेत्रत्वद्विनेत्रतैकवक्त्रत्वानेकवक्त्रत्वादीनां प्रकाशानां समवायाभ्युपगमः तदा संभवेत् यदा तादृशविभिन्नार्थप्रतिपादकतया

प्रतीयमानानां वाक्यानामेकतरार्थनिर्धारकत्वं न संभवेत्, संभवे त्वेकतरार्थनिधारकत्वे सञ्चिन्तनं मेव "प्राणस्तथानुगमात्" (ब्र.सू.१।१।२८) इति प्राणाधिकरणवैश्वानराधिकरणन्यायेन ज्यायोऽन्यथातत्तदधिकरणानामपि वैयर्थ्यमापतेदेवेति।

अत्रोच्यते-श्वेताश्वतरे यद्यपि शिवरुद्रादिशब्दानां देवता विशेषवाचकत्वेन प्रसिद्धानामभ्यासो दृश्यते तथापि तेषामन्यार्थकत्वेनाप्यन्यत्र प्रसिद्धत्वात् देवताविशेषस्याकारसमर्पकवाक्यानां पदानां वा तत्र समभिव्याहाराभावाच्च, शिवादिपदानां तत्रैकान्ततोदेवताविशेषसमर्पकत्वं निर्धारयितुं न शक्यते एव। पूर्वकाण्डे क्वचिदुत्तरकाण्डे चार्थान्तरवाचकत्वेन प्रसिद्धानामपि इन्द्रधातृवैश्वानराकाशादिशब्दानां वेदान्ते "इन्द्रो मायाभिः पुरुरूप ईयत" धातुःप्रसादात्महिमानमीशम्। 'यस्त्वेतमेव प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते' इत्यादौ देवताविशेषरूपप्रसिद्धार्थपरित्यागेन स्पष्टवाक्यान्तराविरुद्धान्यार्थकल्पनस्य दृष्टत्वात्। तथा च सुबाले उपक्रमे सर्वादिसृष्टेः पूर्वं "तदाहुः किं तदासीत्" इतिशिष्यप्रश्ने। 'तस्मै सहोवाच न सन्नासन्नसदसत्' इत्यंशेन सत्पदेन व्याकृतमसत्पदेनाव्याकृतं सदसत्पदाभ्यां ताभ्यांसम्मिलितं च सर्वं तत्त्वं प्रतिषिद्ध्य तत्सर्वविलक्षणपरमदेवसत्त्वमाक्षिप्य ततः "तस्मात्तमः संजायते तमसो भूतादि" रित्यादिना सर्वसदसत्पदार्थसृष्टिं वक्ति। तत्र सहस्रशीर्षविराडाख्यप्रजापतिसृष्टिमुक्त्वा प्रथमोत्पन्नस्य सहस्रशिरसः पुंसः सकाशात् 'ललाटात्क्रोधजो रुद्रः' इति रुद्रसृष्टिमपि वक्ति। पुनश्च लयनिरूपणे पृथिव्यादिमहदन्तानामव्यक्ते तस्याक्षरे तस्य तमसि, तमसश्च "तमः परे देवे एकीभवति" इत्यंशेन परदेवे एकीभावमुक्त्वा परदेवादप्युर्ध्वं कश्चा स्यादिति शंकानिरासाय "परस्मान्न सन्नासन्न सदसत्। इत्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम्" इत्यंशेन तत्रैव सर्वकक्षाविश्रान्ति नातः परं तत्त्वान्तरमित्यवधारयति। तत्रैव सर्वमोक्षशास्त्रपरिसमाप्तिः सर्ववेदपरिसमाप्ति च

दर्शयति। 'तेनेदं सिद्धं "यत्र 'तत्र एकी भवति' स एव परदेवः स्वसमानाभ्यधिकशून्यं परमकाष्ठापन्नंतत्त्वं परमकारणंच नातः परं किमपीति।

द्वितीयपर्य्याये चतुर्थखण्डेऽपि तमेव परमदेवम् "असद्वा इदमग्र आसीत्" इत्यसच्छब्देन परिगृह्य "अजातमभूतप्रतिष्ठितमशब्दमरसमि" त्यादिना सर्वप्राकृतधर्म्मराहित्यनिरूपणेन परिशोधयति। तज्ज्ञानेनैवच "न तस्य प्राणा उत्क्रामति अत्रैव समलीयन्ते ॥ ब्रह्मैव सन्ब्रह्माप्येति" इति परममोक्षं वक्ति। परंत्वेतावतापि स परदेवो ब्रह्मा शिवो विष्णुरन्यो वा कश्चिदिति न निर्णीतो भवति-इति तृतीयपर्य्याये षष्ठखण्डे प्रथमखण्डवदेव "नैवेह किंचनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते" इति शून्यवादमाक्षिप्याथ तदानीकिमासीदीत्याकांक्षायां "दिव्यो देव एको नारायणः" इतिपूर्वोक्तस्वसिद्धान्तमनुवदति। तत्रैतावान् परं विशेषो यत्प्रथमपर्य्याये लयनिरूपणे 'परदेवः' इत्येतावन्मात्रं सर्वान्तिमतत्त्वस्य पर्य्यायशब्द उक्तः। अत्र तु तस्य नारायण इतिप्रसिद्धसमाख्यान्तरमपि दर्शितम्। तत्र दिव्यपदैकपदसमभिव्याहृतदेवपदविशेषणेन नारायणस्यैव तादृशपरदेवत्वं नान्यस्येत्यपि निर्धारितम्। पुनश्च "चक्षुश्च द्रष्टव्यं च नारायणः," इत्यादिना सर्वस्य नारायणात्मकत्वं निरूपयन्ती "धाता विधाता कर्ता विकर्ता दिव्यो देव एको नारायणः" इतिश्रुतिर्वक्ति। पुनश्च 'आदित्यरुद्रा' इत्यादिना सर्वदेवानां नारायणात्मकत्वं वदन्ती "उर्ध्वंच दिशश्च सर्वं नारायणः" इतिपुनःपुन-रुपपत्तिकाभ्यासेन नारायण एव सर्वमूलं स एवाद्वितीयोदिव्यः परोदेवइतिनिर्धारयन्तीतदेव "पुरुष एवेदं सर्वम्।" "तद्विष्णोः परमं पदम्" इति तस्य पुरुषादिविष्णवादिसमाख्यान्तरघटितेन मंत्रद्वयेन दृढीकुर्वन्ती पुरुषसूक्तविष्णुसूक्तादिभिः सहैकवाक्यत्वं च दर्शयन्ती प्रथमपर्य्यायवदेव "तदेतन्निर्वाणानुशासनमितिवेदानुशासनमितिवेदानुशासनमि" ति सर्वेषां वेदातिरिक्तानांमोक्षशास्त्राणां समग्रवेदानां च तस्मिन्नर्थे सम्मतिं दर्शयन्ती विद्यां समुपसंहरति श्रुतिः।

अपि च तदग्रिमे खण्डे "अन्तः शरीरे निहितो गुहायामज एको

नित्यो यस्य पृथिवी शरीरं यः पृथिवीमन्तरे संचरन् यं पृथिवी न वेद" इत्यादिना पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यहंकारचित्ताव्यक्ताक्षरतमःपर्य्यन्तानामन्तर्य्यामित्वं निरूपयंती "स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति नारायणस्यैव प्रथमकार्य्यतमःपर्य्यन्त-नियामकत्वं सर्वभूतान्तरात्मत्वमपहतपाप्मत्वं दिव्यत्वं तादृशैकदेवत्वं च निरूप्य "एतां विद्यामपान्तरतमाये" त्यादिना विद्यामुपसंहरंती, अन्ते इति "निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनमि" त्येवं निगमयति। तस्मान्निर्विचिकित्सरूपेण विष्णुपुरुषनारायणपदवाच्यदेव एव तमः परं मूलकारणं परमदेवो नान्यः, तत्रैव सर्ववेदपरिसमाप्तिरिति सुबालेन निर्धारितं भवति। तेन श्वेताश्वतरेऽपि 'देवात्मशक्तिं स्वगुणै-निगूढाम्"॥ "तदा देवमविज्ञाय दुखस्यान्तो गमिष्यति" "एको देवः सर्वभूतेषु गूढः" इत्यादौ उपक्रमे-उपसंहारे मध्ये मध्ये च परिपठितो देव-शब्दो नारायणपर एव,। सुबाले 'दिव्यो देव एको नारायणः" इत्यत्र कारणवाक्येऽन्तर्य्यामिवाक्ये च परदेवत्वस्य नारायण एव इदमित्थतया सोपपन्ननिर्णयदर्शनात्। सर्वोपनिषत्सुपठितकारणकथानामेकपर्य्यवसा-यित्वस्य परमावश्यकत्वाच्चेति। एवंच-प्रायपठितानां रुद्रशिवादिशब्दा नामपि न देवताविशेषसमर्पकत्वम्, अपितु प्रलयकारित्वानन्दत्वादिगुण-योगेन निर्धारितमूलपुरुषनारायणबोधकत्वमेव "इन्द्रो मायाभिः" "धातुः प्रसादात्" इत्यादिश्रुतावन्द्रधात्रादिशब्दवदिति निश्चयो युक्तःप्रतिभाति।

नच सुबालपठितनारायणशब्द एव प्रसिद्धरुद्रदेवतार्थपरोऽस्त्विति वाच्यम्। श्वेताश्वतरेऽपि दर्शितोक्रमे उपसंहारेच देवशब्दवाच्यत्वेनैवो-पक्रम उपसंहारश्च श्रूयेते। न रुद्रशिवादिशब्दवाच्यत्वेन। तेन तत्र प्रधा-नतया देवशब्दवाच्यत्वेनैव परमतत्वनिरूपणं कृतं न शिवरुद्रादिशब्द-वाच्यत्वेनेति निश्चीयते। सुबालेतु दर्शितदिशा सोपक्रमं सोपसंहारंच तमःपर्य्यन्तकारणत्वेन तमः पर्य्यन्तनियामकत्वेन च विद्यासमाप्तिपर्य्य-न्तं "दिव्यो देव एको नारायणः, इति निर्णीयते तत्रैव सर्ववेदसम्मतिं च

दर्शयति 'इतिवेदानुसनमिति' तेन तत्त्वग्राहिदृष्ट्या विचार्य्यमाणे यथा सुबालश्रुतेर्नारायणैककारणत्वसमर्पकत्वं न तथा श्वेताश्वतरस्य शिवैकसमर्पकत्वमिति निश्चीयते । इति । देवशब्दस्तु 'दिव्यो देव एको नारायणः' इत्येकत्वश्रुतिबलात् नारायण एव स्वार्थंसमर्पयति । कैवल्योपनिषच्छंका तु 'गोपवेशमभ्राभमि'त्यस्यैव विमर्शे निरस्ता। किंच-रुद्रशिवादिशब्दानां केवलयौगिकत्वेनापि निर्वाहः संभवति । न तथा नारायणशब्दस्य, नारायणशब्दे 'पूर्वपदात्संज्ञायामगः' इतिसूत्रेण संज्ञायामेव णत्वविधानात्। संज्ञात्वाऽनंगीकारे णत्वाभावप्रसक्तेः। सा संज्ञा तु श्रीलक्ष्मीपतेरेवेत्यत्र न विप्रतिपत्तिरितिव्यवस्थापितमेव पूर्वाचार्य्यैः। तस्मादपि केवलयोगबलेन नारायणशब्दात् शिवादिकंगृहीतु ं न शक्यते।

अन्यच्च नारायणाथर्वशिरसि-"पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजयेति । नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते" इत्यादिना सर्वसृष्टिं निरूप्य-"नित्यो नारायणो ब्रह्मा नारायणः शिवश्च नारायणः" इत्यादिना शिवस्यापि नारायणात्मकत्वमुक्त्वा ब्रह्मशक्रकालदिग्विदिगूर्ध्वाधोऽन्तर्बहिर्भूतभवद्भव्यानां सर्वेषां नारायणापृथक्सिद्धत्वलक्षणं नारायणात्मकत्वं निरूप्य ',निष्कलंको निरंजनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित्" इत्यनेन स्वशब्देनैव श्रुतिः श्रीलक्ष्मीभर्त्तुरतिरिक्ते तादृशसर्वातिशायिदेवत्वं प्रतिषेधयति । नात्र नारायणशब्दोऽन्यपर इति शंकामुद्भावयितुमपि शक्यते । अग्रे-"ओं नमो नारायणायेति मंत्रोपासको वैकुण्ठभुवनं गमिष्यति ।" इति । "ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधूसूदनः" इति चांशाभ्यां मंत्रोपासनदेवकीपुत्रत्वाभ्यां स्पष्टलिंगाभ्यां नारायणशब्दस्य श्रीलक्ष्मीपतिपरत्वनिर्णयात्। एतेन सुबालस्थोऽपि' दिव्यो देव एको नारायण' इतिशब्दः स्पष्टं लक्ष्मीपतिपरत्वेन व्याख्यातः। लक्ष्मीपतिभिन्ने—तादृशशुद्धदेवत्वस्य 'शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् इति स्पष्टवाक्येन निराकरणात्। तेनैव च श्वेताश्व :-

रादिपठितोऽपि देवशब्दो नितरां व्याख्यातः ।

अन्यच्च महोपनिषदि । "तदाहुरेको ह वै नारायण आसीन्न ब्रह्मा नेशानः" इत्यंशेन सर्गप्राक्काले नारायणमात्रस्य सत्त्वं तदितरस्य चासत्त्वमुपपाद्य पश्चान्महदादिसृष्टिमुक्त्वा तत्पश्चाच्छिवस्यापि-"तस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषो जायते बिभ्रच्छ्रियं, यशः सत्यं ब्रह्मचर्यं तपो वैराग्यं मन ऐश्वर्यं सप्रणवा व्याहृतयो ऋग्यजुःसामाथर्वाङ्गिरस स्तान्यङ्गे समाश्रितानि । तस्मादीशानो महादेवो महादेवः" इति सर्गात् प्रागसत्त्वं पश्चाच्च नारायणादेव तदुत्पत्तिं श्रुतिर्वक्ति तच्च शिवस्य नारायणापेक्षयाऽपि मूलकारणत्वे भज्येत । नात्रापि नारायणशब्दः शिवपर इत्याभासयितुं शक्यते स्फुटं शिवस्योत्पत्तिनिरूपणात् पूर्वमसत्त्वप्रतिपादनाच्चेति ॥

'एको रुद्रो न द्वितीयाय तस्थुः, न सन्न चासञ्छिव एव केवलः" इत्यादि यच्छ्रूयते श्वेताश्वतरे तत्र न क्वापि रुद्रशब्दवाच्यात् शिवशब्दवाच्याद्वा नारायणस्योत्पत्तिः श्रूयते न वा तदानीं नारायणस्यासत्त्वं वा श्रूयते यत् रुद्रशिवादिशब्दानां नारायणातिरिक्तार्थसमर्पकत्वे बीजं स्यात् । नारायणकारणवादे तु स्पष्टमेव शिवोत्पत्तिः श्रूयत इति निरूपितमेव यच्च श्वेताश्वतरे रुद्रशिवादिशब्दानां तादृशार्थबोधकत्वे बीजाभावेऽपि अथर्वशिरोवाक्यबलेन तथानिर्णेतुं शक्यते, तत्र स्फुटं शिवदेवतानिरूपणादिति । तदपि निर्बलमेव । तत्रापि रुद्रान्नारायणस्योत्पत्तेरनुक्तत्वात् । किंचाथर्वशिरोवाक्यानि द्विधा विभज्यते । रुद्रवाक्यत्वेन स्तुतिवाक्यत्वेन च तत्र सोऽब्रवीदहमेकः प्रथममासम्, इत्यारभ्य वर्तामि तेजसेत्यन्तमेकम् । "ततो ह वै देवाः उर्ध्वबाहवो रुद्रं स्तुवन्ति" इत्यारभ्य समाप्तिं यावत् स्तुतिवाक्यानि । एवंच रुद्रकृतस्वमहिमवर्णनस्य कौषीतक्युपनिषदि इन्द्रकृतस्वमहिमवर्णनस्येव "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्युक्तन्यायानुसारेण इन्द्रवामदेववत् शास्त्रदृष्ट्याऽपि संभवात् । स्तुतिवाक्यानांच "नमस्ते वायो त्वमेव प्रत्यक्षं

ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि ऋतं वदिष्यामि" इति । तैत्तरीयोक्तरीत्या "ब्रह्मदृष्टिरुत्कर्षात्" इतिन्यायेन गुरुस्तुतिवचान्यथापि-संभवादेकान्ततःपरमतत्त्वनिर्णायकत्वाभावेन पूर्वोक्तसिद्धान्तसंकोच-कत्वाभावात् । अत एव च नृसिंहतापिन्यां "अथर्वशिरःशिखाध्यापक-शतमेकेन मंत्रराजाध्यापकेन" इति–अथर्वशिरोविद्यापेक्षया नृसिंहविद्याया उत्कर्ष उक्तः । अथर्वशिरसःसाक्षान्मूलरूपपरत्वे तु नैवं संभवति । नृसिंह विद्याया-अवतारपरत्वेनाथर्वविद्यायाः साक्षात्मूलरूपपरत्वे एवं कथना-योगात् । कैवल्योपनिषद्विरोधस्तु पूर्वतापिन्यां "सत्पुण्डरीकनयनमि त्यस्य व्याख्यायां परिष्कृतमेवेति ।

अन्यच्च श्वेताश्वतरे शिवादिदेवतापरत्वाभ्युपगमेऽपि "यदा तम-स्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः" इतिश्रुतिवचः "तमो वा इदमेकमास तत्पश्चात्तत्परेणेरितं विषमत्वं प्रयाति" इति मैत्रायिणीश्रुति-वदवान्तरप्रलयविषयकमेव । मैत्रायिणीश्रुतौ तमःपरयोरिव तमः सद्भावेन सहैव शिवसद्भावनिरूपणात् 'यदा तमः' इत्युक्तेः । सुबालवाक्यं तु आत्य-न्तिकप्रलयविषयकम् । नैवेह किंचनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः" इत्यत्र तु तमःकारणत्वप्रतिपादना-द्विष्णोरेव सर्वादिकारणत्वम् । तदानीं नारायणातिरिक्तवस्तुमात्रप्रति षेधात् प्रथमपर्यायेऽपि "तदाहुः किं तदासीत्तस्मै स होवाच न सन्ना-सन्नसदसदिति तस्मात्तमः संजायते तमसो भूतादि" रिति तमसोऽपि ततः एव पश्चादुत्पत्तिनिरूपणात् । लय करणेऽपि "अव्यक्तमक्षरे विली-यतेऽक्षरं तमसि विलीयते तमः परे देवे एकीभवति परस्तान्न सन्नासन्न-सदसदित्येतन्निर्वाणानुशासनम्' इति तदानीं तमसोऽपि परेदेवे नारायणे नामरूपविभागानर्हात्मकैकीभावनिरूपणाच्च । "तथाच शिव-देवताया अवान्तरप्रलये विद्यमानत्वप्रतिपादनेऽप्यात्यन्तिकलये सर्वादि-सृष्टौ च तत्सत्त्वप्रतिपादनाभावान्नारायणस्य तु तदानीमपि सद्भावप्रति-पादनात्तमसोऽपि कारणत्वस्य लयाधिकरणत्वस्य च नारायण एव प्रतिपाद-

नाच्च स एव परमं कारणमिति निर्विचिकित्सनिर्णयः ।

वस्तुतस्तु शिवादिशब्दस्य तत्र नारायणपरत्वमेवेत्युपपादितम् । अन्यच्च नारायणशब्दसमभिव्याहृतकारणवाक्येषु सुबालनारायणाथर्व महोपनिषदादिवाक्येषु सर्वत्र "ललाटात्क्रोधजो रुद्रो जायते' 'नारायणाद्रुद्रो जायते "तस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषो जायते तस्मादीशानो महादेवो महादेवः" इत्यादिना नारायणाद्रुद्रोत्पत्तिः श्रूयते । नतु क्वाऽपि रुद्रान्नारायणोत्पत्तिः । तेनापि नारायण एव मूलकारणम् ॥

अन्यच्च पुरुषसूक्तोत्तरनारायणप्रतिपाद्यः "पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इतिश्रुत्युक्तलक्षणः तमः परः सर्वान्तिमतत्त्वभूतः स्वदर्शनमात्रेण परमामृतत्वप्रदःपरमपुरुषएव। "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय" इति तत्रैवोक्तेः । तस्य परमपुरुषस्य "श्रीश्च ते लक्ष्मीश्चपत्न्यौ" इत्यसाधारणंविष्णुलक्ष्मोपदिष्टमिमिविष्णुरेव । श्रियो-लक्ष्म्याश्च विष्णोर्वेकपत्नीत्वस्यैव निश्चयात् "नित्यैव सा जगन्माता विष्णोः श्रीरनपायिनी । यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम। इतिविष्णुपुराणे पराशरोक्तेः 'महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि" इतिश्रीसूक्तशेषे ऋक्संहितायां लक्ष्मीगायत्र्युक्तेः, श्रीसूक्तव्याख्याभूते सौभाग्यलक्ष्म्युपनिषदि "श्रीर्लक्ष्मी वरदा विष्णुपत्नी" इति तस्या नामकथनात् , तस्या अन्यपत्नीत्वापादनस्या वैदिकत्वात्सदाचारविरुद्धत्वात् , तथैव सर्वदेशीयशिष्टाचाराच्च 'श्रीश्च ते लक्ष्मीश्च पत्न्यो इतियुग्मकथनंतु' तस्याः द्विभुजचतुर्भुजरूपादिभेदद्वयाभिप्रायेणेति न क्वाऽपि क्षतिः। एवं च सुबाले श्वेताश्वरेऽपि च पुरुषसूक्तमंत्राणां बहूनां पाठात् तेऽपि उपनिषदोपुरुषसुक्तोपपादनपरे एवेति तत्र नारायण एव प्रतिपाद्यः । पुरुषसूक्तस्य सम्पूर्णविचारस्तु श्रीभगवत्तत्वसुधानिधौ कृतो मयेत्युपरम्यते तत्रेति ।

अन्यच्च तैत्तरीये महानारायणोपनिषदि नारायणसूक्ते "सहस्रशीर्षंदेवं विश्वाक्षं विश्वसंभुवम्। विश्वं नारायणं देवमक्षरं परमं पदम्। विश्वतः

परमात्मानित्यं विश्वं नारायणꣳहरिम् । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति । पतिं विश्वस्यात्मेश्वरꣳशाश्वतं शिवमच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणं नारायणपरो ज्योतिरात्मा नारायणः परः । नारायणपरो ध्याता ध्यानं नारायणःपरः । यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति सर्वं नारायणात्मकमेव न ततोऽव्यतिरिक्तं किमपीत्युक्त्वा । तस्य च स्थितिः कथं वा भावनीय इति 'अनन्तमव्ययमि' त्यादिना निरूप्य 'तस्याः शिखाया मध्ये परमात्माऽव्यवस्थितः' इति तस्यैव पुनः परमात्मत्वमुक्त्वा "स ब्रह्मा शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" इत्यनेन ब्रह्मशिवादीनां नारायणस्यैव विभूतित्वमाह । तेनापि नारायण एव परमतत्त्वमन्ये तद्विभूतय एवेति निर्विचित्सं निर्धारितं भवति ॥

किंच "नारायणं शिवमच्युतम्" इति मध्य उक्तेः, अच्युतादिशब्दवत्, शिवशब्दोऽपि मुख्यवृत्त्या नारायणस्यैव वाचकान्तरमिति निश्चीयते। उपलक्षणंचैतत् रुद्रादिशब्दानां,तेन श्वेताश्वतरेऽपि रुद्र शिवादि-शब्दानां नारायणपरत्वमेव, इत्यपि कल्पयितुं शक्यते ॥ नारायणोपनिषदि रुद्रगायत्र्यादिपाठस्तु सूर्यगरुडगायत्र्यादिपाठवत्–तत्प्रतिपाद्यस्यापि नारायणशेषत्वबोधनायैव । महाराजनिरूपणप्रस्तावे तदमात्यादिनिरूपणवत् । 'यः परः स महेश्वरः" 'रुद्रो महर्षिः' 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं शंकरंनीललोहितम् ।" इत्यादिवाक्यान्यपि मुख्यवृत्या योगेन च नारायणपराण्येव तेषां नारायणानुवाकशेषत्वात् । अतएव नृसिंहपूर्वतापिनीभाष्ये तत्र पठितानां "ऋतं सत्यं परंब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतंविरूपाक्षंशंकरं नीललोहितम् । उमापतिः पशुपतिः पिनाकी ह्यमितद्युतिः। ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपति ब्रह्मणोऽधिपतिः" इति । स्पष्टलिङ्गानामपि वाक्यानां नृसिंहपरत्वेनैव श्रीमदाद्याशंकराचार्यैरपि व्याख्यानं कृतं नतु शिवपरत्वेनति तत्र द्रष्टव्यम् ।

अन्यच्च-गोपालतापिन्यां "कः परमो देवः" इति प्रश्नमुपक्रम्य-'कृष्णो वै परमं दैवतम्' तस्मात्कृष्ण एव परमोदेवः "एको देवः सर्व-भूतेषु गूढः" इत्यन्तेन उपक्रमोपसंहाराभ्यां विविधोपपत्तियुक्तैश्चाभ्यासैः श्रीकृष्णस्यैव परमदेवत्वं साध्यते। अन्ते च "एकोदेवः सर्वभूतेषु गूढः" इति श्वेताश्वतरमंत्रसमानानुपूर्व्वीकमंत्रपाठेनैव परमोपसंसारः क्रियते। नैताद्दग्रूपेणोपक्रमादिभिरुपसंहारान्तैर्वाक्यैः क्वाप्युपनिषदि कस्मिन्नपि देवेपरमदेवत्वं निरूप्यते, तेनापि श्वेताश्वतरतात्पर्य्यं मत्रैवावधार्य्यते इति ज्ञायते यच्च नितान्ताप्रसिद्धे शरभोपनिषदि नृसिंहापकर्षवर्णनं तत्, आदिशंकरविद्यारण्यभाष्यसुरेश्वरवार्तिकादिभूषितत्वेन परमप्रसिद्धनृसिं-हतापिनीविरुद्धत्वादुपेक्षणीयमेवेति।

अन्यच्च। "आत्मैवेदमग्र आसीत्पुरुषविधः" (बृ. उ. १।४) "स एकाकी नर एव" (महोनि०) इत्यादिकारणवाक्येषु पुरुषविधमेव मूल-कारणं श्रूयते। पुरुषविधश्च पुरुषाकार एव। न तु पंचवक्त्रस्त्रिनेत्रः। तस्य सर्वथा पुरुषविधशब्दसूचितसादृश्यप्रतियोगिलौकिकपुरुषसदृशत्वाभा-वात्। तस्मादपि "सत्पुण्डरीकनयनमि" त्यादिपूर्व्वतापिन्युक्तलक्षणपुरुष एव मूलकारणमित्युपपादितं भवति तत्रैव "उमासहायं परमेश्वरं प्रभुं त्रिलो-चनमि" त्यादिकैवल्यश्रुतिरपि चिन्तितेति न पुनस्तन्यते इति। भगवतः शिवस्याऽपि द्विभुजद्विनेत्रत्वादेरेव मुख्यतया स्वीकारे तत्सिद्धान्तभंगः नाममात्रभेदश्चेति सर्वथा मत्सिद्धान्तपरिग्रहादिति संक्षेपतो बोध्यम्।

एतेनैव शाक्तवादोऽपि निरस्तः सर्वत्र वेदान्ते पुरुषत्वेनैव परमतत्त्वनिरूपणात्। "पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इतिश्रुतेः। शक्तयस्तु पुरुषशेषत्वेनैव निरूप्यंते। "न तस्य कार्य्यं कर-णं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच" (श्वे. उ. अ. ६) इतिश्रुतेः।

यच्च-"एको ह वै नारायण आसीत्' इत्यादिकारणवाक्ये नारायणादिशब्दा मायोपहितचैतन्यपरा न तु पुरुषाकारचैतन्यपर इति

ततुच्छ्रन् तदग्रे तत्रैवार्थशिरःपाठे शंकरानन्दादिभिर्व्याख्याते "स एकाकी नर एव" इति स्पष्टमेव नराकारसमर्पकश्रुतेः। सामपाठेऽपि "तस्य ध्यानान्तस्थस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषो जायते" इतिपुरुषाकारसमर्पकललाटश्रुतेश्च पुरुषाकारत्वनिश्चयात्। बृहदारण्येऽपि ब्रह्मविद्योपक्रमे। "आत्मैवेदमग्र आसीत् पुरुषविधः" इतिपुरुषविधत्वबोधनात्। अन्यार्थकल्पनस्य प्रौढिमात्रत्वात्। "अशरीरमि" त्यादिश्रुतिविरोधस्य "सत्पुण्डरीकनयनमित्यस्य" व्याख्याने पूर्वतापिन्यांयुग्मतत्त्वसमीक्षायां च समुपपादितत्वाच्चेति। तस्मात्सं्यानात्मकशरीरनिषेध एव पर्य्यवसानं तद्वाक्यस्येति ध्येयम्। अथ प्रकृतप्रसंगः

तस्येति। तस्य निरुक्तलक्षणस्य नारायणस्य' नराणां जीवानां चिच्छक्तिरूपाणां समूहो नारम् तस्यायनभूतस्य श्रीजदमीपतेः कृष्णस्य 'हृत्पद्मात्'। हृत्पद्मपदेनेह, इच्छाशक्तिरुच्यते भगवत ईक्षणशक्तिर्वा सत्यसंकल्पात्मिका। ततः, तमोऽतराव्यक्तमहदहंकारतन्मात्राऽकाशादिपर्य्यन्तसमुत्पत्त्यनन्तरंजातोऽब्जयोनिर्हिरण्यगर्भः, इत्यर्थः। अत्र "हृत्पद्माज्जातोऽब्जयोनिः" इत्युक्त्या प्रकृतप्रसंगे ब्रह्मणो मानसाख्यं प्रथमं जन्म विवक्षितम्। स्वान्तं हृन्मानसं मनः" इत्यदिकोशात्तयोरेकपर्य्यायत्वात्। पठ्यते च महाभारते नारायणीये ब्रह्मणो मानसं जन्म—"यदाऽसीन्मानसं जन्म नारायणमुखोद्गतम्। ब्रह्मणः पृथिवीपाल तदा नारायणः स्वयम्" इति। तथाचाद्यादिकल्पविषयकसंवादे श्रुतेस्तात्पर्य्यमित्यवधेयम्। "तपयित्वे" ति तपःकारयित्वेत्यर्थः। तमितिशेषः। 'तस्मै' इति ब्रह्मणे इत्यर्थः। 'स कामप्रश्नमिति स्पष्टम्' 'सहोवाचेति'। 'अवताराणां मध्ये' इति व्यूहवैभवपुरुषावतारगुणावतारलीलावताराणां मध्ये इत्यर्थः। वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाश्चत्वारः पूर्वपूर्वमुत्कृष्टा व्यूहाः। केशव नारायणमाधवाद्या ऊर्ध्वपुण्ड्रविधायकमंत्रप्रतिपाद्या द्वादश वैभवाः। कारणोदशायिगर्भोदशायिक्षीरोदशायिरूपास्त्रयः पुरुषावतारा पूर्वपूर्वश्रेष्ठाः। ब्रह्मविष्णुशिवाः रजःसत्त्वतमोगुणनियामका गुणावताराः। मत्स्यादयो-

भागवतप्रथमस्कन्धोक्ता लीलावतारा:। तेषु-आवेशरूपा अंशरूपा कलारूपा पूर्णरूपा पूर्णतरपूर्णतमरूपाश्च। तदेतद्वेदान्तरत्नमञ्जूषादौ, द्रष्टव्यम्। एकश्च पूर्णतमातिरिक्तसर्वेषामवताराणामवतारी मूलपुरुषश्रीकृष्णस्य षोडशांशरूप: प्रथमोऽवतारो वैकुण्ठेशो विलासरूपो, नारदीयब्रह्मवैवर्तज्ञानामृतसंहितागर्गसंहितादौ व्याख्यात:। एतत्स्वरूपमधिकृत्यैव ब्रह्मसंहितायां पंचमाध्याये "दीपार्चिरेवहि दशान्तरमभ्युपेत्य दीपायते विवृतहेतुसमानधर्मा यस्तादृगेव हि च विष्णुतयाऽवभाति गोविन्दमादिपुरुषं तमहं भजामि॥" इतिगोविन्दसमकक्षत्वेन निरूपितम्। श्रीराधोपनिषदि च "कृष्णो वै हरि: परमो देव: षड्विधैश्वर्यपरिपूर्णोभगवान् गोपीगोपसेव्यो वृन्दाराधितो वृन्दावनाधिनाथ:। तस्य द्वे तनुर्नारायणोऽखिलब्रह्माण्डाधिपतिरेकोंऽश:" इत्याद्युक्तम्। तदेद्युग्मतत्त्वसमीक्षायां निरूपितम्मयेति। तदेतेषामवताराणांमध्ये श्रेष्ठ:, पूर्णतम:, अवतार: 'को भवति' इति 'येन लोका स्तुष्टा भवन्ति' इतिच "यं स्मृत्वा अस्मात्संहारान्मुक्ता भवंति" इतिचेति। एतेन सर्वाधिकतया यत्र प्राकृतानामप्राकृतानांच सर्वेषां मन: प्रीतिंगच्छति यतश्च सर्वेषां मुक्तिरेव भवति नतु प्राकृतभाववत्त्वेऽपि कदाचिदपि बंधनं भवति यथाऽन्यत्र। तथाच यत्र कामक्रोधवात्सल्यबान्धवविशुद्धप्रेमादिभावै:, प्राकृतरूपैरप्राकृतरूपैश्च प्रकटीभूतै: परममुक्तिरेव भवति तमवतारं पूर्णतमं वद, इत्यर्थ:। "कथंवाऽस्यावतारस्य ब्रह्मता भवती" ति। अस्य मया जिज्ञासितस्य त्वया वक्ष्यमाणलक्षणस्य च सर्वावतारश्रेष्ठस्य 'ब्रह्मता' पूर्णब्रह्मता भवतीतिप्रश्नार्थ:।

अयंभाव: यदि स अवतार इत्युच्यते तर्हि तस्य पूर्णब्रह्मत्वं न संभवति। अवतारो हि जन्मविशेष:। अज्ञातप्रदेशान्तराज्ज्ञातप्रदेशान्तरे आगमनंवा। तदुभयमपि पूर्णब्रह्मत्वविरुद्धम्। तस्यापहतपाप्मत्वेन जन्माऽसंभवात् दिक्कालाद्यनवच्छिन्नत्वेन प्रदेशान्तरात्प्रदेशान्तरेगमनासंभवाच्चेत्यादि प्रश्नबीजम्। इदमुपलक्षणमुत्तरवाक्येनानुमीयमानानां प्रश्नान्तराणामपि। एतेषामुत्तरंतु ब्रह्मपरमात्मगोविन्द-

गोपालनारायणपुरुषोत्तमादिपदवाच्यः श्रीकृष्ण एव सर्वेषामवतारो सन्नपि पूर्णतमावतारः। स्वयम्-सर्वावतारीसन्नपि यदा स्वरूपतः सर्वधर्मतश्च निजावरणशक्तिभूतां मायामुद्घाट्य प्रकटी भवति । तदा पूर्णतमावतार इत्युच्यते स एव यदा धर्मविशेषपुरस्कृत एव प्रकटीभवति तदा सामान्यतोऽवतार इत्युच्यते। सर्वावतारिणोऽवतारत्वं तु प्राकट्याभिप्रायमात्रेण, नतु जन्मना देशाद्देशान्तरागमनेन वा। जन्मादिप्रतीतिस्तु वात्सल्यादिरसविशेषतोषार्थं तस्य निजेच्छाकृतम्, नतु कर्मकृतं तेन न पूर्णत्वब्रह्मत्वादिविरोधः। अन्येऽपि तस्यैवावतारविशेषा अंशकलादिरूपा इति। तदेतत्सर्वम् "चतुः शब्दो भवेदेकः" गोपालोऽहमजो नित्यः, 'पूर्वं ह्येकमेवाद्वयं ब्रह्मासोत्।' "एकमेवाद्वयं ब्रह्म मायया च चतुष्टयम्।" "तस्मादोंकारसंभूतो गोपालो विश्वसंस्थितः।" गोपालाय निजस्वरूपाय, "योऽसौ ब्रह्म परं ब्रह्म गोपालः" 'जाग्रत्स्वप्नसुषुप्तितुरीयतुरीयातीतोऽन्तर्यामी गोपालः" "एको देवः सर्वभूतेषु गूढ़" इत्यादिग्रन्थभागेन निरूपिष्यते । तत्सर्वं समग्रग्रन्थपर्यालोचनया बोद्धव्यमिति ॥ ३१ ॥

मू० स होवाच तं हि नारायणो देवः । सकाम्या मेरोः शृङ्गे सप्त पुर्यो भवन्ति तथा सकाम्या निष्काम्या भूगोपालचक्रे सप्त पुर्यो भवन्ति तासां मध्ये साक्षाद्ब्रह्म गोपालपुरी भवति ॥३२॥

सहोवचोति-मेरोःशृङ्गे, सर्वोपरि परवैकुण्ठे। मेरुशृङ्गशब्दस्योपरिलोकोपलक्षकत्वान्नात्र स्वर्णाद्रिः। तत्र नव पूर्य्योक्ते रि'ति तत्त्वप्रकाशिकाराः। "साक्षात्ब्रह्म गोपालपुरो"ति। ब्रह्मत्वं नाम स्वभावतोविनिर्मुक्ताशेषदोषत्वे सति स्वरूपतो गुणतो धर्मादितश्च स्वतःपरिपूर्णत्वं सच्चिदानन्दरूपत्वंच "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः" सर्वकामःसर्वगन्धः । "सत्यं ज्ञान-

मनन्तं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" इत्यादिश्रुतिभ्यः। तथाचा नित्यात्वपरिच्छेदादिदोषासंस्पृष्टस्वभावत्वात् स्वरूपतो गुणधर्मादिभिश्च परिपूर्णस्वभावत्वात्सच्चिदानन्दरूपत्वाच्च तदपि ब्रह्मेत्यर्थः। भगवत्परमधाम्नस्तथात्वं च निरूपितम् पूर्वतापिन्यां–"एतद्विष्णोः परमंपदम्' तद्विष्णोः परमंपदम्। 'ततो विशुद्धं विमलंविशोकमि' त्यादिना। एवमेव पंचरात्रे जितन्ते स्तोत्रे "लोकं वैकुण्ठनामानम् दिव्यषाड्गुण्यसंयुतमवैष्णवानामप्राप्यं गुणत्रयविवर्जितम्। नित्यसिद्धैः समाकीर्णमि"त्यादिनेति। अत्रापि स्फुटं तद्धाम्नः–सकार्य्यगुणत्रयरहितत्वं षाड्गुण्यपरिपूर्णत्वमुक्तम्। स्कान्देऽपि भागवतमाहात्म्ये परीक्षिद्वज्रनाभौ प्रति शाण्डिल्यः। 'शृणुतंदत्तचित्तौमे रहस्यं व्रजभूमिजम्। व्रजनंव्याप्तिरित्युक्त्या व्यापनाद् व्रज उच्यते। गुणातीतं परं ब्रह्म व्यापकं व्रज उच्यते। तस्मिन्नन्दात्मजः कृष्णः सदानन्दांगविग्रहः। आत्मारामश्चाप्तकामः प्रेमाक्तैरनुभूयते। आत्मा तु राधिका तस्य तयैव रमणादसौ आत्मारामतया विप्र प्रोच्यते गूढवेदिभिः। कामास्तु वाञ्छितास्तस्य गोपा गावश्च गोपिका नित्या सर्वे विहाराश्च आप्तकामस्ततस्त्वयम्। रहस्यंत्विदमेतस्य प्रकृतेः परमुच्यते" इत्यादि। अत्रापि तद्धाम्ना गुणातीतत्वं प्रकृतिपरत्वं ब्रह्मरूपत्वंच निरूप्यते। पाद्मेऽपि पातालखण्डेवृन्दावनमाहात्मये प्रथमाध्याये "अदुःखंदुःखविच्छेदं जरामरणवर्जितम्। अक्रोधं गतमात्सर्य्यमभिन्नमनहंकृतम् पूर्णानन्दामृतरसं पूर्णप्रेमसुखात्मकम्। गुणातीतं महद्धाम पूर्णप्रेमस्वरूपकम्" इत्यादिना महता प्रपंचेन तथात्वं निरूपितम्। पुरुषार्थबोधिन्यामथर्वणोपनिषदि एकादशे प्रपाठके "दिव्यं वृन्दावनं नाम शेषांगस्थं च सर्वदा। ब्रह्मरूपमिदं स्थानं सच्चिदानन्दरूपकाम्" इत्यादिना ब्रह्मरूपत्वं सच्चिदानन्दघनत्वं च निरूपितम्। नच भगवतो भगवद्धाम्नोश्चोभयोर्ब्रह्मत्वे ब्रह्मद्वैतापत्तेस्तदयुक्तमम्–"एकमेवाद्वितीयं ब्रह्म" इतिश्रुतेरितिवाच्यम्। भगवद्धाम्नो भगवत एव निजस्वाभाविकस्वात्मकचिच्छक्तिविलासरूपत्वेन तस्यापि भगवदपृथक्सिद्धत्वेन भग-

वदात्मकत्वेन च ब्रह्मरूपत्वेऽपि ब्रह्मद्वैतानापादकत्वात्। अतएवोक्तं-पूर्वतापिन्यां "यत्तत्पदं पंचपदं तदेव स वासुदेवो न यतोऽन्यदस्ति" इति। स्वात्मकचिच्छक्तिविलासरूपत्वं चोक्तं राधोपनिषदि "सन्धिनी तु धामभूषणशय्यासनादिमित्रभृत्यादिरूपेण परिणता" इत्यादिनेति। तस्मादुपपन्नतमम् "साक्षाद्ब्रह्म गोपालपुरी" इति। विशेषस्तु पूर्वतापिनी विवरणे युग्मतत्त्वसमाम्नायामन्येषु च वैष्णवनिबन्धेषु द्रष्टव्यम्।

एतेन पूर्वतापिन्यां 'एतद्विष्णोः परमंपदम्" तद्विष्णो परमंपदम्" इत्यादिना निरूपितं प्रकृतिकालातीतं त्रिपाद्विभूत्याख्यं परमं धामैव प्राकृतमण्डलेऽप्यंशतः प्रकाशते। तत्र प्राकृतत्वप्रतीतिस्तु मायिको' इत्यपि सूचितम्। तदुक्तं कृष्णोपनिषदि "गोकुलं वनवैकुण्ठमिति।"

पाद्मे च वृन्दावनमाहात्म्ये उपक्रमे "सात्वतांस्थानमूर्धन्यं विष्णोरत्यन्तदुर्ल्लभवम्। नित्यं वृन्दावनं नाम ब्रह्माण्डोपरि संस्थितम्। पूर्णब्रह्मसुखैश्वर्य्यं नित्यमानन्दमव्ययम्। वैकुण्ठादितदंशांशं स्वयं वृन्दावनं भुवि। गोलाकैश्वर्य्यं च यत्किंचिद्गोकुले तत्प्रतिष्ठितम्। वैकुण्ठवैभवं यद्वै द्वारकायां प्रकाशितम्। यद्ब्रह्मपरमैश्वर्य्यं नित्यं-वृन्दावनाश्रयम्। कृष्णं धाम परं तेषां वनमध्ये विशेषतः" इत्यादिनेति।

हरिवंशेऽपि गोवर्धनपूजाप्रसंगे शक्रोक्तौ "स्वर्गादूर्ध्वं ब्रह्मलोको ब्रह्मर्षिगणसेवितः। तत्र सोमगतिश्चैव ज्योतिषां च महात्मनाम्। तस्योपरि गवांलोकः साध्यास्तं पालयन्ति हि। स हि सर्वगतः कृष्ण महाकाशगतो महान्।" इत्यादिना गोलोकस्य ब्रह्मलोकादूर्ध्वंसत्त्वंसर्वव्यापकत्वं महाकाशशब्दितपरमव्योमगतत्वं महत्त्वादिकं च निरूप्य "उपर्य्युपरि तत्रापि गतिस्तव तमोमयी। यां न विद्मो वयं सर्वे पृच्छन्तोऽपि पितामहम्" इत्यनेन तत्र वृन्दावनाद्युत्कृष्टगुह्यस्थानादिसंकेतं कृत्वा तस्य देवादीनामपि दुर्ज्ञेयत्वं निरूपयन् "ब्राह्मे तपसि युक्तानां ब्रह्मलोकः परागतिः। गवामेव तु लोकोऽयं दुरारोहा हि सा गतिः" इति ब्रह्मवादिनां ब्रह्मलोकप्राप्तिः। गोलोके तु, तेषामपि सर्वेषां दुरारोहा गतिः। इति

कथनेन तद्गतेर्भगवत्कृपैकलभ्यत्वं सूचयन्, स्वकृतविविधोपद्रवयुक्तस्य-भूमिगोकुलस्यापि पूर्वनिरूपितगोलोकत्वमतिदेशेन वक्ति। 'स तु लोकस्त्वया कृष्ण सीदमानो धृतात्मना'। भृतो धृतिमता वीर निघ्नतोपद्रवान् गवामि' त्यनेन। तेनापि प्रकृतिपारवर्तिगोलोकभूमिगोलोकयोरेकत्व-कथनेन स एव प्रकृतिपरो लोकः प्रपंचेऽपि प्रकाशते तत्र भौतिकत्व-बुद्धिस्तु जीवाज्ञानकृतमित्येव सिद्ध्यति।

एवंचावतारकालीनभगवल्लोकस्यापि "साक्षात्ब्रह्म गोपालपुरी" इति स्पुटं ब्रह्मत्वकथनेन तत्र प्रकटीभूतस्य भगवतः प्रकटीभावमात्रेणावतार-भूतस्य ब्रह्मत्वमर्थत एव सिद्ध्यति। तेनावतारस्य कथं ब्रह्मता इत्यप्यर्थत एव समाहितमिति बोध्यं विस्तरतत्वग्रे वक्ष्यते॥ ३२॥ "सकाम्या निष्काम्या" इति त्रिवर्गफलदा मोक्षदा चेत्यर्थः॥ ३३॥

मू० स काम्या निष्काम्या देवानां सर्वेषां भूतानां भवन्ति ॥ ३३ ॥ यथा हि वै सरसि पद्मं तिष्ठति तथा भूम्यां तिष्ठति चक्रेण रक्षिता हि मथुरा। तस्माद्गोपालपुरी भवति ॥ ३४ ॥ बृहद् बृहद्वनं मधोर्मधुवनं तालस्तालवनं काम्यः काम्यवनं बहुलो बहुलावनं कुमुदः कुमुदवनं खदिरवनं भद्रो भद्र-वनं भांडीरवनं लोहवनं वृन्दावनमेतैरावृता पुरी भवति ॥३५॥ तत्र तेष्वेव गहनेष्वेवं देवा मनुष्याः गन्धर्वा नागाः किन्नरा गायन्ति नृत्यन्तीति ॥३६॥ तत्र द्वादशादित्या एकादश रुद्रा अष्टौ वसवः सप्त मुनयो ब्रह्मा नारदश्च विनायका वीरेश्वरो रुद्रेश्वरोऽभिकेश्वरो गणेश्वरो नीलकण्ठेश्वरो विश्वेश्वरो गोपाले-

श्वरो भद्रेश्वर आद्यानि लिंगानि चतुर्विंशतिर्भवन्ति ॥३७॥ द्वे वने स्तः कृष्णवनं भद्रवनं तयोरन्तर्द्वादशवनानि पुण्यानि पुण्यतमानि तेष्वेव देवास्तिष्ठन्ति सिद्धाः सिद्धिं प्राप्ता ॥ ३८ ॥ तत्र हि रामस्य राममूर्तिः प्रद्युम्नस्य प्रद्युम्नमूर्तिरनिरुद्धस्यानिरुद्धमूर्तिः कृष्णस्य कृष्णमूर्तिः ॥ ३९ ॥ वनेष्वेवं मथुरास्वेवं द्वादश मूर्तयो भवन्ति ॥४०॥ एकां हि रुद्रा यजन्ति, द्वितीयां ब्रह्मा यजति, तृतीयां ब्रह्मजा यजन्ति चतुर्थीं मरुतो यजन्ति, पञ्चमीं विनायका यजन्ति षष्ठीं वसवो यजन्ति, सप्तमीमृषयो यजन्ति, अष्टमीं गन्धर्वा यजन्ति, नवमीमप्सरसो यजन्ति, दशमी वै ह्यन्तर्धाने तिष्ठति । एकादशी स्वपदं गता द्वादशीति भूम्यां तिष्ठति ॥ ४१ ॥ तां हि यजन्ति ते मृत्युं तरन्ति, मुक्तिं लभन्ते, गर्भजन्मजरामरणतापत्रयात्मकं दुःखं तरन्ति ॥४२॥

ननु यदि गोपालपुरी साक्षाद्ब्रह्मैव तर्हि तस्याः प्रकृतिविकृतिभूतभूम्यात्मना कथं स्थितिरित्याह "यथा हि सरसि पद्मं तिष्ठति।" इत्यादि। तथाच न तस्याः प्रकृतिविकृतिभूम्यात्मना स्थितिः। अपितु तत्र तत्र प्रतिभासमानत्वमात्रं, जीवहृदये जीवस्येव भगवत इव वा। भूम्यात्मकत्वप्रतीतिस्तु मायिकीत्युक्तम्। "बृहत्बृहद्वनमि" ति-बृहत्त्वाद्गोविन्दप्राकट्यस्थानं गोकुलं बृहद्वनमित्युच्यते-इत्यर्थः। 'मधोरिति' मधुवृक्षप्राधान्यात् द्वितीयं मधुवनमिति। ताल इति वनम्" तालप्रधानमित्यर्थः। एवमन्यत्रा-

पीति । 'एतैरावृत्ता पुरो भवती'' ति-आवृता-आसमन्ताद्वृता वेष्टिता वर्तुलाकारेण युक्तेत्यर्थः ।। ''पुरी भवती' ति-मथुरामण्डले भवतीत्यर्थः । तत्र वृन्दावनं सर्ववनश्रेष्ठं कमलाकारस्य व्रजमण्डलस्य कर्णिकास्थानीयं परितो यमुनावेष्टितम्' मध्ये भवति। शेषवनानि तु दलस्थानीयानि वृन्दावनस्य परितोभवन्ति। एतेषु पंचवनानि यमुनायाः पूर्वे भवन्ति। सप्त पश्चिमे भवन्ति । एतेषु सहस्रश उपवनानि भवन्ति मुञ्जवनादीनि । गिरिराजस्तु दक्षिणे दले वर्तते इति । तैः सर्वैर्वनैरावृतं मथुरामंण्डलं भवति । लोकदृष्ट्या विंशतियोजनात्मकम् । तदेत्पाद्मवृन्दावनमाहात्म्यात्पुरुषार्थबोधिन्यथर्वणोपनिषतश्च ज्ञातव्यम् । विवेचितं मयाऽप्यंशतो युग्मतत्त्वसमीक्षायामितीहोपरम्यत इति ।

तत्र देवादीनामाधिदैविकशक्तीनामग्रे ''रुद्रेषु रौद्री'' इत्यादिना निरूपयिष्यमाणानां स्थितिमाह । 'तत्र तेष्वेवेत्यादि । आधिभौतिकतया लोकगोचरेषु तेष्वेव वनेषु तासामेव तत्तदेवावतारिणीनां शक्तीनां प्रतिमारूपेणापि स्थितिमाह । ''तत्र द्वादशादित्या'' इदिनेति।। सामान्यतो वनद्वैविध्यमाह—'कृष्णवनंभद्रवनमि' ति ।। कर्णिकास्थानीयं कृष्णवनम् । तस्य वर्तुलाकारस्य परितोदलस्थानीयं भद्रवनमित्यर्थः । तयोरेव सर्वेषां वनानांसामान्यतोऽन्तर्भाव इत्याह ।'तयोर्द्वादश वनानीति' । 'देवास्तिष्ठन्तीति' । आधिदैविका देवाः भगवच्छक्तिभूताः प्रापंचिकानामादित्यादिदेवानामवतारिणो वक्ष्यमाणा। इत्युक्तम् । 'सिद्धाः' इति । नित्यमुक्ता इत्यर्थः । 'सिद्धिंप्राप्ता' इति-भगवत्प्रदत्तैश्वर्यं प्राप्ता इत्यर्थः।।

पूर्वतापिन्यां 'पंचाङ्गं जपन्' इत्यत्र निरूपितेषु परब्रह्मणः श्रीकृष्णस्य पंचांगेषु व्यूहवैभवादिषु व्यूहानां वासुदेवादीनां तत्र सत्त्वमाह ''तत्र हि रामस्य राममूर्तिरित्यादि । एष क्रमः 'प्रणवाक्षरानुसारी' ''रोहिणीतनयो राम अकाराक्षरसंभवः'' इतिवक्ष्यमाणदिशा बोध्यम्। अत्र कृष्णपदं वासुदेवव्यूहपरं नतु ''सत्पुण्डरीकनयनमि'' ति सर्वेश्वरगोपालकृष्णमि''ति चोक्तमूलरूपपरम् ''रामस्य राममूर्ति'' रिति व्यूहप्रायपाठात् । नच वासुदेव

एव मूलरूपमितिशंक्यम्। पूर्वतापिन्यां पीठप्रस्तावे 'अंगवासुदेवादि' इत्यंशेन "वासुदेवव्यूहस्य अंगमिति" विशेषणेन मूलरूपांगत्वकथनात् । मूलरूप-कृष्णस्थानात् कर्णिकातो वहिर्द्वितीयावरणे स्थितिकथनाच्च । -अतएवाग्रे स्तुतिमंत्रे—"ओं ठां कृष्णाय देवकीनन्दनाये" त्यनेनोक्ताद्वासुदेवव्यूहात् भिन्नस्यैव गोपालविग्रहस्य—"गोपालाय निजस्वरूपाय, इत्यत्र निजरूपत्वमुक्तमत एवच "तुरीयतुरीयातीतोऽन्तर्य्यामी गोपाल" इत्यत्र-"अर्धमात्रात्मकःकृष्ण" इत्युक्तदिशा तुरीयात्मकाद्वासुदेवव्यूहादतीतत्वेन मूलरूपं निरूपितमिति तत्रैव विशदीकरिष्ये ।। एतेषां व्यूहानां स्थानं तु मूलकृष्णस्थानात्कर्णिकातो वहिः द्वितीयावरणे पश्चिमादिक्रमेण बोध्यम् । तदेतत्स्फुटमुपपादितं पुरुषार्थबोधिन्यामथर्वणोपनिषदि-पाद्मे वृन्दावनमाहात्म्ये बृहद्ब्रह्मसंहितासनत्कुमारसंहितादावित्युक्तमेव पूर्वतापिनीयव्याख्यायामिति । तेनापि वासुदेवव्यूहस्य मूलरूपांशत्वमेव सिद्ध्यति नतु मूलरूपत्वमिति । "वासुदेवो वा इदमत्र आसीत्" इत्यादिश्रुतौ भारतादौच स्थलविशेषे वासुदेवशब्दो मूलरूपवाचक एव नतु व्यूह-वाचक इति न विरोधः इति । किंच त्रिव्यूहादिपक्षे मूलरूपमेव वासुदेवः । तेन तत्र त्रयो व्यूहाः, चतुर्थो वासुदेवो मूलरूप एव । व्यूहानां कल्प-भेदेन प्रकारभेदो महाभारते नारायणीये स्फुटमुक्तम् । "एकव्यूहविभागो वा क्वचिद्द्विव्यूहसञ्ज्ञितः । त्रिव्यूहश्चापि कथितश्चतुर्व्यूहश्च दृश्यते ।।" इति । प्रकृते तु चतुर्व्यूहपक्ष एव मुख्यः तथैवोक्तोपासनकल्पसम-न्वयादितिवोध्यम् ।

एवं व्यूहस्थितिं व्युत्पाद्य केशवादिवैभवस्थितिमाह । वनेष्विति मथुरास्वति । वनेषु तु पूर्वोक्ता एव । अथ मथुरासु यानि भवन्ति तान्याह । "द्वादशमूर्तयो भवन्ति"ति केशवादयो द्वादश वैभवाः उर्ध्व-पुण्ड्रदेवतारूपाः । केशवनारायण-माधव-गोविन्द-विष्णुमधुसूदन त्रिवि-क्रम वामन-श्रीधर-हृषीकेश-पद्मनाभदामादरा इति तेषां नामानि भवन्ति । एतानि नामानि मूलरूपेऽपि प्रयुज्यत इति न सर्वत्र तत्तच्छब्देन वैभव-

श्रमः कर्तव्यः । इति । एतेषां पत्न्यस्तु श्रियोंऽशभूताः—कीर्ति-कान्ति तुष्टि-पुष्टि- धृति-शान्ति-क्रिया-दया-मेधा-हर्षा-श्रद्धा-लज्जाख्याः क्रमशो बोध्याः। वासुदेवादीनां तु रुक्मिणीरेवतीरत्युषा इत्येताःपत्न्यः श्रियो-व्यूहभूताः । तासामेव नामान्तराणि लक्ष्मीसरस्वतीरतिप्रीतय इत्येव-मप्याख्यायन्ते । एते एव च केशवादिन्यासमंत्रेण न्यस्यन्ते इति । एते-षामुपासकान् देवान् आह 'एकां रुद्रा यजन्तीत्यादि ॥ एत एव देवा अग्रे "आद्या अव्यक्ता द्वादश मूर्तयो भवन्ती" त्यादिना प्रापंचिक-देवानामावेशावतारिशक्तित्वेन निरूपयिष्यन्ते ॥ "द्वादशो भूम्यां तिष्ठ-तीत्युक्तमूर्तयाजकानां प्रसंगतः फलमाह ॥ तांये यजन्ति" इति ॥ ता इतिपाठः प्रतिभाति । तथाच ता निरुक्तवासुदेवादिकेशवादिव्यूह-वैभवमूर्तीः । इत्यर्थः ॥

वस्तुतस्तु—वृत्तं व्यूहवैभवरूपाद्यंगनिरूपणम् । गुणावतार-पुरुषावताराणां प्राकृतमंडलगोचरत्वात्प्रकृतिपरे धाम्नि तेषां तत्तद्रू-पेण स्थित्यभावान्न स्थितिनिरूपणमपेक्षते । अतः स्थूलध्यानगोचरत्वेन 'अष्टदिक्पालैर्भूमिपद्मं विकसितं भवति" त्यादिना एकरूपेणैव त्रीण्यपि पुरुषरूपाणि निरूपयिष्यंते । लीलावताराणां मत्स्यादीनां तु "विश्वरूपं परंज्योति" रित्यत्र मूलनिरूपण एव दिग्मात्रेण निरूपणं करिष्यते । विलासावतारस्यापि अग्रे मूलरूपण एव "चतुर्भुजं शंखचक्रशार्ङ्गप-द्मगदान्वितमि" त्यादिना निरूपणं करिष्यते । इतातः परमेतेषां सर्वेषा-मंशिभूतं मूलरूपमेव निरूपयितुं प्रक्रमते—तांये यजन्तीत्यादिनेति ॥

तथाच 'तामि'ति तच्छब्दो न केवलं पूर्वपरामर्शकोऽपि तु प्रसिद्धपरामर्शकः । परमप्रसिद्धस्तु मुख्यनिरूपणीयत्वेन मूलमूर्तिरेव नतु वासुदेवादिव्यूहमूर्तयः । तासां मूलरूपशेषत्वेनैवात्र निरूपणीय-त्वात् । एवंच तां निरुक्तानां व्यूहवैभवादीनां वक्ष्यमाणानांच लीला-वतारादिमूर्तीनामंशिनीमत एव मूलभूतांमूर्तिं "किन्तद्रूपम्" "सत्पु-ण्डरीकनयनम्" "तमेकं गोविन्दं सच्चिदानन्दविग्रहम्" इत्यादिना पूर्व-

तापिन्यां निरूपितम्। 'ये यजन्ति ते मृत्युं तरन्ती' तिसम्बन्धः। तस्य सर्व-मूलरूपत्वं तद्यजनस्य मोक्षसाधनत्वं च समुपपादयितुं मंत्रानेव पठितुं प्रतिजानाति 'तत्रेति' पुरीतामि, त्यादि '.तां साक्षाद्ब्रह्म गोपालपुरोति नि-रूपितलक्षणां "सदा ब्रह्मादिसेवितामि।" ति "रुद्रा यजन्ति ब्रह्मा यजति" इत्यादिप्रकारेणेत्यर्थः। शंखचक्र त्यादि। एतेषां स्थितिः व्यूहादि-हस्तेषु आवरणेषु च पीठभावनानुसारेण बोध्येति। अत्र सम्प्राप्य-मथुरांरम्यामित्यपि पाठः तथापि न विशेषतोभेदः॥ ४४॥

मू० तत्राप्येते श्लोकाः॥ ४३॥ तांपुरीं मथुरां प्राप्य सदा ब्रह्मादिसेविताम्। शंखचक्रगदाशार्ङ्गरक्षितां मुशलादिभिः॥ ४४॥ यत्रासौ संस्थितः कृष्णः स्त्रीभिः शक्त्या समाहितः। रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुः॥४५॥ चतुःशब्दो भवे-देको ह्योंकारस्यांशकैः कृतः॥ ४६॥ तस्मादेव परो रजसेति सोऽहमित्यवधार्यात्मानं गोपालोऽहमिति भावयेत् स मोक्षमश्नुते, स ब्रह्मत्वमधिगच्छति, स ब्रह्मविद्भवति॥ ४७॥ यो गोपान् जीवानात्म-त्वेनासृष्टिपर्यन्तमालाति ह्योंतत्सद्गोपालो भवति, यत्सोहं परंब्रह्म कृष्णात्मको नित्यानन्दैकरूपः सोहमेतद् गोपाल एव परं सत्यमबाधितं सोहमित्या-त्मानमादाय मनसैक्यं कुर्यात्। आत्मानं गोपा-लोऽहमितिभावयेत्॥ स एवाव्यक्तोऽनन्तो नित्यो गोपालः॥ ४८॥

'यत्राऽसौ' इति ॥ यत्रेति साक्षाद्ब्रह्मरूपे माथुरमण्डलाख्ये प्रकृति परे धाम्नि भूमावतीर्णः 'असौ' इति=निखिलवेदप्रसिद्धः चराचरातीतः पुरुषोत्तमः कृष्णः 'संस्थितः' इति सम्यक् कालानवच्छिन्नतया निरतिशय-परिपूर्णतया च स्थित इत्यर्थः ॥ कथंभूत इत्याह । स्त्रीभिः शक्त्या समाहित इति । स्त्रियोऽत्र ललिताविशाखाद्याः परमश्रियो राधाया अन्तरंग सख्यः । 'शक्त्येति शक्तिः सर्वशक्तिसमष्टिभूता परमश्रीः श्रीराधा । स्त्रीभिरित्यत्र सहार्थे तृतीया । साहित्यंच स्त्रीपदार्थानां शक्तिपदार्थस्य, नतु स्त्रीपदार्थस्य शक्तिपदार्थस्य च स्वातंत्र्येण कृष्णेन, समुच्चायकचकाराभावात् । तेन स्त्रीभिर्ललितादिभिरन्तरंगसखीभिः सहितया शक्त्या शक्तिसमष्टिरूपया परमश्रिया राधया समाहितः कृष्ण इत्यन्वयबोधः-तेन सखीनामपि श्रीद्वारैव कृष्णसम्बन्धो नतु साक्षात्, साक्षात्तु तस्या एव इत्युक्तं भवति । तदेतद्विशदीकृतं पुरुषार्थबोधिन्यामथर्वणोपनिषदि सप्तमखण्डे "गोकुलाख्ये माथुरमंडले वृन्दावनमध्ये सहस्रदलपद्ममध्ये कल्पतरोर्मूलेऽष्टदलकेशरे गोविन्दोऽपि श्यामः पीतांबरधरो द्विभुजो मयूरपिच्छशिरो वेणुवेत्रहस्तो निर्गुणः सगुणो निराकारः साकारो निरीहः स चेष्टते विराजते । द्वपार्श्वे चन्द्रावली राधिकाच यस्या अंशे लक्ष्मी दुर्गा विजयादिशक्तिरिति । सम्मुखे ललिता वायव्ये श्यामला उत्तरे श्रीमती ऐशान्यां हरिप्रिया पूर्वे विशाखा" इत्यादिनेति । नवमेऽपि प्रपाठके-भगवत्स्वरूपमुपवर्ण्य "तस्याद्या प्रकृती राधिका नित्या निर्गुणा सर्वालंकारशोभिता' इति । एवमेव पाद्मेऽपि वृन्दावनमाहात्म्ये "राधया सह गोविन्दं स्वर्ण सिंहासने स्थितम् । पूर्वोक्तरूपलावण्यं दिव्यभूषाम्बर-स्रजम् । त्रिभंगमंजुसुस्निग्धं गोपीलोचनतारकम् । तद्बाह्ये योगपीठे च स्वर्णसिंहासनाऽवृते-प्रत्यंगरभसावेशाः प्रधाना कृष्णवल्लभाः । ललिताद्याः प्रकृत्यंशा मूलप्रकृतीराधिकाः सम्मुखे ललिता देवी श्यामला वायुकोणके" । इत्यादिनेति । एवमेव=बृहद्ब्रह्मसंहितायांद्वितीयाध्याये "यथा मधुरिमा नीरे स्पर्शनं मारुते यथा । गन्धःपृथिव्यामनघे राधिकेयं

तथा हरौ॥'इत्यत्र कर्णिकायां राधाकृष्णस्वरूपमुक्त्वा "दलेषु ललिताद्याश्च शक्तयोऽष्टौ प्रकीर्तिता" इत्यादिना पद्मपुराणवदेव निरूपितम्। एवमेवानन्तसंहितादौ द्रष्टव्यम्। श्रीदेव्याः सर्वशक्तिसमष्टिरूपत्वमपि तत्र तत्रोक्तं यथा पाद्मे-वृन्दावनमाहात्म्ये 'तत्प्रिया प्रकृतिस्त्वयाद्या राधिका परदेवता। तत्कलाकोटिकोट्यंशा दुर्गाद्यास्त्रिगुणात्मिका' इति। तत्रैव श्रीवृषभानुगेहं गतेन नारदेन—"इच्छाशक्तिर्ज्ञानशक्तिः क्रियाशक्तिस्तवेशितुः। तवांशमात्रमित्येषा मनोषा मे प्रवर्तते। मायाविभूतयोऽचिन्त्यास्तव मायार्भमानिनः। परेशस्य महाविष्णोस्ताः सर्वास्ते कलाः कलाः। आनन्द रूपिणी शक्तिस्त्वमीश्वरी न संशयः" इति निरूपितम्। पुरुषार्थबोधिन्यामपि "यस्या अंशे-लक्ष्मीदुर्गाविजयादिशक्तिरि" त्युक्तम्। अधिकं तु पूर्वतापिन्यां 'श्रीकृष्णं ध्यायन्त' इत्यस्य व्याख्याने युग्मतत्त्वसमीक्षायांच मया निरूपितम्॥

कर्णिकाबाह्ये द्वितीयावरणेवरितो व्यूहसाहित्यमाह 'रामानिरुद्धे' त्यादि। रामः संकर्षणः अकाराक्षरसम्भूतो विश्वात्मकः। अनिरुद्धः प्राज्ञात्मको मकाराक्षरसंभूतः प्रद्युम्नस्तैजसात्मक उकाराक्षरसंभूतः 'रोहिणीतनयो रामः' इति वक्ष्यमाणाद्बोद्धव्यम्। रुक्मिण्या सहितः, इति॥ एतेन वासुदेवव्यूहसाहित्यमुक्तम् रुक्मिणीवासुदेवयोर्नित्यसहचरितत्वेन रुक्मिणीपदेन तत्सहितवासुदेवव्यूहसाहित्यसूचने तात्पर्य्यात्। रुक्मिणीपदं सत्यभामाजाम्बवत्यादीनामप्युपलक्षणम्। तथा संकर्षणादीनां रेवत्यादिसाहित्यस्याप्युपलक्षकम्। रुक्मिण्या सहितस्य वासुदेवस्य श्रीकृष्णेनाभेदोक्तिस्तु वासुदेवव्यूहस्य मूलरूपेणाधिकसंभिन्नत्व बोधनाय—अवतारलीलायां मूलरूपस्य वासुदेवव्यूहस्य च संकर्षणादिवत्पार्थक्याननुभावाच्चेतिबोध्यम्। तदेतत्सर्वं स्फुटीकृतं पुरुषार्थबोधिन्यामाथर्वणोपनिषदि एकादशे प्रपाठके 'नानाक्रीडारसं तत्र कृष्णं च परिचिन्तयेत्' इति कर्णिकायां ससखीराधया सह मूलरूपभावनमुक्त्वा-"तस्य परितः श्रीदामादिसखिनां भावनमुक्त्वा ततः परं द्वितीयावरणे"

'तद्राह्ये स्वर्णप्राचीरे कोटिसूर्यसमुज्वले' इत्यादिना तत्स्थानं निरूप्य 'तत्रोपरि परानन्दं वासुदेवं जगद्गुरुम् ॥ त्रिगुणातीतचिद्रूपं सर्व-कारणकारणम् । चतुर्भूजंमहज्ज्योतिर्ज्योतीरूपं सनातनम् । शंखचक्रगदा-पद्मधारिणं वनमालिनम् । रुक्मिणी सत्यभामा च नाग्निजीती सुल-क्षणा । मित्रविन्दा सुनन्दाच तथा जाम्बवती प्रिया । सुशीला चाष्टमहिषो वासुदेवो बृतस्ततः । उद्धवाद्याः पारिषदा वृतास्तद्भक्ततत्परा" इत्या-दिना परितो व्यूहचतुष्टयसाहित्यमुक्तम् । तथैव पाद्मेऽपि वृन्दावन-माहात्म्ये बृहद्ब्रह्मसंहितायांच द्वितीयाध्याये सपरिकरं श्रीराधासहितं गोविन्दस्वरूपं कर्णिकायामुक्त्वा पुरुषार्थप्रबोधिनोवदेव 'तद्वाह्ये स्वर्णप्राचीरे' इत्यादिना तत्स्थानमुपवर्ण्य- तत्रोपरि परानन्दं वासुदेवं जगत्प्रभुमि'त्यादिना तत्स्वरूपं निरूप्य 'रुक्मिणीसत्यभामा चेत्यादि-नाऽष्टपत्नीवैशिष्ट्यं निरूपयति ( तथैव बृहद्ब्रह्मसंहितादौचेति ) ॥

केचितु–स्त्रीभिरित्यत्र–त्रिभिरित्येवं पठन्ति । के ते त्रयः काच सा शक्तिरित्याकांक्षायां रामादयस्त्रयः, रुक्मिणी सा शक्तिरित्येवं व्याख्यातवन्तः । तच्चायुक्तमेव प्रतीयते ॥ तथासति ॥ त्रिभिः शक्त्या स-मन्वितः इत्यंशस्यैव वैयर्थ्यापत्तेः । रामानिरुद्धप्रद्युम्नेषु त्रित्वसंख्या लाभस्य बहुवचनबलादेव संभवात् । रुक्मिण्यां शक्तित्वस्य च स्त्रीत्वेन-साहित्यादेव लाभसंभवाच्च । उदाहृतग्रन्थासंगत्यापत्तेश्च । अत एव वासुदेवव्यूहस्यैवात्र मूलरूप वकथनमपि नितरामप्रसक्तम् । वासुदेव-व्यूहस्य मूलरूपांशत्वेनैवात्र समुदाहृतग्रन्थान्तरेच निरूपणादित्युक्त-मेवेति ॥ स्त्रीभिरित्येवपाठः परमप्रसिद्धोऽपि । इति न कश्चिच्चोद्यावसरः ।

चत्वारोऽपि व्यूहा मूलभूतस्य कृष्णस्यैवांशभूताः । अंशी तु कर्णि-कास्थः श्रीकृष्ण एव परमफलेप्सुभिः स एव शरणभावनपूर्वकमुपास्यः व्यूहादि तु तदंगतयैवोपसनीयमित्यर्थं स्फुटयति–"चतुःशब्द" इत्या-दिभिः । चतुः शब्द इति चत्वारो रामानिरुद्धप्रद्युम्नवासुदेवरूपाः शब्दा वाचका यस्य स चतुर्व्यूहः–"एक, इति । एकः एव परमोदेवः राम-

श्चाकारवाच्यः श्रीकृष्णो भवति। कथं भवतीत्याह 'ओंकारस्यांशकैः कृतः-इति। ओंकारस्य प्रणवस्यांशकैरवयवैरकाराद्यवयवैः कृतः। तथाच वक्ष्यति "रोहिणीतनयो राम अकाराक्षरसंभवः" इत्यादिना। एवं च यथा प्रणवस्यैवांशभूता अकारादयः' तैर्मिलित एव समग्रप्रणवस्तथा "सर्वेवेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं संग्रहेण प्रबीम्योमित्येतत्" इतिश्रुत्युक्तदिशा। "ओं तत्सदिति 'पूर्वतापिन्युपसंहारोक्तदिशा च समग्रोंकारवाच्यस्य मूलश्रीकृष्णस्यैवांशभूताश्चत्वारो व्यूहाः, ततोऽपृथक्सिद्धा इत्यर्थः। इदमुपलक्षणं वैभवादीनामपीतिध्येयम्। एतेन "कृष्णं तं विप्रा बहुधा यजन्ति" 'एको वशी सर्वगः कृष्ण ईड्यः' "इत्यादिपूर्वतापिन्युक्ता अपि मंत्रा व्याख्याताः।

'तस्मादेवेति' यस्मात् गोपालाद्यपरपर्य्यायः परमदेवः समग्रप्रणववाच्यः श्रीकृष्ण एव व्यूहादीनामप्यंशो तस्मात् एव 'परोरजसेति'। रजसेतिसंधिश्छान्दसः। तथाच रजसो' रज इत्युपलक्षितात्त्रिगुणप्रकृतेः सकाश्या त्परः' गुणातीतः। इतिशब्दोऽपि हेत्वर्थः। एवंच सर्वांशित्वाद्गुणातीतत्वाच्च 'सोऽहमिति स एव मूलरूपश्रीकृष्ण एव गोपालगोविन्दपुरुषोत्तमपरंब्रह्माद्यपरपर्य्यायः। 'अहं' अहमर्थः। आत्मेत्यर्थः। 'इत्यवधार्य्यात्मानमि' ति। आत्मानं परमात्मानमित्येवं प्रकारेण-श्रवणमननाभ्यां निर्णीय "गोपालोऽहमिति" गोपाल एव अहमस्मच्छब्दस्यार्थभूत आत्मा अहं च तदात्मक एव न ततो व्यतिरिक्तः, तदपृथकसिद्धत्वादस्वतंत्रसत्ताशून्यत्वादंशत्वाच्च, इति भावयेत्' इति, 'इति' एवंप्रकारेण भावयेत् अहर्निशं तमेवात्मत्वेन चिन्तयेत् स्वात्मानमात्मीयं च तदात्मकत्वेन तदधीनास्थितिप्रवृत्तिकत्वेन तदर्थकत्वेन च भावयेदिति परमार्थः। एतेन तत्त्वमस्यादिमहावाक्यानि' मुमुक्षुर्वैशरणंव्रजेत्" इत्यादि शरणागतिवाक्यानि चैकार्थत्वेन व्याख्यातानि। 'रजसेति' अत्र रजःशब्दस्य रागार्थकत्वे तु-प्रेम्णा भावयेदितिविशेषः॥ एतादृशभावना-

पराणां फलमाह ।। 'स मोक्षमश्नुते स ब्रह्मत्वमधिगच्छति स ब्रह्मविद्भवती'ति । मोक्षो नाम प्रकृतिबन्धविनिर्मोकः ? ततश्च त्रिविधदुःखात्यन्तनिवृत्तिः, सांख्यादीनामिष्टतमः, ब्रह्मत्वप्राप्तिः ब्रह्मात्मना स्थितिः ।। कैवल्यज्ञानिनामिष्टतमः । ब्रह्मवेदनं निरन्तरंब्रह्मानुभूत्या स्थितिः निरुक्तभगवद्वाक्यापत्तिलक्षणा–भक्तानामिष्टतमा–तत्त्रियमपि भवतीत्यर्थः । भगवतः परे धाम्नि प्रकृतिकालातीते नित्यमुक्तवत् शश्वद्भगवदनुभूत्या स्थितौ अन्ययोरपि द्वयोरर्थत एवान्तर्भावात । प्रकृतिविनिर्मोकं विना ब्रह्मभावं च विना प्रकृतिपरे ब्रह्मरूपे परे धाम्नि प्रवेशासंभवादिति ।

उक्तार्थमेव परिशोधयति "या गोपाञ्जीवानि"त्यादि। अत्र तावत् चतुष्टयं वाक्यम्। तत्र प्रथमसोऽहमान्त एकोंऽशः । द्वितीयसोऽहमान्तो द्वितीयः । मनस्यक्यं कुर्यादित्यन्तस्तृतीयः । अवशिष्टस्तुरीयः ।। "गोपाञ् जीवानि" ति–गोप्यन्ते आसृष्टिप्रलयं रक्ष्यन्ते भगवता इति गोपाः । गाव इन्द्रियाणि तानि पालयंति इति वा गोपाः जीवाः । तान् गोपान् जीवान्' आत्मत्वेन स्वात्मकत्वेनात्मीयचिच्छक्तिरूपेण परमप्रलयदशाया मात्मत्वेन स्वतोऽविभक्ततयाच 'आसृष्टिपर्य्यन्तम्" सृष्टिश्च पर्य्यन्तश्च सृष्टिपर्य्यन्तं समाहारद्वन्द्वः । पर्य्यन्तः प्रलयः । एवंच आसृष्टिपर्य्यन्त मित्यस्य सृष्टिकालं प्रलयकालं चाभिव्याप्येत्यर्थः । सर्वकालावच्छिन्नतया कालानवच्छिन्नतया वेति परमार्थः । 'य आलाति' आसमन्तात् लाति गृह्णाति स्वीयत्वेन स्वस्मिँस्थापयन्नेव वर्तते–नतु कदाचिदपि अनात्मत्वेन स्वतोवियोजयत्यर्थः 'हीति' यत इत्यर्थः ।। स च हेतुः गोपालत्वे । तथाच पाल्यत्वेन जीवानां स्वस्मिन् सदा स्थापकत्वात् कृष्ण एव गोपालो भवतीति गोपाल इत्युच्यते । जीव इत्युपलक्षणमचित्तत्त्वानामपि' तेषामपि भगवदात्मकत्वेन स्थितिः। प्रलयावस्थायां भगवदात्मत्वेन स्थितिः 'पूर्वमेकमेवाद्वयं ब्रह्मासीत, इत्यादिना वक्ष्यति । श्रुत्यन्तरेऽपि 'सदेव सोम्येदमग्र आसीत्' 'तमः परेदेवे एकी भवति" इत्यादिनोक्तम् । सृष्ट्यवस्थायामपि "चक्षुश्च द्रष्टव्यं च नारायणः" इत्यादिना निरूपितं सुबालादा विति। 'पुरुष

एवेदं सर्वं यद्भूतं यच्च भाव्यम्" इत्यादिनाऽन्यत्रापि चेति। एतावता निखिलजडजीवात्मकप्रपंचोपादाननिमित्तत्वसूचनेन रक्षकत्वं सूच्यते। तेन तदविनाभूतं सर्वज्ञत्वसर्वशक्तिमत्त्वादिकं करुणावात्सल्यादिकंचापि, आत्मत्वेन शरण्यत्वेन च भावनीये श्रीभगवति चिन्तनीयमित्यपिसूचितम्॥

अथ भावनीयधर्म्मान्तरं विशेषयति॥ 'ओंतत्सदिति'। यः खलु समस्तवेदेषु ओं तत्सदादिभिः प्रसिद्धः। "ओंतत्सदिति निर्देशो ब्रह्मणास्त्रिविधःस्मृतः" इतिगीतोक्तेः। तेन समस्तवेदवेद्यत्वमपि तत्र भावनीयमित्यपि सूचितम्। एवंच यो निखिलजडजीवात्मकजगदभिन्ननिमित्तोपादानभूतः, मुक्त्यादिदानेन पालकः, निसर्गतोनिखिलकल्याणगुणशक्तिपरिपूर्णो: निश्शेषवेदवेद्यः श्रीकृष्णः 'सोऽहम्' स आत्मा "अहं तदंशस्तद्वत्सच्चिदानन्दरूपोऽपहतपाप्मा तदात्मकस्तदधीनस्थितिप्रवृत्तिकस्तदर्थश्चेति प्रथमांशार्थः॥ 'परं ब्रह्म कृष्णात्मकः' इति–परमिति तमः परमित्यर्थः॥ 'परोरजसेतीत्युक्तेः। 'आदित्यवर्णं तमसः परस्तादि ति श्रुत्यन्तराच्च। ब्रह्मेति स्वरूपतो धर्मतश्च सर्वतः परिपूर्णः 'बृंहति बृंहयति तस्मादुच्यते परंब्रह्म' इतिश्रुतेः। कृष्णात्मक' इति कृष्णः, अपहतपाप्मा सच्चिदानन्द आत्मा स्वरूपं यस्य तथाभूतः। 'कृषिभूर्वाचकः शब्दो णश्च निर्वृतिवाचकस्तयोरैक्यं परंब्रह्म कृष्ण इत्यभिधीयते' "सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकर्मणे॥" इत्याद्युक्तश्रुतेः। तदेवाह 'नित्यानन्दैकस्वरूपः' इति। नित्यनिरतिशयाखंडानन्दघनः "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्च न" इति श्रुत्यन्तरात्। सोऽहमिति। तमः परः सर्वतः परिपूर्णो निरतिशयाखण्डसच्चिदानन्दस्वरूपो यो गोपालः स आत्मा अहं तदंशस्तद्वत्सच्चिदानन्दघनो ऽपहतपाप्मा तदात्मकस्तदधीनस्तदर्थस्तदेकशरण इति पूर्ववत् इति द्वितीयवाक्यार्थः॥ ओं तत्सद्गोपाल एव इति॥ ओं तत्सदिति प्रथमांशोविवरणोक्तरीत्या समग्रवेदैकवेद्यः। गोपाल एव निरुक्तलक्षणगोपाल एव। एवकारोऽन्ययोग-

व्यवच्छेदकः । तथाच 'गोपाल' गोपालः समस्तवेदवेद्योऽतः स एव, अहमर्थः समस्तात्मभूतः । 'परमिति' अबाधितमिति 'स्वसमानाधिक-शून्यम् । 'सत्यमिति' परमार्थभूतं त्रिकालाबाध्यम् , वस्तुतत्त्वमित्यर्थः । सोऽहमिति । एवंभूतो यो गोपालः स आत्मा अस्मच्छब्दार्थभूतो नान्य इति पूर्ववत् । 'इत्यात्मानमादायैक्यं' कुर्यादिति' उक्तरित्या स्वरूपतो गुणधर्मादितश्च परिपूर्णत्वेनात्मानं परमात्मानं श्रीगोपालमादाय याथा तथ्येन विशुद्धबुद्ध्या ग्रहीत्वा ऐक्यं स्वजीवात्मनि ऐक्यं तादात्म्यं तदंशत्वतदात्मकत्वतदधीनत्वतदपृथक्सिद्धत्वचिद्रूपत्वादिकं युंज्यादित्य-र्थः इति तृतीयवाक्यार्थः ।। 'आत्मानं गोपालोऽहमिति भावयेत्' इति ।। आत्मानमिति भगवच्चिच्छक्तिरूपं स्वात्मान मित्यर्थः । 'गोपालोऽहमि'ति इक्तलक्षणगोपालएवाहम् , नाहं ततोऽव्यतिरिक्तः तदंशत्वात्तदेकसत्ता-कत्वाच्चेति । कथंभूतो गोपालोऽहमित्याह 'स एवाव्यक्त' इत्यादि । यत्तदोनित्यसांकाङ्क्षत्वात् । य इति शिष्यते एवंच यो गोपालोऽव्यक्तः सर्वेन्द्रियातीतः, अपिच व्यज्यते कालादिभि वृद्धिह्रासादिभिविकार्यते इति व्यक्तः, ततो भिन्नोऽव्यक्तः सर्वभावविक्रियारहितः।। 'जन्मजराभ्यां भिन्नः स्थाणुरच्छेद्योऽयमित्यनुपदोक्तश्रुतेः । 'अस्थूलमनणु' इत्यादि श्रुत्यन्तराच्च । अनन्त इति, अन्तः परीच्छेदः। तद्रहित इत्यर्थः दिक्कृत कालकृतवस्तुकृतादिभिः स्वरूपतोगुणशक्त्यादिभिश्च सर्वविध परिच्छेद शून्य इति परमार्थः । नित्य इति सदैकरसइयर्थः । एतादृशो यो गोपालः स ममात्मा नान्य इत्यर्थः । इतितुरीयांशः ।।

अत्र प्रथमवाक्यांशेन जडजीवात्मकनिखिलजगदभिन्ननिमित्तो पादानत्वेन तदविनाभावसिद्धनित्यनिरतिशयज्ञानैश्वर्यादि वात्सल्य-कारुण्यादिसर्ववेदवेद्यत्वादिमत्त्वेन, द्वितीयांशेन प्रकृतिकालाद्यतीतत्वेन स्वरूपतो गुणधर्मादिभिश्च परिपूर्णत्वेन निरतिशयसच्चिदानन्दघन-त्वादिभिः ।। तृतीयांशेन-स्वसमानाभ्यधिकशून्यत्वेन परमार्थभूतत्वेन त्रिकालाबाध्यत्वादिभिः, चतुर्थेन सर्वभावविक्रियारहितत्वेनानन्त-

त्वेन नित्यत्वेन च सहित एव भगवान्, आत्मत्वेन शरण्यतया भावनीय इति निरुपितम्। सर्वांशित्वं तु तस्य 'चतुःशब्दो भवेदेकः' इत्यादिनैव निरूपितम्। तथाच सर्वतः परिपूर्ण एव भगवानात्मत्वेन शरण्यतया भगवद्भावेच्छुभिर्भावनीयः। अन्यथा भावनायाः परिपूर्णता न भवति। अपित्वंशत एव भगवान् भावितो भवेत्। तथाच तत्फलमप्यंशत एव नतु पूर्णतः। 'क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषोभवति तथेतः प्रेत्य भवति ॥ १।३।१४ ॥ इति। छान्दोग्यश्रुतेः।

एतदेव च सूचितं भगवता व्यासेन गुणोपसंहारपादे 'आनन्दादयः प्रधानस्य' इति। व्याख्यातं च केशवभट्टकाश्मीरिचरणैः-आनन्दत्वसर्वज्ञत्व सर्वात्मत्वज्ञानानन्दादिस्वरूपा ब्रह्मस्वरूपगुणा ब्रह्मस्वरूपपरासु श्रुतिषु श्रूयंते तत्र संशयः किं तेषां सर्वासु ब्रह्मोपासनासूपसंहारोस्ति उत न, तत्र प्रकरणपठितानामेवोपसंहारदर्शनात् अप्रकरणपठितानामुपसंहारे प्रमाणाभावात्, किंच तेषामसंख्येयत्वेनोपसंहारासंभवश्चेति नोपसंहर्तव्या इति प्राप्ते आह। आनन्दादय इति ॥ 'सर्वाभेदादि' त्यनुवर्तते प्रधानस्य ब्रह्मणः सर्वाभेदाद्गुणव्यतिरेकात् गुणानां सर्वत्रानन्दादयस्तद्गुणा उपसंहर्तव्याः। यत्र प्रधानं तत्रैव तैर्भावितव्यमितिभावः इति।

भगवान्—आत्मत्वेनैव भावनीयः, असौ ममात्मा इति नतु नैयायिकादिवत् पातंजलवद्वा स्वतोऽत्यन्तभिन्नत्वेन। तदुक्तं चतुर्थे प्रथमपादे 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति सूत्रेण। तत्राह भगवान् भाष्यकारः-यस्य ध्यानं नैरन्तर्येण निर्णीतं सोऽशेषदोषासंस्पृष्टमाहात्म्यः, सार्वज्ञ्याद्यसंख्येयस्वाभाविकसद्गुणशक्तिवैभवः सर्वात्मा परंब्रह्माख्यः श्रीमुकुन्दः किं स्वस्मादन्यत्वेनानुसंधेयः उत स्वस्यात्मत्वेनेति संशये किंतावद्युक्तम्, बहुशो भेदोपपादनादन्यत्वेनेति प्राह "आत्मेती"ति स ममात्माऽहंच तदात्मक इति तादात्म्यसम्बन्धेनैवानुसंन्धेयः। कुतः, यतः 'एष म' आत्मा य एष सर्वभूतान्तरात्मा इति पूर्वे महान्तोऽभ्युपगच्छन्ति। 'एषत आत्मा सर्वान्तरः' 'एष त आत्माऽन्तर्याम्यमृतः' 'ऐतदा-

त्स्य मिदसर्वं "तत्त्वमसि' इत्यादिना शिष्याँस्तथैव ग्राहयन्ति च । "अह-मात्मागुडाकेशः" 'क्षेत्रज्ञं चापि मां विद्धि' 'वासुदेवः सर्वमिति, "सकल-मिदमहंच वासुदेवः" 'वासुदेवात्मकन्याहुः' इत्यादिस्मृतेश्चेति । एवंच सपरिकरा शरणागतिः तत्त्वमस्यादिवाक्यार्थश्चैकवाक्यतया विचा-रितौ । कीदृशी पूजा चास्य गोपालस्य भवतीति' गान्धर्वीप्रश्नश्चोत्तरितः । एतादृशसर्वाभिप्रायगर्भितोऽष्टादशाक्षरो मंत्र इत्यपि सूचितम् । अष्टादशार्णमंत्रस्य तथाभूतसर्वार्थसंग्राहकत्वं रहस्यषोडशीभाष्ये स्फुट-मुपपादितं श्रीसुन्दरभट्टाचार्य्यपादैरिति । तादृशभावनयैव सर्वाति-शायिप्रेमलक्षणभक्तिप्राप्तिः भगवद्भावापत्तिश्चेत्यपि 'ब्रह्म सम्पद्यते' इति पूर्वतापिनीवाक्यैकवाक्यतया 'स मात्वमश्नुते स ब्रह्मत्वमधिगच्छति स ब्रह्मविद्भवति' इति फलवाक्येन सूचितम् । अत्र ब्रह्मवित्पदेन मोक्ष-ब्रह्मभावोत्तरभाविपरधाम्नि निरन्तरभगवदनुभव एव प्रोच्यते । नतु मोक्षहेतुभूतसाधनात्मकं ब्रह्मज्ञानम् । तथासति 'स मुक्तो भवति' इति वाक्यात्प्रागेव तत्पाठस्योपगान्नतुसर्वतः पश्चात् इत्यपि बोध्यमितिसंक्षेपः ॥

मू० मथुरायां स्थितिर्ब्रह्मन् सर्वदा मे भविष्यति । शङ्ख-चक्रगदापद्मवनमालावृतस्य वै ॥ ४७ ॥ विश्वरूपं परं ज्योतिःस्वरूपं रूपवर्जितम् । हृदा मां संस्म-रन्ब्रह्मन्मत्पदं याति निश्चितम् ॥ ५० ॥ मथुरा-मण्डले यस्तु जम्बूद्वीपे स्थितोपि वा । योऽर्चयेत्प्र-तिमां मां च स मे प्रियतरो भुवि ॥ ५१ ॥ तस्यामधि-ष्ठितः कृष्णरूपी पूज्यस्त्वया सदा ॥५२॥ चतुर्धा-चास्याधिकारिभेदत्वेन यजन्ति माम् ॥५३॥ युगा-नुवर्तिनो लोका यजन्तीह सुमेधसः । गोपालं

सानुजं रामरुक्मिण्या सहितंपरम् ॥५४॥ गोपालोऽहमजोनित्यः प्रद्युम्नोऽहं सनातनः । रामोऽहं ह्यनिरुद्धोऽहमात्मानमर्चयेद्बुधः ॥ ५५ ॥ मयोक्तेन स्वधर्मेण निष्कामेन विभागशः । तैरहं पूजनीयो वै भद्रकृष्णनिवासिभिः ॥ ५६ ॥ तद्धर्मगतिहीना ये तस्यां मयि परायणाः । कलिना ग्रसिता ये वै तेषां तस्यामत्रस्थिति ॥ ५७ ॥ यथा त्वं सह पुत्रैस्तु यथा रुद्रो गणैः सह । यथा श्रियाभियुक्तोऽहं तथा भक्तो मम प्रियः ॥ ५८ ॥

ननु यदा प्राकृतमण्डलान्तरभिव्यक्ते मथुरामण्डले प्रपञ्चस्थभक्तानुग्रहार्थं प्रकटीभवति भवान् तदैव तत्र भवत्स्थितिरुत तदानीमभिव्यक्तरूपेणान्यदाऽनभिव्यक्तरूपेण सर्वदा स्थितिरिति संशये आह 'मथुरायामि' ति प्राकृतमण्डल आविर्भूतावपि, 'मथुरायां' मथुरामण्डले शंखचक्रगदापद्मवनमालावृतस्य मे मम सर्वदा त्रिकालावच्छेदेन स्थितिर्भविष्यति । यथा अप्राकृतमण्डलस्थे माथुरमण्डले मम नियता स्थितिस्तथा प्राकृतमंडलस्थेऽपि भविष्यतीत्यर्थः । भविष्यत्प्रयोगः प्राकृतमण्डलसम्बन्धापेक्षया-अयं गृहस्थो भविष्यति इतिवद्विशेषणाभिप्रायेण, विशेषणस्य प्राकृतमण्डलसंबन्धस्य तयोःसंवादकालेऽजातत्वात् । अयं भावः । प्राकृतमंडलस्थाप्राकृतमंडलस्थौ माथुरमण्डला स्वरूपता न भिन्नौ, यथा निरवच्छिन्नघटावच्छिन्नाकाशौ । भेदस्तु तत्तदुपाधिकृत एव । इति स भेदः प्राकृतांश एव नतु माथुरमण्डलांशे माथुरमंडलं तु "साक्षाद्ब्रह्मैव" इति "सक्षाद्ब्रह्म गोपालपुरी" इत्युपपादितम् । इति यथा एक एव आकाशदेवता निरवच्छिन्ने घटावच्छिन्ने च एकरूपेणैव वर्तते नतु

तत्पूतमन्न् भावेन तथा भगवानपि प्राकृताप्राकृतमण्डलगते निज-धाम्नि एकरूप एव विराजते इति। स एव भगवान् यदा भक्तानुग्रहार्थं-चिच्छक्त्यामायां व्युदस्य प्राकृतजनगोचरो भवति तदाऽवतरति इत्युच्यते, इतिभावः।

अत्र शंखचक्रादिधारणं मूलद्विभुजरूपे पादपद्मयोरसाधारणचिह्नरूपेण बोध्यम्। वज्रांकुशादिवत्। तथाच वक्ष्यति "शंखध्वजातपत्रैस्तु चिह्नतं चरणद्वयम्" इति। तथा जितन्ते स्तोत्रे "शंखचक्रगदापद्मै रंकितं पादपंकजम्" इति। किंच तेषां धारणं नात्र वेणुपंकजादिवन्नियततया हस्तयोरपितु तद्धाम्नि-तेषां-शेषगरूडादिवत् स्वाधिकारेन स्थितिः। हस्ते तु मूलरूपे नियततया वेणुपंकजादीनामेवस्थितिः। तथाच वक्ष्यति 'वेणुश्रृङ्गधरंतु' वा, इति। गोपालविग्रहस्यैव द्विभुजस्यात्र 'सत्पुण्डरीकनयनामि" त्यादिना-ऽन्तपर्य्यन्त सर्वं मूलरूपतया प्रतिपाद्यत्वात् तस्य वेणुपंकजादिधारणस्यैव सर्वत्र प्रसिद्धत्वाच्चेति ॥

तस्यैव रूपस्य सर्वमूलरूपत्वमप्राकृतत्वं च, तद्ध्यातुरेव मोक्ष-प्राप्तिरिति पुनरभ्यसति दार्ढ्याय "विश्वरूपमि"ति–विश्वानि सर्वाणि व्यूहवैभवगुणावतारलीलावतारपुरुषावतारविलासावताराख्यानि। तथा प्राकृताप्राकृतकालक्षेत्रज्ञख्यानि च रूपाणि' अंशप्रभेदभूतानि यस्य, यद्वा तानि उद्भवन्ति प्रलीयन्ते यत्र यतो वा। अथवा व्यूहादीनां प्राकृता-दीनांच रूपमात्मा य इति विश्वरूपः तथा तम्। 'परं' प्रकृतेः परम्। अतएव 'ज्योतिःस्वरूपम्' स्वप्रकाशानन्दविग्रहम् 'सच्चिदानन्दविग्रहम्' इति पूर्वतापनीश्रुतेः ॥ "रूपवर्जितम्" निरतिशय-चिदानन्दघनस्वरूपत्वप्रत्यनीकेन प्रकृतिकालातीतस्वरूपातिरिक्तवि-ग्रहादिरहितम्। एतेन "अरूपरूपोऽह तत्रयानस्वादि" त्यधिकर-णमनुग्रहे तम्। 'मां' श्रीगोविन्दम् 'हृदा' मनसा संस्मरन् नित्य-निरन्तरमिति पूर्वान्वयि स स्मर्ता तत्पदं शाश्वतं प्रकृतिकालातीतं मम धाम याति प्राप्नोति-इत्यर्थः। नचात्र रूपवर्जितमितिकथनादुक्त

साकाररूपाद्भिन्नं रूपं वाच्यम् 'शंखचक्रगदापद्मवनमालाधरस्य' 'वै कृष्ण-रूपी पूज्यस्त्वया सदा, "गोपालं सानुजम्" इति पूर्वापरसिद्धरूपस्यैव ग्रहणस्योचितत्वात् । अन्यथा प्रकृतहानाप्रकृताभ्यागमप्रसंगात् । नराकारस्यैव तादृशसर्वदोषवर्जितत्वस्यासकृदुपपादितत्वाच्चेति ।

साक्षात्स्वरूपस्मरणस्य फलमुक्त्वा प्रतिमार्चनस्य फलमाह 'मथुरा मण्डले यस्तु' इति यः प्रतिबुद्धः, मथुरामण्डले अन्यत्र वा जम्बूद्वीपमध्ये क्वापि स्थितः प्रतिमांप्रतिकृतिरूपमपि मां अर्चयेत् स मे मम भुवि भूमण्डले प्रियतम इत्यर्थः । चेत्यप्यर्थः । भूवीति कथनाल्लोकान्तरापेक्षया भूमण्डले प्रतिमापूजनस्य श्रैष्ठ्यमुक्तं भवति । 'तस्यामि'ति यदा, यत्र क्वापि भूमण्डले प्रतिमापूजको मम प्रियतरः, तदा मथुरामण्डले मम प्रतिमापूजको नितरां प्रियतमः स्यादेवेति हे विधे त्वयापि मथुरायां स्थित्वा 'कृष्णरूपी' 'कृष्णाकारा मम प्रतिमा पूजनीया' इत्यर्थः । अत्र प्रतिबुद्धजीवप्रतिनिधि ब्रह्मा, अतः सर्वान् भगवत्प्रीतिकामान् प्रतिबुद्धजीवान्प्रतीयमाज्ञां बोध्येति ॥ यजनभेदे अधिकारभेदरूपं हेतुमाह चतुर्धेति । चतुर्धा चतुर्विधा जना मां यजन्तीति सम्बन्धः । के त चतुर्विधा इत्याह 'अस्याधिकारिभेदत्वेने'ति अस्योपासनस्येत्यर्थः । अधिकारिभेदत्वेन अधिकारिणां भेदो यत्र तथात्वेनेत्यर्थः । अधिकारिणस्तु चतुर्विधा आर्तादिभेदात् 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभः" । इतिगीतोक्तेः । "चतुर्विधा मम जना भक्ता एव हि मे श्रुतं । तेषामेकान्तिनः श्रेष्ठा ये चैवान्यदेवताः ॥ अहमेव गतिस्तेषां निराशीः कर्मकारिणाम् । ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः । सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु श्रेष्ठभाक्" इतिमहाभारते नारायणीये अर्जुनं प्रति भगवदुक्तेश्च । अत एव च तेषु एकान्ती सर्वश्रेष्ठः । गीतायामपि तेषां ज्ञानी नित्ययुक्त एकभक्ति र्विशिष्यते" इत्यत्रापि ज्ञानी एकान्ती एव । स्वयमेव गीतातः पश्चाद्भाविनारायणीये 'तेषामेकान्तिनः श्रेष्ठाः' इत्यादिनाऽर्जुनं प्रत्येवमेव व्याख्या-

तत्वात् । गीतायामपि 'एकभक्तिरि'ति पदेन तथात्वस्यैव सूचनात् एकान्त भक्तिस्तु शास्त्रगुरुवाक्याभ्यां भगवन्तं परोक्षरूपेणापि बुद्ध्वा इहामुत्र-फलभोगरागरहितो भगवदेकशरणो भगवत्कैङ्कर्यांगमात्रबुद्ध्या अहिं-सकविधिना वर्णाश्रमादिधर्म्मान्यावच्छक्यमनुतिष्ठत् श्रीमहालक्ष्मीवत् सर्वनिजस्वार्थविनिर्मुक्ततया सर्वातिशायिप्रेम्णा भगवदनुशीलनम् । तदुक्तं स्कान्दे वैष्णवखण्डे वासुदेवमाहात्म्ये नारदं प्रति धर्मपुत्रेण भगवता नारायणेन । "स्वधर्मज्ञानवैराग्यैः सह लक्ष्मीवदीश्वरे । तस्मि-न्ननन्या भक्तिर्या धर्म्मः ऐकान्तिकः स वै । वासुदेवेतरान् देवान् काल-मायावशीकृतान् । विदित्वा तेषुच प्रीतिं हित्वा तस्यैव नित्यदा । गाढ़स्नेहेन या सेवा सा भक्तिः प्रोच्यते बुधैः ॥ इत्यादिनेति । गीतायामपि "त-मेव शरणं गच्छ सर्वभावेन भारत' 'मन्मना भव मद्भक्तो' । "सर्वधर्मा-न्परित्यज्य मामेकं शरणं व्रज" इत्यादिना । नारायणीयेच । येचैना-नन्यदेवताः' 'निराशीः कर्म्मकारिणाम्' । 'अहिंसकैरात्मविद्भिः' इत्या-दिवाक्यैरित्येव सूचितम् । 'एकान्तभक्तिर्गोविन्दे यत्सर्वत्र तदीक्षणमि' त्यादिभागवतादिवाक्यार्थानामप्यत्रैवान्तर्भाव इति ।

'अवतारभेदेने'तिपाठेतु - अवताराणां वासुदेवादीनां व्यूहरू-पाणां भेदो यत्र तथात्वेन चतुर्व्यूहविशिष्टत्वेन मां यजन्तीत्यन्वयः । चकारः कामवात्सल्यादिप्रभेदसमुच्चायकः ॥ तदुक्तं ब्रह्मसंहितायां "यं कामक्रोधसहजं प्रणयादिभीतिवात्सल्यमोहगुरुगौरवसेव्यभावैः । संचि-न्त्यं तस्य तद्दशींतनुमापुरेते गोविन्दमादिपुरुषं तमहं भजामि" इति । श्रीभागवतेऽपि दशमे "कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च । नित्यंहरौ विदधतो यान्ति तन्मयतां हि ते" इत्यादि । पाठान्तरपक्षेतु वैभवगुणावतारलीलावतारपुरुषावतारविलासावताराणां समुच्चायकः । ते च निरूपिता एवेत्युपरम्यते । इति । अधिकारभेदे युगभेदहेतुमाह "युगानुवर्तिन" इति ॥ युगं सत्ययुगादि । तदनुवर्तिन इत्यर्थः । वथाच सत्ययुगादौ क्रमेण ज्ञानिजिज्ञास्वर्थार्थ्यार्त्तादयो भक्ता भवन्ती

तिभावः। युगानुवर्तिन इत्युक्तेः, अन्येष्वपि युगेषु सत्ययुगादिभाव भाविताः ज्ञान्यादयो भक्ता भवन्ति इत्यपि सूचितम् । अतएवोक्तं पुराणेषु "यस्य चेतसि गोविन्दो हृदये यस्य नाच्युतः। कलिःकृतयुगं तस्य कृतं भवति वै कलिः" इति।

येन केनापि भावेन मां भजन्तु सर्वेषामेव क्रमशः परमफलपर्य्यवसायित्वात् सर्व एव एत उदाराः। तदुक्तं गीतायां तत्रैव "उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतमि" त्यादिनेत्यभिप्रायेणाह 'सुमेधसः ? इति सुष्ठु मेधा धारणा यस्य इत्यर्थः। शोभनत्वं तु येन केनापि भावेन भगवदेकनिष्ठत्वमेव। 'कैरंगैः रूपैस्तं मां यजन्ति' इत्याह। "गोपालं सानुजमि' त्यादि ॥ गोपालशब्दोऽत्रापि मूलरूपस्यैव वाचको नतु वासुदेवव्यूहस्य "गोपालाय निजस्वरूपाय' 'तुरीयातीतो गोपालः" इत्यादिवक्ष्यमाणवाक्येभ्य इत्युक्तम्-बहुशः। तस्यांगमाह "सानुजमि" इत्यादि। अनु पश्चात् जायंते इत्युनुजाः। स्वरूपतोंऽशभूतयजनादौ अंगभूताश्चेत्यर्थः। तैः सहितमित्यर्थः। ते के इत्याह 'रामरुक्मिण्या सह तत्परम्' इति। 'रामेण सहिता रुक्मिणी रामरुक्मिणी तया सह वर्तमानमित्यर्थ। अत्र रामपदं वासुदेवप्रद्युम्नानिरुद्धानां रुक्मिणीपदं रेवतीरत्युषाणामप्युपलक्षकम्। बहुषु पुस्तकेषु 'कृष्णंरुक्मिण्या' इतिपाठः स एव समीचीनः प्रतिभाति। तथा चात्र गोपालशब्दो मूलरूपवाचकः। कृष्णशब्दो रुक्मणीशब्दसमभिव्याहाराद् वासुदेवव्यूहवाचक इति बोध्यम्। एवमपि कृष्णरुक्मिणीशब्दौ-रामरेवत्यादीनामुपलक्षकौ। तथाच चतुर्व्यूहसाहित्यमुक्तं भवति। "तत्परमिति तेभ्यो वासुदेवादिव्यूहादिभ्यः परमित्यर्थः। तच्च "गोपालमि तिविशेष्यान्वयीति बोध्यम्।

अत्र 'कृष्णरुक्मिण्यादिपदं अंगान्तराणामपि वैभवादीनामुपलक्षकमित्यपि न विस्मर्तव्यम्-इति ॥२२॥ तत्परमित्येन सूचितं व्यूहादीनां स्वात्मकत्वमाह 'गोपालोऽहमि'त्यादिना। 'अहं' 'गोपान् जीवानालाति' इत्युक्तार्थकत्वेन गोपालशब्दवाच्यः तुरीयातीतः। गोपाल एव' अजः

सनातननित्यः सन्नेव "तुरीयातीतो गोपालः" इति वक्ष्यमाणात् प्रद्यु-म्नोऽहं' रामाऽऽहम्' 'अनिरुद्धोहम् न मत्तोगोपालाद्व्यतिरिक्ता रामादयः। तस्मादात्मभूतं तत्तद्रूपेणापि मामेवार्चयेदिति वाक्यार्थः। प्रद्युम्नादिपदं वासु-देवरुक्मिणीरेवतीरत्यादिनां वैभवादीनामाप्यंगान्तराणामुपलक्षकम्। अजत्वनित्यत्वादिसमभिव्याहारस्तु स्वरूपविभागमन्तरैव निजाचिन्त्य-महिम्नैव तावद्रूपतया प्रमीयते इति बोधनाय। वासुदेवस्य स्वशब्देना-नुक्तिस्तु तस्य रामाद्यपेक्षया मूलरूपेण सहाधिकनैकट्यबोधनाय-अवतार लीलायां वासुदेवव्यूहस्य रामादिव्यूहवत् पार्थक्येनानुभावाभावाच्चे-त्यपि बोध्यम्।

वस्तुतस्तु। गोपालमि' ति पदं निर्विशेषणमेवात्र मूलरूपोपस्था-पकम्। अन्यत्सर्वमेव पदं तत्तद्व्यूहोपस्थापकं तेषु धर्मविशेषसमर्पकं च। एवांत्रानुजपदमेव वासुदेवव्यूहोपस्थापकं नित्यपदंसनातनपदं च तेषु व्यूहेषु अनन्तत्वमनादिसिद्धत्वं च बोधयत इति स्वब्देनैव वासुदेवव्यूहस्याप्युप-स्थितिरित्यपि बोध्यम्। व्यूहादीनां मूलरूपात्मकत्वनिरूपणेन तु—भग-वदेकशरणेन कथं किमर्थं, च वासुदेवादिव्यूहा अप्यनुसर्तव्या-अनुशरणे वा कथं नानन्यशरणताहानिरित्यपि समाहितेत्यपि बोध्यम्॥

केन धर्म्मेण यजनीय इत्याह— मयोक्तेनेत्यादि मया स्वयं भग-वता उक्तेन 'ब्रह्मसवनं चरतो मे ध्यात' इति पूर्वतापिन्युक्तेन स्वयं प्रकटीभूय प्रोक्तसांगशरणागतिलक्षणेनैकान्तधर्म्मेण पंचरात्रेषु गीतादौ च मयेवातिविस्तृतं विवेचितेन 'निष्कामेनेति' इहामुत्र फलभोगरहितेन नैष्कर्म्यलक्षणेन 'स्वधर्मेण' भगवदेकशरणभूतानांभगवद्दासनां जीवानां स्व-कीय धर्म्मेणेत्यर्थ। वर्णाश्रमादीनामपि भगवत्कैंकर्यांगतया शरणधर्म्मे-ष्वन्तर्भावात्। विभागशः इति पंचकालादिसमयविभागशोवर्णाश्रमादि-विभागशश्च तैः शरणागतैः सद्भिः 'भद्रकृष्णानिवासिभिः' 'द्वे बने स्तः भद्रवनं कृष्णवनंचे' त्युक्तवनद्वयवासिभिः 'अहं' व्यूहचतुष्टयोपेतः श्रीकृष्णः पूजनीयः सेवनीय इत्यर्थः। ये किल कालदोषात्-स्वास्थ्यदोषाद्वा न समग्र-

भगवद्धर्मोपेताः किन्तु मदेकशरणपरायणाः तेषामपि तत्र वर्णाश्रमधर्म्मादित्यागकृतदोषो न भवतीत्याह-'तद्धर्मगतिहीना, इत्यादि। ये अशक्तास्तद्धर्म्मगतिहीना स्वस्ववर्णाश्रमादिधर्माचरणतत्प्रकारज्ञानरहिता अपि तस्यां' मथुरायां स्थिताः, ये च कलियुगेन ग्रसिताः तेषामपि तत्र स्थितिर्विहिताः। तेषां तत्र मदेकपरायणतया स्थितिमात्रेणैव कृतकृत्यता भवति। मदेकपरायणत्वकथनेनोच्छृंखलानां तत्र मर्कटवद्वसतः पशुवत्स्वैरंचरतो न तत्फलप्राप्तिरिति सूचितम्।

ननु त्वदेकपरायणतामात्रेण कृतार्थत्वं कथमिति प्रश्ने मत्प्रीतिरेवकृतार्थतायांमुख्योहेतुः सा च भक्त्यैव भवति, इत्यतो भक्तानांसर्वाधिकप्रियत्वं निरूपयति–'यथाऽवमि' त्यादि। हे विधे यथा पुत्रैः सनकादिभिर्नारदादिभिश्च 'सहं सहितस्त्वं मे प्रियः' यथा गणैरुमानन्दीश्वरादिभिः सहितो रुद्रः शंकरो मे प्रियः। यथाच श्रिया परमलक्ष्म्या आराधारमादिपदवाच्यया सहितः 'अहं' ममात्मा मम प्रियः। तथैव मे भक्तः–'एकान्तभक्तो मम प्रियः' इत्यर्थः। श्रीसहितं निजस्वरूपं यथा मम निसर्गनिरतिशयनिरवच्छिन्नप्रेमास्पदमात्मत्वात्, तथा भक्तोऽपि ममात्मभूतत्वात्तथैव प्रिय इतिभावः। एतावता ग्रन्थेन सपरिकरं 'कीदृशी पूजाचास्य भवति, इति प्रश्नवाक्यमपि समाहितं भवतीति॥१६।२८॥

मू० सहोवाचाब्जयोनिश्चतुर्भिर्देवैः कथमेको देवः स्यादेकमक्षरं यद्विश्रुतमनेकाक्षरं कथं संभूतम् ॥५६॥

सहोवाच तं हि वै पूर्वह्येकमेवाद्वितीयं ब्रह्मासीत्तस्मादव्यक्तमव्यक्तमेवाक्षरं तस्मादक्षरान्महान् महतो वै अहंकारस्तस्मादेवाहंकारात्पञ्चतन्मात्राणि तेभ्यो भूतानि तैरावृतमक्षरं भवति ॥६०॥ अक्षरोऽहमोंकारोऽपरोऽभयोऽमृतो ब्रह्माभयं हि वै स

मुक्तोहमस्म्यक्षरोऽहमस्मि ॥६१॥ सत्तामात्रं विश्व-रूपं प्रकाशं व्यापकं तथा, एकमेवाद्वितीयं ब्रह्म मायया तु चतुष्टयम् ॥६ ॥ रोहिणीतनयो राम अकाराक्षरसम्भवः । तैजसात्मकः प्रद्युम्न उकारा-क्षरसम्भवः ॥ प्राज्ञात्मकोऽनिरुद्धो वै मकाराक्षर सम्भवः । अर्द्धमात्रात्मकः कृष्णो यस्मिन्विश्वं प्रतिष्ठितम् ॥६३॥ कृष्णात्मिका जगत्कर्त्री मूल-प्रकृती रुक्मिणी । व्रजस्त्रीजनसम्भूतः श्रुतिभ्यो ब्रह्मसंगतः ॥६४॥ प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः । तस्मादोंकारसम्भूतो गोपालो विश्व-संस्थितः ॥६५॥ क्लीमोंकारयोरेकत्वं पठ्यते ब्रह्म-वादिभिः ॥६६॥

अथ यदुक्तं "चतुःशब्दो भवेदेका ह्योंकारस्यांशकैः कृतः" इति तत्राशंकते-'स्होवाचे'ति स ब्रह्मा हेति वाक्यालंकारे । चतुर्भिर्देवै र्वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्यैःसद्भिरिति शेषः । एकोदेवः, इति एका द्वितीयरहितो देवः कथंस्यात् इति । अयंभावः एक एव परंब्रह्म गोपालो देवः केन प्रकारेण वासुदेवादिव्यूहरूपैर्देवैः स्वांशभूतैः सहितोभवतीति यद्वा 'कृष्ण एव परमोदेवः' 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादि श्रुतिसहस्रप्रतिपाद्य एक एव ईश्वर इति सिद्धान्तो व्याहतः । पंचेश्वरा-श्वरापातात् ॥ अथ एकोंशी मूलभूतः, अन्येच तदंशा वासुदेवादयस्तदं शभूतगुणशक्त्यादिशालिनस्तदपृथक्सिद्धा इति नानेकेश्वरस्वीकारा-पत्तिरितिचेत्तदाप्याह-'एकमक्षरमि' त्यादि एकमक्षरंप्रणवाख्यम् 'ओमि-

त्येकात्तरमि' त्यादौ यद्विश्रुतं तत् अनेकात्तरमकारादिवर्णचतुष्टयोपेतं कथमभूत् । एकम् । इति द्वितीयरहितं । निरंशम् । अत्तरमिति । त्तरति परिणामादिभावविक्रियांप्राप्नोतीत्यत्तरस्तद्भिन्नमत्तरः तथाभूतमित्यर्थः ॥ 'यद्विश्रुतमि' ति यद्ब्रह्म शास्त्रेषु विशेषेण श्रुतम् । तदित्यध्याहर्तव्यम् । यत्तदोर्नित्यसम्बन्धात् । तत् ब्रह्म 'अनेकात्तरमि' ति-अनेकंचतदत्तरंचानेकात्तरम्—कथं केन प्रकारेण हेतुना च अभूत् जातमित्यर्थः । एतदुक्तं-भवति शास्त्रेषु तावत् 'एकामेवाद्वयम्' ? 'एकधैवानुद्रष्टव्यं नेह नानास्ति किंचन' 'मृत्योः स मृत्युमाप्नोति य इहनानेव पश्यति" । इत्यादौ एकमेव ब्रह्म श्रूयते । तथा 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनम्" "जन्म जराभ्यांभिन्नः स्थाणुरच्छेद्योऽयम्" "इत्यादौ कलावयवादिपदवाच्यांशरहितं सर्वविक्रियारहितं च श्रूयते । एवंच निरंशस्य सर्वविक्रियारहितस्य च परब्रह्मणोऽशंतोऽप्यनेकत्वं कथं जातमिति । अन्येतु "ओमित्येकात्तरंब्रह्म" इत्यादौ शास्त्रे एकात्तरं यद्विश्रुतं प्रणवाख्यं तदनेकात्तरमकारादिवर्णचतुष्टयापेतंकथमभूदित्याहुः । तदयुक्तमाभाति । प्रणवस्यैकात्तरत्वेऽप्यनेकात्तरत्वस्य परमप्रसिद्धत्वात् । शंकापूर्वांशस्य 'कथमेकादेव' इत्यस्य निर्हेतुकत्वापत्तेश्च । तस्मात् । यथा व्याख्यातमेव-चारु-प्रतिभातीति ॥ ५६ ॥

अथात्रैकमेवाद्वितीयं निर्विभागमेव ब्रह्म निजाखण्डस्वरूपविभागमन्तरैवाद्वितीयं सदेव निजाचिन्त्यस्वरूपमहिम्नैव वासुदेवादिचतुर्व्यूहभावेन प्रमीयते-इत्युत्तरितव्यन्तत्र दृष्टान्ताय प्रथमं परब्रह्मण एकत्वादिप्रतिपादनपूर्वकं ततोऽव्यक्तादिसृष्टिमाह । **'महोवाच' तं हि वै. इत्यादि**—एष श्रुतिभागो ब्रह्मसूत्रस्य वेदान्तकौस्तुभप्रभायां द्वितीयाध्याये "विपर्ययेण क्रमोऽत उपपद्यते च" इति सूत्रव्याख्याने श्रीकेशव काश्मीरिभट्टपादैः सुबालश्रुतिव्याख्यानान्तरं "गोपालोनिषच्छ्रुत्यर्थस्तु "त स्माद्ब्रह्मणोऽव्यक्तं" प्रधानमासीत् "अव्यक्तमेवे" ति एवकारोऽयोगव्यवे-

च्छेदार्थम्, यदव्यक्तं तदेवाक्षरशब्दवाच्यं, यद्वा यदव्यक्तं तदक्षरं' ब्रह्मैव, शक्तिशक्तिमतोरभेदात्। तस्मादक्षराद्ब्रह्माधिष्ठितादव्यक्तान्महान्' इति। शेषंपूर्ववत्। तैः कृतैः भूतैरक्षरंजीवरूपमावृतं भवति तन्निमित्तस्थूलशरीरवान् भवति। इति सृष्टिक्रमः, तद्व्युत्क्रमेण लयक्रमः" इत्यन्तग्रन्थेन व्याख्यातः। "सहोवाच पूर्वमेकमेवाद्वितीयं ब्रह्माऽसीत्" इत्यंशेऽपि तत्रैव "सहोवाच पूर्वमेकमेवाद्वितीयम्' 'तं हि वै पूर्वमेकमेवाद्वितीयं ब्रह्माऽसीत् इत्यादि गोपालोपनिषच्छ्रुतिश्च व्याख्याता इति प्रतिज्ञाय "तथाहि सृष्टेः पूर्वमविनाशि वस्तु किमासीत् इतिशिष्यवर्गेण पृष्टो गुरुस्तस्मै ह पूर्वं स्फुटमुवाच। सृष्टेः पूर्वं यद्वस्त्वासीत् तत्सत् स्थूलं तेजोऽन्नरूपं नासीत् असत्सूक्ष्मंप्रधानादिरूपं च नासीत् सदसत् 'वायुरूपं च नासीत् तर्हि किमासीदितिचेत् तत्तद्विलक्षणंसूक्ष्मशक्तिकं ब्रह्मासीदित्यस्य 'परे देवे एकी भवति' इति तत्प्रकरणश्रुत्युक्तदिशा नामरूपविभागानर्हं चिदचिच्छक्तिकं ब्रह्मासीदित्यर्थः। इति। तथैव प्रकृत्यधिककरणे प्रथमाध्याये चतुर्थपादे तैरेव विवेचितम्। सूक्ष्मशक्तिकं ब्रह्मैवासीत्, इतिशेषः। इतिसुबालश्रुतिव्याख्यानातिदेशेन व्याख्यातः। एकैवाद्वितीयपदानामपि आरम्भणाधिकरणे "यथा च प्राणादि" रितिसूत्रव्याख्याने 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमि' ति छान्दोग्यश्रुतिव्याख्यानेन तथैव व्याख्यातम्। श्रुत्यर्थस्तु स्वतंत्रसत्ताश्रयः सत्पदार्थः "आत्मा हि परमः स्वतंत्रोऽधिकगुणः" इतिश्रुतेः। एकपदं ब्रह्मणः क्षराक्षराभ्यामुत्कर्षरूपं प्राधान्यं विधत्ते 'एके मुख्यान्यकेवलाः" इत्यमरोक्तेः। "एकशब्दोऽयमन्यप्रधानासहायसंख्याप्रथमसमानवाची" इति 'एको गोत्रे' इतिसूत्रे कैयटोक्तेश्च। सहायान्तरशून्यपरो वा 'ष्णान्ता षडि' तिसूत्रे एकशब्दोऽयं बह्वर्थः। अस्ति संख्यान्तेऽस्त्यसहायवाची अस्त्यन्यार्थः" इतिमहाभाष्यकारोक्तेश्च। तथाच क्षराक्षराभ्यामुत्कृष्टमन्यसहायहीनमेकसंख्याकमेकपदार्थः। "प्रधानक्षेत्रज्ञपतिः" "अक्षरात्परतः परः', इतिश्रुतेः। "यस्मात्क्षरमतीतोऽहम्" "मत्तः परतरं नान्यत्' इति श्रीमुखोक्तेश्च। अयोगव्यवच्छेदार्थः प्रथम एक शब्दः।

तदधिकोत्कृष्टव्यवच्छेदपरो द्वितीयः, स्वातिशयवस्तुशून्य इत्यर्थः ।ः अद्वितीयशब्दश्च समाननिषेधपरः ॥ 'न तत्समश्चाभ्यधिकश्च दृश्यते' इतिश्रुतेः । 'न त्वत्समोऽस्त्यभ्यधिकःकुतोऽन्यः' इतिस्मृतेश्च । यद्वा एकशब्दः संख्यापरः। एवाद्वितीयशब्दयोश्चेतनाचेतननिषेधपरत्वं उभयोरपि ब्रह्मसमस्वतंत्रसत्ताकत्वाभावात् । किंच स्वसमानसत्ताकानन्तासंख्येयज्ञानादिकल्याणगुणधर्म्माणामपि स्वरूपेतरस्वतंत्रसत्ताभावेन तद्गतस्वतंत्रसत्तानिषेधोऽप्यविरुद्धः ॥ "तदासीतदधीनमासीत्" इतिश्रुतेः । तथाच चेतनाचेतनानां स्वगतधर्म्माणां च तदात्मकत्वाद्यविशेषेण तदपृथक्सिद्धत्वात्—'ऐतदात्म्यमिदं सर्वमि'ति । अग्रिमवाक्यात् ।'वासुदेवात्मकान्याहुरि'ति स्मृतेश्च एव एव स्वतंत्रसत्ताश्रयः सत्पदार्थ आत्मा यस्य स तदात्मा तस्य भावस्तत्त्वमिति श्रुत्यर्थः ।' इत्यादिग्रन्थसन्दर्भेण । परपक्षोऽपि तत्रैव विस्तरेण समालोचित इत्यधिकं तत्रैव द्रष्टव्यमिति । एवमेव च श्रीपुरुषोत्तमाचार्य्यैरपि वेदान्तरत्नमंजूषायां व्याख्यातम् । ब्रह्मशब्दार्थस्तु निरुक्तरीतिकानविभक्तचिदचिच्छक्तिकोनिरतिशयसच्चिदानन्दघनानन्तकल्याणगुणशक्तिस्वभावपुरुषाकारः श्रीकृष्ण एव बोध्यः । नतु ततो भिन्नः कश्चित्पदार्थः—'कृषिभूर्वाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" "सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।" इत्युपक्रमवाक्याभ्याम् । 'योऽसौ ब्रह्म परं ब्रह्म गोपाल' 'ओंतत्सत्' 'तुरीयातीतो गोपाल' इत्याद्युपसंहारश्रुतिभ्यश्च । तथा 'तदेव ब्रह्म परमं कवीनाम्' इतितैत्तरीयमहानारायणवाक्यात् । "पूर्णशक्तिः पूर्णगुणो निर्दिष्टः सकलेश्वरः ।" 'स विष्णुर्ब्रह्मसंज्ञोऽसौ कवीनां सम्मता विभुः । नान्येषां ब्रह्मता कापि तच्छक्त्येकांशभागिनाम् । ब्रह्मशब्दं सोपपदं ब्रह्मादिषु विदुर्बुधाः । तदेतच्छास्त्रगम्यंहि जन्माद्यस्य महाविभोः, इति स्कान्दे वैष्णवखण्डेवैशाखमाहात्म्ये तदुपबृंहकशंखवाक्याच्चेतिविस्तृतं विवेचितमेव पूर्वतापिन्यां 'परंब्रह्म तदि'त्यस्यव्याख्याने, उत्तरतापिन्यां च "एको ह वै नारायणो देव" इत्यस्य

व्याख्यानेचेति तत्रैव द्रष्टव्यम् । किंच सर्वस्यैव पूर्वोत्तरतापिनीग्रन्थस्य 'कः परमो देवः' 'तस्मात्कृष्ण एव परमो देवः' 'सर्वेश्वरं गोपालः 'ब्रह्म परं ब्रह्म गोपालः' इत्याद्युपक्रमोपसंहारादिवाक्यैः कृष्णमात्रस्यैव स्वसमानाभ्यधिकदेवत्वसाधने तात्पर्य्यावधारणात् । कयाऽपि दृष्ट्याऽत्र ब्रह्मशब्दस्य प्रकृतश्रीकृष्णातिरिक्तार्थकल्पने महद्व्याघातापत्तेरचेत्यूहनीयम् ॥६०॥

'अक्षरोऽहमि'त्यादि । अक्षरः' इति-अव्यक्तमेवाक्षरमित्यात्राक्षरः । अक्षरमिति सर्वेषां महदादिकार्य्याणामुपलक्षकम् । तेन कार्य्यमात्राणां भगवदात्मकत्वमुक्तं भवति । ओंकारः प्रणवः ॥ ६१ ॥ अथ तथात्वेऽपि स्वस्य सर्वविकाररहितत्वमाह—"अजरोऽमरोऽभयोऽमृतोब्रह्माभयं हि वै स मुक्तोऽहमस्म्यक्षरोऽहमस्मि" इति । एवंदृष्टान्तमुपपाद्यदार्ष्टान्तमुपपादयति । "सतामात्रमि" त्यादि 'सत्तामात्रमिति' सदेकरसमित्यर्थः । मात्रपदमंशतोऽपि असदंशस्य तत्र सद्भावव्यावर्तनायोक्तम् । विश्वरूपमिति—सर्वरूपमित्यर्थः । अनन्तरूपमितियावत् । प्रकाशमिति । स्वरूपतोधर्म्मतश्च-स्वतःप्रकाशं ज्ञानरूपमित्यर्थः । व्यापकमिति सर्वव्याप्तिमत्—अपरिच्छिन्नमित्यर्थः । अत्रानुक्तमप्यानन्दरूपत्वम्—"सच्चिद्वाचकशब्दसाहचर्य्यादुक्तप्रायमेव—'एकमेवाद्वयं' ब्रह्म इत्यंशस्तु अनुपदव्याख्यातमेव । तथाच 'सत्यंज्ञानमनन्तंब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'सच्चिदानन्दरूपाय कृष्णयाक्लिष्टकर्म्मणे' । तमेकं गोविन्दं सच्चिदानन्दविग्रहम् ।' 'तयोरैक्यं परं ब्रह्म कृष्ण" इत्यदि श्रुतिप्रतिपादितं निरतिशयसच्चिदानन्दघनविग्रहं कृष्णाख्य मेकमखण्डं स्वसमानाधिकतत्त्वान्तरशून्यं स्वतंत्रसत्ताकवस्त्वन्तरशून्यंस्वतंत्रसत्ताकं नित्य निरतिशयानन्तगुणशक्त्यादिपरिपूर्णतमं श्रीकृष्णाख्यं ब्रह्म 'मायया'निजासाधारणनिजस्वरूपमहिमरूपया एव चतुष्टयम् वासुदेवादिव्यूहभावेन चतुष्टयरूपेणापि भासते इति तदर्थः । तुशब्दो निजासाधारणस्वरूपमहिमरूपमायातिरिक्तसाधनस्य स्वरूपगतपरिणामविभागादिविक्रियायाश्च व्यावर्तकः ।

तथाच यथा 'स्वप्रकाशसत्यज्ञानानन्दघनं ब्रह्म निजाचिन्त्यमहिम्ना अव्यक्तादिजगदाकारेणापि परिणते-तथाप्यखण्डंसर्वविक्रियारहितमेवभवति नतु विकारादियुक्तमपि प्राकृतपदार्थवत्, अयमेव तस्य जीवप्रधानाद्यपेक्षया महान्विशेष: । तत्र तस्याचिन्त्यमहिमैव हेतु: नाऽन्यत् । तथोपपादितं भगवता वेदव्यासेन । 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्' । 'आत्मकृते: परिणामात्' । 'श्रुतेस्तु शब्दमूलत्वात्' । 'आत्मनिचैवंविचिहि' । 'सर्वोपेता च दर्शनात्' । इत्यादि । तथाचाविचिन्त्य—स्वरूपमहिम्नैव स्वरूपविभागमन्तरैव वासुदेवादिव्यूहरूपेण केशवादिवैभवादिरूपेणापि भवति । तावतापि सर्वविविक्रियारहितोऽखण्डसत्यचिदानन्दघनविग्रह एव भवति । नात्र तर्कविरोध: शंक्य: तस्य प्राकृतत्वापाद्यापादकमूलकत्वेन प्राकृत एव परिसीमितत्वात् । अतएव काठके "नैषा तर्केण मतिरपनेया" इति श्रुतिर्भवति । 'अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृऽभ्य: परं यच्च तदचिनयस्य लक्षणमि' तिस्मृतिश्च "श्रुतेस्तुशब्दमूलत्वात्" 'तर्काप्रतिष्ठानात्' इत्यादिसूत्राणिचेतिभाव: ।

ननु—मायात्वविद्यैव । एवंच "मायया तु चतुष्टयमि" त्युक्ते: अविद्ययैव जीवगतया वा ब्रह्मगतया वा जगद्रूतेण व्यूहादिरूपेण ब्रह्मण:प्रतीति: । एवंच सा न वास्तवीत्येतदप्युक्तं भवतीतिचेन्न । अत्र मायापदेनाविद्याया. अविवक्षणात् ब्रह्मणाऽचिन्त्यमहिम्न इच्छाशक्तेरेव मायापदेन विवक्षणाच्च । नच "मायां तु प्रकृतिंविद्यान्मायिनं तु महेश्वरम्" इतिश्रुते: । प्रकृतिरेव माया प्रकृतिश्च त्रिगुणात्मिकैवेतिवाच्यम् । ब्रह्मानात्मिकायास्त्रिगुणात्मिकाया:प्रकृते: ब्रह्मसूत्रकृता 'ईक्षतेर्नाशब्दम्' आनुमानिकमप्येकेषामि" इत्यादिना महता प्रपंचेन निराकृतत्वात् ॥ स्वरूपमहिम्नैव ब्रह्मण: सर्वभवनस्य "सर्वोपेता च दर्शनात्' इत्यादिसूत्रकदंबैस्तै: साधितत्वात् । तस्मान्मायां तु प्रकृतिंविद्यात' इत्यादौ ब्रह्मात्मिकाऽचिच्छक्तिरेव मायापदेनोच्यते । "इन्द्रोमायाभि: पुरुरूप ईयते" इत्यादौ तु मायापदेन ब्रह्मण: स्वरूपधर्मान्तर्भूता इच्छाशक्तिरेवोच्यते 'तस्माद्ब-

दान्तेषु मायाशब्देन क्वचिद्ब्रह्मात्मिकाऽचिच्छक्तिरथ च क्वचित् स्वरूपधर्म्मभूता, ईक्षणशक्तिः क्वचित् इच्छाशक्तिरेवोच्यते, मीयते कार्य्यमनया इतिव्युत्पत्तेः। 'माया वयुनंज्ञानमि' ति निघण्टुकोशात् "माया दम्भे कृपायांच, इति विश्वकोशात् "माया स्याच्छांबरीबुद्धयोरि त्रिकाण्डशेषाच्च मायाशब्दस्य नानार्थकत्वेन सर्वार्थसंग्राहकत्वात्। इह तु मायापदेन ईक्षणशक्तिरेव विवक्षिता। अतएव "स ईक्षांचक्रे' 'स ऐक्षत सोऽकामयत' इत्यादौ सर्वत्र सृष्टिप्रकरणे निजसत्यसंकल्पेनैव ब्रह्मणः सर्वकारणत्वमुक्तं नत्वविद्यासाहाय्येन। तस्मात् निजसत्यसंकल्पेन स्वरूपमहिम्नैव सर्वं भवतीतिबोध्यम्। अविद्यावादनिराकरणं तु सिद्धान्तजाह्नव्यादौ वेदान्तकौस्तुभप्रभादौच द्रष्टव्यमितिसंक्षेपः ॥ ६२ ॥

**अथ संकर्षणादीनां**—तत्तत्प्रणवावयवद्वारा समग्रप्रणववाच्येऽखण्डप्रणववाच्ये च तुरीयातीते मूलरूपे गोपालाद्यपरपर्य्याये परे ब्रह्मणि परमे देवे श्रीकृष्णेंऽगतया भावनार्थं समग्रप्रणवस्य तत्तदवयवादीनामिव व्यूहानां मूलरूपांगत्वबोधनार्थंच 'चतुःशब्दाभवेदेक ओंकारस्यांशकैः कृतः" इत्यनेन पूर्वप्रतिज्ञातार्थमुपपादयति। "रोहिणीतनयो रामः" इत्यादि। रामान्तरव्यावृत्यर्थं रोहिणीतनय-इति। माण्डूक्यादौ विश्वादीनामकाराद्यक्षरात्मकत्वोक्तेर्विरोध इत्याह 'विश्वात्मक' इत्यादि विश्व आत्मा रूपं यस्य तथेत्यर्थः। तथाच योऽन्यत्र विश्वादिशब्देनोक्तः स एवात्र संकर्षणादिशब्देनोच्यते। तेन न वस्तुभेद इतिभावः। एवं प्रद्युम्नानिरुद्धादीनामपिबोध्यम्। **अर्धमात्रात्मकः कृष्ण इति**। तुरीयात्मकः कृष्णो वासुदेवव्यूह इत्यर्थः। ननु तुरीयस्तु अमात्र एवोच्यते 'अमात्रश्चतुर्थोऽव्यवहार्यः प्रपंचोपशमः' इतिमाण्डूक्यश्रुतेरितिचेन्न तत्र मात्रापदेन अकारोकारमकारात्मकमात्रात्रयस्यैव ग्रहणात्तदन्यस्यार्धमात्रत्वेऽप्यमात्रत्वात्। प्रकृतेऽपि अकारोकारमकारात्मकमात्रात्रयेण रामादीनां स्फुटं ग्रहणात्? तत्त्रितयमात्रातिरिक्तात्मकस्य विश्वादित्रयभिन्नत्वेन

प्रतिपाद्यस्य वासुदेवस्य तुरीयात्मकत्वप्रतिपादने स्फुटं तात्पर्य्याऽवगमात् । अत एवाग्रे जाग्रत्स्वप्नसुषुप्तितुरीयतुरीयातीताऽतर्य्यामीगोपाल' इत्यत्र गोपालपदवाच्यस्य मूलरूपस्य तुरीयातीतत्वं निरूपयिष्यते । माण्डूक्ये विश्वादीनां जाग्रदादिरूपत्वकथनात् । अत्रतु रामादीनां विश्वादिरूपत्वकथनात् । तत्रापि तुरीयत्वेन वासुदेवस्यैव सूचनं प्रतीयते ॥ नच माण्डूक्योक्तस्तुरीयः,अव्यवहार्य्यः'अदृष्टमव्यवहार्य्यमि'ति तत्रैवोक्तेः वासुदेवस्तु व्यवहार्य्य इति वाच्यम् । लौकिकव्यवहारागोचरत्वस्य तत्रापि तुल्यत्वाच्छास्त्रीयव्यवहार्य्यत्वमप्युभयत्र समानं, अन्यथा कं तुरीयं तुरीयत्वादिनापि निरूपयेदिति । एवं च तुरीयस्यामात्रत्वमकारोकारमकारापेक्षया । अर्धमात्रत्वं तु नादबिन्द्वाद्यपेक्षयेतिबोध्यम् ॥

कृष्णात्मिकेति । कृष्णो वासुदेव आत्मा यस्याः सा कृष्णात्मिका तथाभूता रुक्मिणी इत्यर्थः । रुक्मिणीशब्दोऽन्यासामपि वासुदेवव्यूहपत्नीनां सत्यभामाजाम्बवत्यादीनामुपलक्षकं तत्प्रधानत्वात् । ताः सर्वाः वासुदेवात्मिकाऽत एव तुरीयात्मका इतिबोध्यम् । रेवत्याद्या अपि रामाद्यात्मका इत्यपिबोध्यम् । रुक्मिणीपदस्य तुल्यन्यायेन तत्सर्वोपलक्षकत्वादिति ॥ इतः परं मूलरूपं निरूपयति– व्रजस्त्री जनसंभूतः' इत्यादि । व्रजस्त्री साक्षाच्छ्रीदेवी श्रीवृषभानुनन्दिनी श्रीराधा । तत्रैव व्रजस्त्रीशब्दस्य मुख्यवृत्तेः, तत्प्रधानत्वादन्यासां यथा अवन्तिसुन्दरी इत्युक्तेऽन्तीषु सर्वाभ्यः सुन्दरीत्वेन प्रथिता या तस्या एव विशेषतो बोधो भवति । तथाऽत्रापि व्रजे निखिलस्त्रीगुणविशिष्टत्वेन सर्वाभ्यः प्रथिता या तस्या एव बोधो भवति । श्रीराधाया सर्वस्त्रीश्रेष्ठत्वं 'तासांमध्ये श्रेष्ठा गान्धर्वी' इति स्वशब्देनैवोक्तम् । जनः' तस्या एव सखीगणः । अथवा व्रजस्त्रीजनशब्देन समस्तेनैव तासां सर्वासां समूह उच्यते । तैः संभूतः सद्भावितः । 'अस भुवि' इति धातुपाठात् । श्रुतिभ्य इति । ब्रह्मसंगतः । ब्रह्मणा अक्षरब्रह्मणा संगतः सम्यग्गतः स्वप्रतिष्ठात्वेन नित्यं प्राप्तः । 'ब्रह्मणोहि प्रतिष्ठाहममृतस्याव्ययस्यच । शाश्वतस्य च धर्मस्य सुखस्यै-

कान्तिकस्यच ॥' इति गीतायां श्रीमुखोक्तेः । यद्वा ब्रह्मणि अक्षराख्ये स्वधाम्नि संगतः प्रतिष्ठितः । "साक्षाद्ब्रह्मगोपालपुरी" इत्यनुपदव्याख्यातश्रुतेः । यद्वा ब्रह्मणः अक्षरब्रह्मणः सकाशात् संगतः सम्यग्गतः, अतिक्रान्तः, अतीत इतियावत्–'अक्षरात्परतः परः' 'अक्षरादपिचोत्तमः' इत्यादिश्रुतिस्मृतिभ्यः । सर्वेष्वप्यर्थेषु 'श्रुतिभ्य' इति प्रतिपादकतया-हेतुत्वेनान्वेति । तथा च सर्वातिशायिपरिपूर्णतमः, इत्येवं श्रुतिप्रतिपादित इत्यर्थः ॥

किंच यतः 'प्रणवत्वेने'ति समग्रप्रणववाच्यत्वेन प्रकृतित्वं प्रणवावयवाकारादिमात्राद्भवानां विश्वादितुरीयान्तरूपाणां संकर्षणादि वासुदेवान्तानां मूलकारणत्वं तस्य 'ब्रह्मवादिनो' वेदमर्म्मज्ञाः 'वदन्ति' निरूपयन्ति । अग्रिममंत्रे तस्मादित्युक्तेः पूर्वमंत्रे यत इति शिष्यते । फलितमाह–'तस्मादि'त यस्मात् "व्रजस्त्रीजनसंभूतो गोपाल एव सर्व श्रुतिभ्यो ब्रह्मसंगतः" प्रणवावयवसंभवानां विश्वादितुरीयान्तरूपाणां संकर्षणादिवासुदेवान्तानां मूलप्रकृतिः तस्मात् इत्यर्थः । 'ओंकारसंभूतः' समग्रेष्वोंकारार्थेषु विश्वादिषु, अन्येषुच संभूतः प्रकृतित्वेन सम्यग्भावेन सत्तया स्थितः । अत एव स एव विश्वसंस्थितः विश्वेषु रामादिव्यूहचतुष्टयेषु संस्थितः । यद्वा विश्वरूपाणांरामादीनां संस्थितः सम्यक्स्थित्याश्रय सत्ताश्रय इत्यर्थः । तथाच गोपीजनवल्लभो गोपाल एव रामादिरूपेण भासते । तथाच स एव सर्वातिशायितत्त्वं नान्यः । ततो व्यतिरिक्तं किंचिदपीतिभावः । एष एव गोपाल उपसंसारे 'गोपालाय निजस्वरूपाय' 'तुरीयातीतो गोपालः' इति श्रुतिभ्यां निजरूपत्वेन तुरीयातीतत्वेन च निरूपयिष्यते इति बोध्यम् । तस्येह व्रजस्त्रीजनविशिष्टत्वेन निरूपणंतु रुक्मिण्या वासुदेवात्मकत्वेन तुरीयात्मकत्ववत् व्रजस्त्रीणामपि मूलरूपगोपालात्मकत्वेन सर्वस्त्रीमूलरूपत्वतुरीयातीतत्वयोर्बोधनायेत्यपि बोध्यम् । तदुक्तं सौभाग्यलक्ष्म्युपनिषदि 'तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमंत्रासनगतां पीठोपपीठदेवतापरिवृतां चतुर्भुजांश्रियं

हिरण्यवर्णामिति पंचदशर्भिध्यायेत्" इति। एवंच एकस्या एव परमायाः श्रीदेव्यास्तुरीयव्यूहपत्नीरूपेण तुरीयरूपत्वं तुरीयातीतमूलरूपपत्नी-रूपत्वेन तुरीयातीतत्वमिति। अधिकं तु "तुरीयातीतोगोपालः" इत्यत्र वक्ष्यते तदिहानुसन्धेयम् ॥

अत्र व्यूहानां प्रणवतत्तदवयववाच्यत्वं मूलरूपस्य तु समग्र-प्रणववाच्यत्वं निरूपितं, तेन सर्वषामेव समग्रप्रणवार्थत्वेन निरूपकाणां "सर्ववेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तोब्रह्म-चर्य्यं चरन्ति तत्तेपदं संग्रहेण ब्रवीम्योमित्येतत्' इत्यादिश्रुतिवाक्या-नामपि श्रीकृष्णे मूलरूपे समन्वय उक्तोभवति। तत्रैव च तत्सहचरितानां तत्सदादिशब्दानां तत्तच्छन्देन निरूपकानां 'सदेव सोम्येदमग्र आसीत्। इत्यादिश्रुतिवाक्यानामपि समन्वयः सूचितो भवति। तदेतेन पूर्व-तापिन्यामन्ते "कृष्ण एव परमो देवः "ओं तत्सत्" उतरेच 'गोपाल-ओंतत्सत् इतियदुक्तं तदपि सुष्ठूपपादितंभवति ॥ एवमपि पूर्वता-पिन्यां क्लींकारस्य सर्वबीजत्वोपपादनमिह तु प्रणवस्य तथात्वोपपादन-मिति परस्पर विरुध्यते, अतः स्वमुखेनैव श्रुतिस्तयोरेकत्वं निरूप-यति "क्लींमोंकारयोरेकत्वं पठ्यते ब्रह्मवादिभि" रिति व्याख्याता चेयं श्रुतिः श्रीसुन्दरभट्टपादैः 'मंत्ररहस्यषोडशीभाष्ये-यथा "तथा गोपालोत्तरतापि-नीये ह्याम्नायते 'क्लींमोंकारयोरेकत्वं पठ्यते ब्रह्मवादिभि' रिति। एकत्वं नाम एकार्थत्वं तुल्यार्थवाचकत्वम्। यथा प्रणवः सर्ववेदबीजं सर्ववेदार्थ-गर्भकश्च। 'प्रणवःसर्ववेदेषु इति श्रीमुखोक्तेः। तथैव बीजमंत्रोऽपि तथा-भूतस्तथाभूतार्थज्ञापकश्चेति प्रणवपर्य्यायरूपत्वादस्य वर्णस्येति श्रुति-तात्पर्य्यार्थः। प्रकृतिवद्विकृतिरिति चोदकश्रुतेरिति तदेवं तयोरेकार्थत्वे न कश्चिद्विरोधः" इत्यादिनेति।

**अस्य व्याख्यानमाह** प्रकारान्तरेणापि गौतमीयतंत्रे द्विती-याध्याये गौतमं प्रति महर्षिर्नारदः "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम। तत्त्वानि चेश्वरश्चैव ब्रह्मैतत्पंचकं मतम्"। सर्गान्तः पुरुषश्चैव तुर्य्याख्या

प्रकृति स्मृताः । तत्त्वानि मांसरूपानि कालश्च तत्त्वरूपकः ॥१२॥ ईश्वराख्यो भवेन्नादो बिन्दुश्चैतन्यचिन्मयः । एतद्विज्ञानमात्रेण जीवन्मुक्तो महींचरेत् ॥१३॥ नास्य कालकलापेक्षा न तीर्थायतनानि च ॥१४॥ क्लींकारदसृजद्विश्वमिति प्राह श्रुतेः शिरः॥ लकारात्पृथिवी जाता ककाराज्जलसंभवः ॥१५॥ ईकाराद्वह्निरुत्पन्नो नादाद्वायुरजायत ॥ बिन्दोराकाशसंभूतिरिति भूतात्मको मनुः ॥१६॥ इति । स्वाहाशब्दार्थमाह तदग्रे "स्वशब्देन तु क्षेत्रज्ञा हेति चित्प्रकृतिः परा । तयोरैक्यसमुद्भूतिर्मुखवेष्टेन वर्णकः ॥१७॥ अत एव हि विश्वस्य लयः स्वाहार्णके भवेत् ।" इति । गोपीजनवल्लभशब्दार्थमाह "गोपीं तु प्रकृतिं विद्याज्जनस्तत्त्वसमूहकः ॥१८॥ अनयोराश्रयो व्याप्त्या कारणत्वेन चेश्वरः । सान्द्रानन्दं परंज्योतिर्वल्लभेन च कथ्यते । त्रिपादूर्ध्व उदैत्पुरुष इत्याहुः प्रथमा गिरः । बीजोच्चारणमात्रेण चित्स्वभावः प्रजायते । वल्लभेन तु तद्दाढ्यं स्वाहयाऽज्ञानदाहनम् । इत्येवं कथितं तत्त्वं मुने वै ब्रह्मसम्मतम् ॥" इत्यादि । अत्र 'सर्गान्तः' ककारः । 'तुर्याख्या', ईकारः । मांसो लकारः । नादोऽर्धचन्द्रः । बिन्दुः प्रसिद्धः । एतेन प्रकृतबीजस्य पञ्चांगमुक्तम् । 'क्लींकारदसृजद्विश्वमिति-प्राह श्रुतेः शिरः" । इति श्रुतेःशिरोवेदशिरोगोपालतापिन्युपनिषत् । तत्र हि पूर्वतापिन्यां 'क्लींकारादसृजम्" इत्याद्युक्तेः । "प्रथमा गिरः" पुरुषसूक्ताख्यवेदवाक्यम् । एतेन कामबीजस्य यथा "कामोंकारयोरेकत्वं पठ्यते ब्रह्मवादिभिः' इति प्रकृतश्रुतेः सर्ववेदबीजप्रणवार्थगर्भितत्वं तथा "त्रिपादूर्ध्व उदैत्पुरुष इत्याहुः प्रथमा गिरः" इत्युद्धृतनारदवाक्यात्सर्ववेदशिरोभूतपुरुषसूक्तमुख्यार्थगर्भितत्वमपीति । तथाच प्रणवस्य परमात्मा देवता, पुरुषसूक्तस्य जगद्बीजपुरुषदेवता च यः स एव प्रकृतबीजमंत्रस्य श्रीकृष्णाख्यो देवतेत्युक्तं भवति । तदेवोक्तम् 'ईश्वरो जगतां बीजमाद्यं ब्रह्म तदुच्यते" इति बोध्यम् । अधिकं तु पूर्वतापिन्यामेव तत्प्रकरणे उक्तमिति ततोऽवधेयम् ।

पूर्वतापिन्यां पीठयजनप्रकारे " अनंगगायत्रीं यथावदालिख्य " इत्युक्तेस्तत्कल्पग्रन्थगौतमीयतंत्रसनत्कुमारतन्त्रादौ कामगायत्र्याः काम-

काम्यते भोग्यत्वेन इच्छाविषयीक्रियते इति कामः श्रीकृष्णः। तस्यैव निरतिशयप्रेमानन्दघनविग्रहत्वेन परमप्रेमास्पदत्वात्परमभोग्यत्वाच्चान्यकामनानधीनकामनाविषयत्वात् 'सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे । नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥" इति उपक्रमे मंत्रवर्णात् "तमेकं गोविन्दं सच्चिदानन्दविग्रहम् इतिमध्ये ब्रह्मवाक्यात् स्वभावतःसर्व समस्तकल्याणगुणाब्धिरूपत्वात् स्वभावत एव सर्वाविद्यादिदोषविवर्जितत्वाच्च "अक्लिष्टकारिणे" इति मंत्रवर्णात् 'नमोविश्वरूपाय' इत्यादिमंत्रवर्णाच्च । 'कृषिभूर्वाचकः शब्दोणश्च निर्वृत्तिवाचकः' इत्यादिव्युत्पन्न समस्तकल्याणगुणाश्रयसर्वदोषविवर्जितसच्चिदानन्दवाचककृष्णनामधेयत्वादपि तथा बोध्यम्। सर्वात्मत्वाच्च 'आत्मा हि सर्वेषां निसर्गकामनागोचरो भवति कृष्णश्च सर्वात्मा परमात्मत्वात् ।' 'योऽसौ प्रधानात्मा गोपालः' इत्यादिना तस्यैव सर्वात्मत्वप्रतिपादनाच्च ॥ लौकिककामस्तु न तथा तस्य प्राकृतत्वेन विविधदोषयुक्तत्वात्स्वरूपतः । अनवधिकानन्दरूपत्वाभावाच्चेति तत्रौपचारिक एव कामशब्दप्रयोगः । शचिपतौ इन्द्रादिशब्दप्रयोगवच्चतुरानने ब्रह्मशब्दप्रयोगवच्च बोध्यः । शब्दस्पर्शादयो विषया अपि जडत्वात् सुखेच्छाधीनेच्छाविषयत्वाच्च न निरुपधिकामनागोचरा इति तेऽपि न तथेतिबोध्यम् । तस्मात् श्रीकृष्ण एवानौपचारिककामपदार्थः । तथा 'देवाय' इति । दिव्यति क्रीडति विश्वसर्गादिभिः प्रियजनवृन्दैश्च सम्भूयः स देवः। अत्र सर्व एव दिवुधात्वर्थाः समन्वेतव्या बाधाभावात् । एवं सोऽपि कृष्ण एव मुख्यः 'कृष्णो वै परमं दैवतम्' 'तस्मात्कृष्ण एव परमो देव' इत्यादिप्रकरणश्रुतेः । तदेतद्-व्युत्पादितं पूर्वम् । 'विद्महे' जानीमः । द्वितीयार्थे चतुर्थी तथा च तादृशकामदेवं श्रीकृष्णं जानीम स्वरूपतो गुणलीलातश्च साक्षादनुभवितुं इच्छाम इत्यर्थः । तादृशसाक्षादनुभवः तस्य कृपाकटाक्षमन्तरा न संभवतीति तं प्रार्थयति 'पुष्पबाणाय विद्महे' इति । पुष्पं नयनपद्मं 'सत्पुण्डरीकनयनमि'तिश्रुतेः तदेव बाणः प्रपन्नानांविष-

यान्तराभिलाषजनककर्मवासनासमुच्छेदनपूर्वकं स्ववशीकरणसमर्थं यस्य तस्मै इत्यर्थः। भगवन्नयनकमलकटाक्षो हि संसारिणांकर्म सवासनं निवर्तयति 'धीमहि' ध्यायम इत्यर्थः। तथाच तादृशकामदेवत्वेन त्वां साक्षादनुभवितुं त्वदर्थं बहिर्मुखतानिवारणेन त्वय्येव वशीकृतमनस्कतयांत्वदेकशरणत्वाय सर्ववशीकरसमर्थं तादृशपुष्पबाणं त्वां ध्यायाम इत्यर्थः। एतादृशध्यानमपि तत्प्रेरणामात्रसाध्यमिति प्रेरणां प्रार्थयते 'तन्न' इति। यत एवंविधमनोरथवानहं तत् तस्माद्धेतोः अनङ्गः प्राकृतशरीररहितः अत एव सर्वत्र व्याप्तत्वात् आत्मेन्द्रियमनोबुद्ध्यादिष्वपि व्याप्तो यः कृष्णः स नः 'अस्मान्' इन्द्रियमनोबुद्ध्यादिसहितान् तादृशकामदेवस्वरूपानुभवार्थं तादृशपुष्पबाणध्यानार्थं च प्रचोदयात्। प्रकर्षेण प्रेरयतु इत्यर्थः। प्रकर्षश्चात्र मदीयसाधननिरपेक्षतया केवलनिसर्गकरुणास्वभावत्वादेवेत्यभिप्रायेण विशेषित इति। एवंच गायत्रीप्रणवयोर्यथा दाम्पत्यरूपा नित्यसबन्धस्तत्तत्कल्पे उक्तस्तथा कामगायत्रीकामबीजयोरपि नित्यसंबन्धो प्येतन्मंत्रकल्पे सनकुमारतन्त्रादावुक्त इति बोध्यम्। ॐएवं काममालामंत्रोप्येतस्यैव विस्तरः। "क्लीं नमः कामदेवाय सर्वजनप्रियाय सर्वजनसम्मोहनाय ज्वल ज्वल प्रज्वल सर्वजनस्य हृदयं मम वशं कुरु कुरु स्वाहा" इतिमंत्रः। तत्र कामदेवपदार्थस्तु व्याख्यात एव तत एव सर्वजनप्रियत्वमपि परमानन्दघनस्य कृष्णस्यैव निसर्गप्रेमास्पदत्वात् इत्यप्युपपादितमेव। 'सर्वजनसम्मोहनाय' इति सम्मोहनत्वं त्वस्य सर्वविषयेषु सुखबुद्धित्यागेन स्वस्मिन्नेव सुखबुद्धिसम्पादनेन, तदपि निसर्गप्रेमानन्दघनत्वादितिपूर्वोक्तगुणवैशिष्ट्यात्तत्रैव। नैसर्गिकसम्मोहनशब्दप्रयोगश्चात्र तादृशबुद्धौ चमत्कारातिशयपोषाय। चमत्कारातिशयश्चात्र तादृशबुद्धौ लौकिकमोहस्थल इव विवेकं विनैव केवलं माधुर्य्यानुभवाभिव्यक्तत्वलक्षणम्। तेन निरतिशयमाधुर्य्यवत्त्वमुक्तं भवति। 'ज्वल' इत्यादि। एतादृशस्वरूपगुणोपेतस्त्वं ज्वल, अग्निरिव स्वयंदीप्यमानो भव तादृशस्वरूपगुणोपेततया ममानुभवगो-

चरोभव इत्यर्थः । पुनः पुनः प्रार्थनं स्वोत्कण्ठासूचनाय । ननु त्वयि बहवः कर्मवासनाजनिता दोषाः सन्ति इतिकथं त्वदनुभवगोचरो भविष्यामि इत्याह 'प्रज्वल' इति प्रकर्षश्चात्र स्वनिसर्गकृपया निज-स्वरूपमाहात्म्यादेव च स्वानुभवप्रतिबन्धकसर्वदोषापाकरणरूपः । तथाच मत्साधनमनपेक्ष्यैव स्वासाधारणस्वरूपमाहात्म्यादेव तादृ-शत्वदनुभवप्रतिबन्धकसर्वदोषापाकरणेन अग्निरिव दीप्यमानो भव ममानुभवगोचरो भव इत्यर्थः । तत्तदा संभवेत यदि त्वं सर्वं परित्यज्य मदेकशरणोभवेः प्रकृतिप्राकृतविहारस्त्वं तथाच न भवसि इत्याह । 'सर्वजनस्ये' ति सर्वेषु नानाकर्मभागार्थनिमित्तेषु नाना-योनिषु अनादिकालतः पुनः पुनः 'जनस्य' जनिमतोऽतएव तादृशा-तादृशयोन्युपयुक्तवासनाशृंखलानिगडितस्य पुनः पुनःतादृशतादृशया-निष्वेवाकृष्यमाणस्य मम हृदयं त्वमेव निजस्वरूपगुणमाहात्म्यात्सर्व-दोषकर्षणशीलः सर्वमनःकर्षणशीलश्च हृदयं वशं कुरु सर्वविषयात्प्रच्या-व्य स्वस्मिन्नात्मसात्कुरुकुरु । अभ्यासः उत्कण्ठातिशयसूचनार्थः । 'स्वाहा' तदर्थं सर्वमात्मात्मीयं समर्पयामीत्यर्थः ॥ "गोपालाय विद्महे" ॥ इत्यादि-गोपालगायत्रा तस्यार्थः—' गापान् जीवानासृष्टिपर्यन्तमालातीति ओंतत्स-द्गोपाला भवति ' श्रुतेः, मुक्तामुक्तसर्वजीवपालकत्वात् "ओंतत्सदादिप्रति-पाद्यः परब्रह्मैव कृष्णो गोपालः तस्य सर्वपालकत्वं प्रेमानन्दरस-घनत्वात् ' रसो वै सः रस ह्येवायं लब्ध्वाऽनन्दोभवतिकोह्येवान्यात्कः प्राण्यात्यदेष आकाशआनन्दो स्यात्" इतिश्रुतिसिद्धः, चिद्घनत्वेन सर्व-प्रकाशकत्वाच्च । 'तमेव भान्तमनुभाति सर्वम् इति श्रुतिश्च । गोपीवल्लभायेति-गोपी चिदचिद्विभूतिमती श्रीराधा " वहिरंगः प्रपंचस्य स्वांशैर्मायादि-शक्तिभिः । अन्तरंगैस्तथा नित्यविभूतैस्तैचिदादिभिः ॥ गोपनादुच्यतेगोपी-राधिकाकृष्णवल्लभा ।" इतिपद्मपुराणात्-तस्य वल्लभाय, इतिसर्वातिशायि-प्रियत्वं सर्वशक्तित्वं च सूचितम् कृष्णःसदानन्दघनः सृष्टिस्थितिसंहर्ता मोक्षदाताच शेषंपूर्ववत् । इतिगोपालगायत्रीमंत्रार्थोबोध्यः ।

मू० मथुरायां विशेषेण मां ध्यायन्मोक्षमश्नुते ॥ ६७ ॥ अष्टपत्रं विकसितं हृत्पद्मं तत्र संस्थितम् । शंखध्वजातपत्रैस्तु चिह्नितं चरणद्वयम् ॥६८॥ श्रीवत्सलांछनं हृत्स्थं कौस्तुभं प्रभयायुतम् । चतुर्भुजं शंखचक्रशार्ङ्गपद्मगदान्वितम् ॥६९॥ सुकेयूरान्वितं बाहुं कण्ठमालासुशोभितम् । द्युमत्किरीटवलयं स्फुरन्मकरकुण्डलम् ॥७०॥ हिरण्ययं सौम्यतनुं स्वभक्तायाभयप्रदम् । ध्यायेन्मनसि मां नित्यं वेणुशृंगधरं तु वा ॥७१॥ मथ्यते तु जगत्सर्वं ब्रह्मज्ञानेन येन वा । तत्सारभूतं यत्तस्यां मथुरा सा निगद्यते ॥७२॥

भगवदुपासने माथुरमण्डलं सर्वश्रेष्ठमित्याह 'माथुरायामि'त्यादि ॥ स्वरूपध्यानप्रकारमाह "अष्टपत्रमित्यादिपंचश्लोकैः ।" 'वेणुशृङ्गधरं तुवेति" "सत्पुण्डरीकनयनमि" त्यादिपूर्वतापिन्युक्तद्विभुजरूपमित्यर्थः । अस्य चतुर्भुजरूपापेक्षया पश्चान्निरूपणमपच्छेदन्यायेन पूर्वरूपापेक्षया-श्रेष्ठत्वबोधनाय । तदुक्तं पूर्वमीमांसायां "पौर्वापर्ये पूर्वदौर्बल्यं, प्रकृतिवत्" अ. ६ पा. सू. ५४ इति । तथाच चतुर्भुजरूपापेक्षया द्विभुजरूपमेव श्रेष्ठमत एव तदेव परममूलरूपम् । एतच्चतुर्भुजरूपंत्वितरसर्वरूपापेक्षया मूलमपि द्विभुजरूपापेक्षयाविलासरूपमेवभवति । अतएव पूर्वतापिन्यां तस्य परब्रह्मणः किंतद्रूपमितिप्रश्ने 'सत्पुण्डरीकमि' त्यादिना द्विभुजरूपमेवोक्तं नतु चतुर्भुजादि । यथाच "आत्मैवेदमग्र आसीत्पुरुषविधः" 'स एकाकी नर एव, इत्यादिश्रुतिवाक्येषु पुरुषविधत्वनराकारत्वादिनैव मूलब्रह्मस्वरूपनिरूपणात् तस्य च द्विभुजरूप एव सम्यगन्वयादपि द्विभुजरूपमेव सर्वतोमूलरूपं, तथोपपादितं पूर्वतापिन्यां 'किंतद्रूपमि-

ऽयत्र तेन नेह तन्यते। अतएव च पंचरात्रपुराणादौ द्विभुजरूपस्यैव परम-मूलरूपत्वं तत एव च—चतुर्भुजरूपस्याविर्भाव उक्त इति। पूर्वतापिन्यां युग्मतत्त्वसमीक्षायां च विस्तरतोद्रष्टव्यम्। 'मथ्यते' इति ब्रह्मज्ञानेनेति-सर्वातिशायिब्रह्मस्वरूपस्य रसात्मकस्य साक्षान्निरन्तरमनुभवेनेत्यर्थः। मत्सारभूतमि'ति मम सारभूतं-सर्वश्रेष्ठं 'रसोवैसः' इतिश्रुत्युक्तलक्षणम् रसरूपं यता हेतोः तस्याम्-मथुरायां-मथुरामण्डले विद्यत इतिशेषः। तस्मात् सा मथुरा निगद्यते इत्यर्थः। तदुक्तं बृहद्ब्रह्मसंहितायां नारदपंचरात्रे "धर्मस्थानंत्वयोध्याख्यं काशंगंमुक्तिसाधनम्। द्वारका भक्तिकृत् प्रोक्ता रसस्थानं तु माथुरम्" इति। अत एव सा मधुरेत्यप्युच्यत इति।

मू० अष्टदिक्पालिभिर्भूमिपद्मं विकसितम्। जगत्संसा-रार्णवसंजातं सेवितं मम मानसे ॥७३॥ चन्द्र-सूर्य्यार्चिषो दिव्या ध्वजा मेरुर्हिरण्मयः। आतपत्रं ब्रह्मलोकमधोर्द्ध्वं चरणं स्मृतम् ॥७४॥ श्रीवत्सं च स्वरूपञ्च वर्तते लांछनैः सह। श्रीवत्सलाञ्छनं तस्मात्कथ्यते ब्रह्मवादिभिः ॥७५॥ येन सूर्य्याग्नि-वाक्चन्द्रतेजसा स्वस्वरूपिणा। वर्तते कौस्तुभाख्यं मणिं वदन्तीशमानिनः ॥७६॥ सत्त्वं रजस्तम इति अहंकारश्चतुर्भुजः। पञ्चभूतात्मकंशंखं करे रजसि संस्थितम् ॥७७॥ बालस्वरूपमत्यन्तं मनश्चक्रं निग-द्यते। आद्या माया भवेच्छार्ङ्गं पद्मं विश्वं करे स्थितम् ॥७८॥ आद्याविद्या गदा वेद्या सर्वदा मे करे स्थिता। धर्मार्थकामकेयूरैर्दिव्यैर्दिव्यमयेरितैः ॥७९॥ कण्ठं

तु निर्गुणं प्रोक्तं माल्यते आद्ययाऽजया । माला निगद्यते ब्रह्मँस्तव पुत्रैस्तु मानसैः ॥८०॥ कूटस्थं सत्स्वरूपञ्च किरीटं प्रवदन्ति माम् । क्षरोत्तमं प्रस्फुरत्तँ कुण्डलं युगलं स्मृतम् ॥८१॥ ध्यायेन्मनसि यो नित्यं स मोक्षमधिगच्छति । स मुक्तो भवति तस्मै आत्मानञ्च ददामि वै ॥८२॥ एतत्सर्वं भविष्यद्धि मया प्रोक्तं विधे ? तव । स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथा ॥८३॥

अथ धारणासिद्धये स्थूलं गुणमयं भगवतोरूपं दशभिःश्लोकैर्निरूपयति 'अष्टभिर्दिक्पालभूमिपद्मम्' त्यादि । एतद्रूपध्यानस्यभक्तिपूर्वाङ्गत्वं भागवते द्वितीयस्कन्धेऽपि निरूपितं यथा "यावन्न जायेत परावरेऽस्मिन्विश्वेश्वरे द्रष्टरि भक्तियोगः । तावत्स्थवीयः पुरुषस्य रूपं क्रियावसाने प्रयतः स्मरेत" इत्यादि । स्थूलसूक्ष्मनिजस्वरूपद्वयनिरूपणमुपसंहरति । एतत्सर्वमित्यादि । अत्र सामान्यतयोक्तमपि भविष्यत्वं सगुणांश एवान्वेति योग्यत्वात् । ननु निर्गुणांशे तस्य सर्वादित्वेन भविष्यत्वस्य बाधितत्वात् । 'स्वरूपं द्विविधं चैव सगुणंनिर्गुणं तथा' इ... । निजस्वरूपमित्यर्थः । द्विविधमिति सगुणत्वनिर्गुणत्वकृतपरस्परविलक्षणमित्यर्थः । निर्गुणात्मकमितिपाठेऽपि निर्गुणः आत्मा स्वरूपं विग्रहादिं यस्य तथाभूतमित्यर्थः । चेतिपरान्वयि तथाच सगुणं निर्गुणात्मकं चेत्यर्थः । तत्र सगुणं 'अष्टभिर्दिक्पालभिरि' त्यादिना निरूपितं स्थूलरूपम् । निर्गुणं तु 'अष्टपत्रंविकसितमि'त्यादिना निरूपितम्, चतुर्भुजं द्विभुजंच रूपद्वयम् । नारायणदीपिकायांतु सगुणं द्विभुजचतुर्भुजादिरूपं, निर्गुणं तु 'सहोवाच पूर्वमेकमेवाद्वयंब्रह्मासीत्' इत्युक्तलक्षणा-

मित्युक्तं तदयुक्तमेव। अत्र ध्येयत्वेनानुपदोक्तस्यैव रूपद्वयस्योपसंहार-प्रतीतेः। अत्र द्विभुजचतुर्भुजरूपस्य सूक्ष्मस्य ब्रह्माण्डविग्रहस्य स्थूलरूपस्यैव च निरूपणात् तत्परित्यागे बीजाभावात्। यथाच द्विभुजादिरूपमेव सर्वमूलरूपं निरतिशयज्ञानानन्दघनं तथोपपादितं बहुशः पूर्वतापिन्या-मिहापिच। युग्मतत्त्वसमीक्षायां तु विस्तृतंविवेचितम्॥ किंच 'एकमेवाद्वयं ब्रह्म, इत्यत्रापि ब्रह्मपदार्थो निरतिशयचिदानन्दपुरुषाकारविग्रहः श्रीकृष्ण एव नतु शून्यकल्पंनिर्विशेषं ब्रह्म येन तन्मतसिद्धिः॥ अपि च—तन्म-तानुसारेण तत्र ब्रह्मशब्दार्थपरिग्रहेऽपि न तदुक्तविभागसिद्धिः। तन्मते-मायोपहितब्रह्मण एव जगदुपादानत्वेन-तत्रापि जगत्कारणत्वेन प्रक्रान्त-ब्रह्मशब्देन मायोपहितब्रह्मण एव गृहीतव्यत्वेन तस्य तन्मतसिद्धनिर्गु-णत्वाभावात्॥

नचात्र-सगुणं-निर्गुणात्मकमिति न भिन्नं वाक्यमपि त्वेकमेव विशे-ष्यविशेषणभावापन्नम्; एवंच निर्गुण आत्मा यस्य तथाभूतसगुण इत्यर्थः। विग्रहतः सगुण आत्मता निर्गुण इतियावत्। तथाचास्तु-द्विविधमित्यनेन द्विभुजचतुर्भुजादिसूक्ष्मरूपस्य विराड्विग्रहस्यैव च परिग्रहः तावताऽपि न द्विभुजादिरूपस्य निर्गुणत्वसिद्धिरपितु-सगुणत्वेऽपि निर्गुणात्मकत्वमेव। तच्चास्माकमिष्टमेव सगुणरूपाणामप्यात्मदृष्ट्या परमार्थतो निर्गुण-त्वात्। तथाचद्विभुजादिरूपाणां विराड्रूपाणां च सूक्ष्मत्वस्थूलत्व-वैलक्षण्येऽपि समानमेव विग्रहांशे गुणमयत्वमितिचेन्न चकारस्यैव तत्र वाक्यभेदकत्वात्। अन्यथा चकारवैयर्थ्यापत्तेः। नच चकारःपूर्वान्व-योति वाच्यम् तथा सति तस्य सार्थक्यासंभवात् पूर्वान्वयित्वे प्रयोजना भावात्। तथाच चकारस्य परान्वयित्वमेव वाच्यम्। एवंच तस्य सगुण-निर्गुणात्मकरूपद्वयसमुच्चायकत्वेन वाक्यभेदस्यावश्यकत्वात्। किंच प्राचीन पुस्तकेषु नारायणादिकृतटीकायुतेषु सर्वत्र "स्वरूपं द्विविधं चैव सगुणं निर्गुणं तथा" इतिपाठाद् भेदेन स्वरूपद्वयकथन एव श्रुतेस्तात्पर्यं निश्चीयते। एवंच पूर्वोक्तद्विभुजचतुर्भुजरूपयो निर्गुणत्वं विराड्विग्रहस्य सगुणत्वमित्येव

निश्चितमुक्तं भवतीति बोद्धव्यम्। यथाच साकाररूपस्य निर्गुणत्वं तथोपपादितम्। "स वो हि स्वामी भवती' त्यत्र ग्रन्थखण्डेन श्रीगोपीदुर्वासः प्रश्नप्रतिवचनमिषेणेति स्वरूपध्यानस्य फलमुक्तं पूर्वश्लोके "आत्मानं च ददामि वै" इति। अस्ति यजुर्वेदे मंत्रपाठः "य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम" इत्यादि। तथाच किमतोधिकं फलंस्यादितिद्रष्टव्यमिति संक्षेपः। एवंच परब्रह्मणः श्रीकृष्णस्य परमदेवत्वोपपादकं स्वभावतोऽपास्तसमस्तदोषत्वं स्वभावतोऽशेषकल्याणगुणशक्तिशालित्वं सर्वान्तर्य्यामित्वादिकं च निरूपितमेतावद्ग्रन्थेनेति।

श्री'हरिहरपराजन्यपुरा' विप्रान्वयोद्भवः। निधिपाणेः पञ्चमो यः श्रीबुचीशर्म्मणः सुतः ॥ १ ॥ श्रीमुकुन्दीति विख्याता माता लक्ष्म्यंशसंभवा ॥ पत्नी शीलवती यस्य नाम्ना श्रीप्रेमसुन्दरी ॥ २ ॥ सोऽहं भगीरथो नाम द्विजा मैथिलवंशजः। मिथिलाभूमिवासी च वृन्दारण्ये वसन्धिया ॥ ३ ॥ चिन्तयञ्छ्रीशपादाब्जं तत्सेवारसलालसः। एतावन्तं ग्रन्थभागं कृत्वाऽग्रे क्रियतेऽधुना ॥ ४ ॥ इति श्रीगोपालोत्तरतापिनीव्याख्यायांवेदान्ततत्त्वसमीक्षाख्यायां मैथिलभोपाख्यश्रीभगीरथशर्मसंकलितायां सप्तदशः खण्डःसम्पूर्णः।

मू० सहोवाचाब्जयोनिर्व्यक्तानां मूर्त्तीनां कथं त्वाभरणानि भवन्ति, कथं वा देवा यजन्ति, रुद्रा यजन्ति, ब्रह्मा यजति, ब्रह्मजा यजन्ति, विनायका यजान्ति, द्वादशादित्या यजन्ति, वसवो यजन्ति, अप्सरसो यजन्ति, गन्धर्वा यजन्ति, स्वपदानुगान्तर्द्धाने तिष्ठन्ति, कां मनुष्या यजन्ति ॥ ८४ ॥ सहोवाच तं हि वै

नारायणो देवः, आद्या अव्यक्ता द्वादशमूर्त्तयः सर्वेषु लोकेषु, सर्वेषु देवेषु, सर्वेषु मनुष्येषु तिष्ठन्ति ॥८५॥ रुद्रेषु रौद्री, ब्रह्मण्येषु, ब्राह्मी, देवेषु दैवी, मानवेषु मानवी, विनायकेषु विघ्ननाशिनी, आदित्येषु ज्योतिर्गन्धर्वेषु गान्धर्वी, अप्सरःस्वेवं गौर्वसुष्वेवं काम्याऽन्तर्धाने प्रकाशिनी, अविर्भावतिरोभावा स्वपदे तिष्ठति ॥८६॥ तामसी राजसी सात्विकी मानुषी ॥८७॥ विज्ञानघनानन्दघनामूर्तिः सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति ॥८८॥ ( १८ खं. )

अतः पर्य्यन्तेन, सर्वातिशायिपरधामसंस्थत्वं व्यूहवैभवादिसर्वांशित्वं सर्वेज्यत्वं सर्वजगदभिन्ननिमितापादनत्वं परममुक्तफलप्रदत्वादिकं च प्रकरणविभागेनोपपादितम् । ततः परमादित्यादिदेवानां तदेकपरत्व तदंशत्वादिप्रतिपापादनमवशिष्यतेऽतस्तदुपपादयितुं प्रकरणारभः । एवं च सर्वतोभावेन परमदेवत्वादिकं पूर्वतापिन्युक्तप्रतिज्ञाचतुष्टयं पूर्वतापिन्युक्तनिखिलानि वाक्यानि च पुनर्विततरमुपपादितानि भवन्ति । तस्मादाह–महावाचेति 'व्यक्तानांमूर्तीनामि' त्यादि ॥ अत्रैवं प्रतिभाति व्यक्तानां प्राकृतजनैरपि शिलादिरूपेणानुभूयमानां यद्वा व्यक्तानामवतारकाले प्रकटीभूतानामित्यर्थः । मूर्तीनां 'मथुरास्वेवं द्वादश' इत्यंशेन पूर्वोक्तानां मथुरास्थितानां केशवादिमूर्तीनां, तदेवाह 'प्रोक्तानामि'-ति । कथं त्वाभरणानि भवन्ति । आभरणशब्दार्थोऽत्र यजनप्रकारविशेष एव प्रतिभाति । 'आसमन्ताद्भरणमाभरणम्' 'भृञ् धारणपोषणयोः' इति धातोर्निष्पत्तेः । एवंच यजनं कथं भवतीति प्रश्नः । तदेव स्फुटयति ।

'कथंवा' इत्यादि। वाशब्दोऽत्र वाक्यालंकारे। 'स्वपदानुगान्तर्धाने तिष्ठति' इति स्वपदानुगा 'एकादशीति स्वपदंगता' इत्यत्र स्वपदंगतेत्यनेनोक्ता स्वपदानुगा का, दशमीवै ह्यन्तर्धाने तिष्ठति' इत्युक्ता अन्तर्धाने तिष्ठति का, भूम्यां तिष्ठति इत्यनेन सूचिता च का 'यां मनुष्या यजन्तीत्यर्थः। उत्तरमाह सहोवाचेति स पूर्वप्रसिद्धः—'नारायणो देवो ह स्फुटं तं ब्रह्माणं उवाचेत्यर्थः। आद्येत्यादि। आद्या आदिसिद्धा अनादिसिद्धेति यावत् द्वादश मूर्तयः रौद्र्यादिद्वादशशक्तयः सर्वेषु लोकेषु तत्तद्विभूतिषु 'सर्वेषु देवेषु रुद्रादिषु' सर्वेषु मनुष्येषु मन्वादिषु 'तिष्ठन्ति' तत्तत्कार्यंकर्तृसामर्थ्यरूपतया यावदधिकारं तेषु तेषु भगवदनुग्रहात् तिष्ठन्ति। अधिकारसमाप्तौ पुनस्ते ते तया तया शक्त्या वियुज्यन्ते इत्यर्थः। तदुक्तं विष्णुधर्मोत्तरे ब्रह्मा शंभुस्तथैवार्कश्चन्द्रमाच शतक्रतुः। एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा। तत्तत्कार्य्यावसानेच वियुज्यन्ते स्वतेजसा। वितेजसश्च ते सर्वे पंचत्वमुपयान्ति हि॥' इति। अयंभावः। बृद्धहारीतस्मृत्यादौ हि भगवन्तमाराध्य कस्मिँश्चित्कल्पे कश्यपो ब्रह्मा बभूव अगस्त्यो रुद्रो बभूव इतिस्मर्य्यते। अत्रायमेव प्रकारोयत्कश्यपादानां तादृकृतपश्चर्य्यां दृष्ट्वा प्रसन्नोभगवान्तथाधिकारंदित्सुस्तत्कार्ययोग्यत्व सम्पादनार्थं स्वीयाऽनादिसिद्धब्रह्मत्वादिशक्तिरूपं तेजः प्रवेशयति। पुनश्च संकेतितपरादिकालसमाप्तौ ततश्चान्तर्धापयति इति। यथा देवदत्तं मंडलेश्वरं कुर्वन्-भद्रबाहुनृपःसैन्यादिकमर्पयति। अधिकारसमाप्तौ च ततोऽपकृष्याऽन्यस्मै अधिकारिणेऽर्पयति तदाऽधिकारच्युतो देवदत्तस्तद्दृष्ट्यामृत एवोच्यते इति। यस्मिँश्च कल्पे तादृशाधिकारी जीवो न वर्तते तदा भगवदिच्छया तत्तच्छक्तिरेवांशतः प्रकटीभूय ब्रह्मादिरूपेण कार्य्याणि करोति इति। एवमेव विवृतं श्रीपुरुषोत्तमाचार्य्यैर्वेदान्तरत्नमंजूषायां "कृपाऽस्य दैन्यादियुजि प्रजायते।" इतिकारिकाव्याख्याने "विश्वरूपब्रह्मणः श्रीपुरुषोत्तमस्य विश्वात्मत्वेन विश्वस्य जगतोऽधिकरणत्वात् विश्वं जगत्तत्रावतिष्ठते शक्त्यात्मना। विष्णुधर्मोत्तरे "ब्रह्मा शंभुस्तथै-

वार्कश्चन्द्रमाश्च शतक्रतुः। एवमाद्यास्तथैवान्ये युक्ता वैष्णतेजसा तत्तत्कार्यावसाने तु वियुज्यन्ते स्वतेजसा।" इति परावरात्मशक्तिरूपत्वाच्च विश्वस्येतिनिर्विवादः। तथाच गीयते "अपरेयमितस्त्वन्यां प्रकृतिंविद्धि मे पराम्। जीवभूतां महाबाहो ययेदंधार्य्यते जगदि"ति ॥ तथैव सर्वाधिकारिणामधिकाररूपाःशक्तयस्तस्यैव तत्रैव तिष्ठन्ति। सृष्टिसमये तत्तदधिकारिणां ब्राह्मरौद्रादिपदारोहणयोग्यानां तत्तज्जगत्स्रष्टृत्वसंहर्तृत्वादिभिर्युनक्ति। प्रलये च तान् विश्वाधिकारिणस्ताभिर्वियुनक्ति। परंतु सर्वावस्थायांतस्य सार्वदिकत्वाविशेष एव। तथा मुक्तानामपि विश्वरूपे भगवति तदात्मकतयाऽवस्थानमविरुद्धं। स एव भगवद्भावापत्तिलक्षणो मोक्षःसायुज्यशब्देनाप्युच्यते" इत्यादिग्रन्थसंदर्भेण। एवंचैतेषांब्राह्मरौद्रादिशक्तीनांब्रह्मानुभवपूर्वकंविश्वरूपे भगवति तत्तच्छक्त्यात्मनाऽवस्थानरूपे स्वोक्तमोक्षे दृष्टान्तीकरणादेतासां शक्तीनां भगवदनुभवपूर्वकंभगवतिस्थितिलक्षणमोक्षोनित्यएवेत्यपि तेषांतात्पर्य्यमुक्तं भवतीति। तदेवाग्रे कथयिष्यति "सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति"। इत्यादिन्येनेत्यपिबोध्यम्। ताश्च शक्तयोभगवदात्मिका नित्यसिद्धाः भगवदात्मके परेधाम्नि मूर्तिमत्यः सत्योनिरन्तरं भगवन्तंपर्य्युपासते। ता एव च शक्तयः नित्यसिद्धाः, तत्तद्देवतावाचकशब्दानांशक्यभूताः॥ अत एव तत्तद्देवानांजन्यत्वेऽपि न वेदस्यापौरुषेयत्वव्याघातः। तत्तच्छब्दानां तत्तद्देवतागतानादिसिद्धतत्तच्छक्तिमादायैव प्रवृत्तेः ता एव शक्तय इन्द्रत्वब्रह्मत्वरुद्रत्वदिजाकृत्यादिशब्दैश्च व्यपदिश्यते। तदभिप्रायेणैवाह भगवान् वेदव्यासः "शब्द इतिचेन्नातः प्रत्यक्षानुमानाभ्याम्। अतएव च नित्यत्वम्" ब्र० सू० १-३-१६–इति। उक्तं च तत्रैव वेदान्तकौस्तुभप्रभायां केशवकाश्मीरिचरणैः जातिमत्यो व्यक्तय उत्पद्यन्ते न जातयः जातिभिश्च शब्दानां सम्बन्धो न व्यक्तिभिः। व्यक्तीनामनन्त्यात्सम्बन्धग्रहणानुपपत्तेः। एवंच देवादिव्यक्तिषूत्पद्यमानास्वपि देवादिशब्देष्वाकृतीनां नित्यत्वान्नित्य एव तेषांवाचकभाव इति। शांकरभाष्येऽपि—पूर्वपक्षमुपपाद्योत्तरमुच्यते

"गवादिशब्दार्थनित्यत्वदर्शनात्, नहि गवादीशब्दासुत्पत्तिमत्त्वे तदाकृतीनां मप्युत्पत्तिमत्त्वं स्यात्। द्रव्यगुणकर्मादिव्यक्तय उत्पद्यन्ते नाकृतयः। आकृतिभिश्च शब्दानां सम्बन्धो न व्यक्तिभिः। व्यक्तीनामानन्त्यात्सम्बन्धग्रहणानुपपत्तेः व्यक्तीनामुत्पद्यमानास्वपि आकृतीनां नित्यत्वान्न गवादिशब्देषु विरोधो दृश्यते। तथा देवादिव्यक्तिप्रभवाभ्युपगमेऽपि आकृतिनित्यत्वान्न कश्चिद्वस्वादिशब्देषु विरोध इति द्रष्टव्यम्" इति॥ एवमेव रामानुजभाष्येऽपि द्रष्टव्यम्। वल्लभभाष्येऽपि वेदोक्ताः सर्वा एव पदार्था आधिदैविका एव पुरुषावयवभूताः। अतो नामप्रपंचोवेदात्मको भिन्न एवांगीकार्य्यः स केवलंशब्दरूसमधिगम्य इति यदुक्तं तस्याप्ययमेवाशयः। एवंच या नित्या जात्याकृत्यादिशब्दवाच्यास्तत्तद्देवानामाधिदैविक्यो नित्यसिद्धरौद्र्यादिभगवच्छक्तय ता एव "आद्या अव्यक्ताः' 'रुद्रेषु रौद्री' इत्यादिना निरूपिता इतिध्येयम्।

तासां मूर्तीनां शक्तीनामनन्तत्वेऽपि द्वादशविधत्वकथनं सुबोधाय। यथा भगवदैश्वर्य्याणामनंतत्वेऽपि 'षण्णां भग इतींगना' इत्यादिना षड्विधत्वमुच्यत इत्यपिध्येयम्॥ एवंचप्रकृतिकालातीते परे धाम्नि यत् "ब्रह्मशंकररूपाद्यैरुपर्य्युपरि संभ्रमात् पतन्ति वलिहस्तानि" तथा "प्रह्लादनारदाद्यैश्च कुमारशुकवैष्णवैः' जनकाद्यैर्लसद्भावैस्तन्मूर्तिध्यानतत्परैः। अप्सरोभिश्चगन्धर्वैर्नृत्यगीतनिरंन्तरम् श्रीमद्वृन्दावनं रम्यं पूर्णानन्दरसाश्रयम्' 'सूर्य्यमन्दांशुसेवितम्' इति यत्तत्कार्यपरतयाये देवर्षिगन्धर्वाप्सरःप्रभृतयः पुराणपंचरात्रादौ स्मर्य्यन्ते ते इमा एव प्रकृतशक्तयः तादृशतादृशाप्राकृतमूर्तिमत्यः। नतु प्राकृतमंडलान्तर्वर्तिनः प्राकृतविग्रहाः? प्रकृतिकालातीतेऽक्षरे धाम्नि प्राकृतानां तादृशरूपेण तृणखण्डानांवह्निराशाविवप्रवेशस्थित्योरवा संभवात् इत्यपि बोध्यम्।

केषु केषु देवादिषु का का मूर्तयस्तिष्ठन्ति इत्याह। 'रुद्रेषु रौद्री' इत्यदि रुद्रेषु शंकरादिषु रौद्री इत्यर्थः। ब्रह्मण्येषु इति ब्रह्मण्य इति कार्य्यब्रह्मणो हिरण्यगर्भस्यैव नामान्तरम्। यथा साधारणकोशनिबन्धेषु हिरण्यगर्भ-

नामत्वेनासिद्धोऽपि हैरण्य इति शब्दः, तदुहोवाच 'हैरण्यः' इत्यादौ व्युत्पत्तिविशेषबलात्प्रकरणबलाच्च हिरण्यगर्भवाचकतयैव निश्चियते-तथाऽत्रापि ब्रह्मण्यपदं ब्राह्मणे ब्रह्मणित्रे देवरे ब्रह्मणिवासाधुरितिव्युत्पत्तिवलाद्बुद्ध्वा यजन्ति ब्रह्मा यजति इत्यादि प्रकरणबलाच्च हिरण्यगर्भवाचकतया निश्चीयते। तथाच ब्रह्मण्येषु हिरण्यगर्भेषु ब्राह्मीमूर्तिस्तिष्ठतीत्यर्थः। ब्रह्मण्यपदोत्तरं वहुवचनप्रयोगेण ब्राह्मीपदोत्तरमेकवचनप्रयोगेणच ब्रह्माण्डानामानन्त्येन हिरण्यगर्भाणामानन्त्येऽपि तेषु सर्वेष्वपि एकैव ब्राह्मीमूर्तिरंशभेदात्सर्वत्र तिष्ठति ननु हिरण्यगर्भभेदात् ब्राह्मीमूर्तिभेद इति सूचितम्। इन्द्राग्नित्वादिसम्पादिका ऐन्द्र्यादिशक्तयोमूर्तयो-यद्यपिभिन्नास्तथापिदेवत्वादिसम्पादिका सर्वेष्वपि देवेष्वेकैवेत्याशयेनाह देवेषु देवी त्यादि। एवमेव किन्नरकादित्यगंधर्वाप्सरोगोवत्सादिष्वपि बोध्यम्। इदमुपलक्षणमैन्द्रीचन्द्र्यासुरीयात्तोप्रभृतीनामनन्तानाम्।

"अन्तर्धानेऽप्रकाशनी" ति अन्तर्धानं तिरोधानम् वस्तुतः सत्त्वेऽप्यप्रतीतियोग्यतासम्पत्तिः। तत्राप्रकाशिनीशक्तिः तिष्ठति इत्यर्थः। अयंभावः। देवादिषु याऽन्तर्धानयोग्यताशास्त्रेषु वर्ण्यते साऽनादिसिद्धाधिदैविको अप्रकाशिनीरूपभगवच्छक्तिमूलैव। एवंच देवादिषु अन्तर्धानयोग्यतासम्पादिका या शक्तिः मूर्तिः सा अप्रकाशनी इति। एकादशीमाह—आविर्भावतिरोभावात्मिका' या शक्तिः स्वपदे तिष्ठतीति आविर्भावतिरोभावात्मिका या शक्तिमूर्तिः सा स्वपदे-स्वस्याश्रये भगवत्येवामूर्तरूपेण, मूर्तरूपेण प्राकृतेश्वाम्न च तिष्ठति इत्यर्थः। यद्यपि पूर्वदर्शिताः सर्वाः शक्तयः पूर्णरूपेण भगवत्येव स्वाभाविकत्वेन तिष्ठंति। "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया" इतिश्रुतेः। तस्यैव सर्वशक्तीनां सर्वातिशायिस्वाभाविकाधारत्वात्। तथापि रौद्र्यादिशक्तयः-अंशतो रुद्रादिदेवतास्वपि तिष्ठन्ति। इयं तु आविर्भावतिरोभावात्मिका भगवत्येव तिष्ठति नान्यत्रेत्यभिप्रायः॥ आविर्भावतिरोभावेत्यत्र-भावपदेन निखिलजगदाविर्भावतिरोभावात्मिकाशक्तिः, मूर्तिपदेन विव-

क्षिता। तेन योगमहिम्ना ऽन्येषामपि किंचिद्वस्त्वाविर्भावतिरोभावजन-कत्वेऽपि न क्षतिः। यद्यपि 'आविर्भावतिरोभावशक्ती द्वे मुरवैरिणः।' "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्। आविर्भावतिरोभावजन्मनाश-विकल्पवत्।' इति विष्णुपुराणवाक्यात्। आविर्भावतिरोभावशक्तेर्द्वै-विध्यं निश्चीयते-तथापि इहैकत्वकथनम्, आविर्भावतिरोभावशक्त्योरन्यो-न्यप्रतियोगित्वेन नित्यसम्मिन्नत्वादितिबोध्यम्।

द्वादशीमाह 'राजसी' इत्यादि-अन्यापेक्षया तत्र मानुषी इत्यस्य मिश्रेत्यर्थः। मनुष्याणां प्रायो-अन्यापेक्षयाऽधिकमिश्रस्वभावत्वात्। तथा-त्वस्य विशेषतस्तन्निष्ठत्वस्य च बोधनार्थं मानुषीत्वमुक्तम्। अस्याश्चतुर्वि-धत्वेऽपि मूलत एकत्वात् राजसादिभावनियामकत्वेन कार्य्यभिन्नत्वेऽपि स्वरूपत एकत्वात् द्वादशीत्वेनैकत्वोक्तिः। एताश्च सर्वा रौद्रादिशक्तयो न केवलं तत्तद्देवादिष्वाविश्य तानि तानि जगत्कार्य्याण्येव कुर्वन्ति॥ अपितु अंशतस्तत्तद्देवादिष्वाविश्य तानि तानि जगत्कार्य्याणि कुर्व-न्त्योऽपि स्वतः पूर्णरूपेण प्रकृतिपरे धाम्नि नित्यमुक्तान्तरशेषगरूडा-दिवत् नित्यमुक्ताः सच्चिदानन्दमूर्तयः सन्त्यः सच्चिदानन्दात्मकेन परमेण भक्तियोगेण भगवन्तमप्यनुकुलयन्तीत्यभिप्रायेणाह 'विज्ञानन्द-घनाः' इति 'मूर्तिरि' त्येकवचनं समूहाभिप्रायेण। घनपदप्रयोक्तिः केषांचि-द्विग्रहांशे ज्ञानप्राधान्याय यथा ऋष्यादीनाम्। केषांचिदानन्दप्राधा-न्यायथाऽप्सरःप्रभृतीनाम्॥ तथाच विज्ञानघना आनन्दघना वा मूर्तयः सत्यः रौद्र्यादिमूर्तयः परे धाम्नि-सच्चिदानन्दैकरसे भक्तियोगे तिष्ठन्ति इत्यर्थः। "अत्र ब्रह्मशंकररुद्राद्यैः" "कुमारनारदाद्यैश्च' 'जनकाद्यैर्लसद्भावैस्तन्मूर्तिध्यानतत्परैः। अप्सरोभिश्च गन्धर्वैर्नित्यगीत-निरन्तरम्" इत्याद्युक्तानि परमधामवर्णकवाक्यानि पुनरनुसंधेयानि। यथाच पुरुषोत्तमाचार्य्यपादानाप्येतासां शक्तीनां नित्यमुक्तभक्तत्वे तात्पर्य्यं तथोक्तमनुपदमेत्यनुसधेयम्।

अत्र जिज्ञासितम्-"कथं वा देवा यजन्ति स्वपदानुगाः" अन्त-

र्धाने तिष्ठति का यां मनुष्या यजन्ति सा का इति । तत्र सा एव रौद्र्यादि मूर्तयोऽव्यक्ता व्यक्तेषु रुद्रादिष्वाविष्टाः व्यक्ता केशवादिभगवन्मूर्तीः यजन्ति । आविर्भावतिरोभावा स्वपदानुगा । अप्रकाशिनी अन्तर्धाने तिष्ठति । या द्वादशी शक्तिसमुपेता तांमनुष्या जयन्ति । यद्वा तदनुकूल-शक्त्युपेतत्त्वेनाभिव्यक्ता या भगवन्मूर्तिः तां भगवन्मूर्तिः तच्छक्त्याविष्टदेवता यजन्ति । यथा रौद्रीशक्तित्त्वेन व्यक्ता संकर्षणमूर्तिः । तमोगुणनियामकत्वादिति संकर्षणं रौद्रीशक्त्याविष्टा रुद्रा देवता यजन्ति। एवं ब्रह्मा यजति इत्यादावोध्यम् ॥ वस्तुतस्तु-प्रश्नवाक्ये—"व्यक्तानां मूर्तीनामि'ति स्थाने अव्यक्तानांमूर्तीनामितिपाठः प्रतिभाति । तथाच पूर्वम् 'तासामध्ये साक्षाद्ब्रह्म गोपालपुरी' इत्यनेन वाक्येन माथुरधाम्नः प्रकृतिकालातीतत्वमक्षरब्रह्मरूपत्वं च निरूपतम् । एवं तत्र स्थिताः मूर्तीः कथं प्राकृतदेवा तत्र प्रवेशानर्हा यजन्तीति इति प्रथमप्रश्नवाक्याशयः । तुरीयप्रश्नस्यापि तथैवाशयः । एवंच का मनुष्या यजन्ती त्यस्य कथं केन प्रकारेण तत्रापि मनुष्या नितरा प्राकृता ताः यजन्तीति तदर्थः।एतेषा मुत्तरतु–प्रकृतिकालातीते परेमाथुरधाम्नि भगवन्मूर्तीः न प्राकृता देवा यजन्ति अपितु तां तां देवतामाविश्य तत्तकार्य्यकर्त्र्यो या अप्राकृता नित्यमुक्ताश्चिदानन्दमया भगवद्शक्तिभूता रौद्रादिशक्तयो अप्राकृतरुद्राद्याकारास्ता एव तां तां भगवन्मूर्तिं यजन्ति इति प्रथमप्रश्नस्योत्तरम् । द्वितीयतृतीययोस्तु पूर्वकलावदेव इति न पुनरुच्यते । तुरीयस्यतु नहि प्राकृता मनुष्या प्राकृतरूपेणैवाप्राकृतमण्डले प्रविश्य भगवन्मूर्तीः यजन्ति अपि तु अप्राकृतचिदानन्दघना या मानबी भगवच्छक्तिरप्राकृतमनुष्याकारा सा यजतीति न कश्चित्क्षतिः । याश्च शिलादि रूपेण व्यक्ता मूर्तयः तास्तु व्यक्ता अपि देवाद्याः यजन्तीति सर्वं समंजसम् ॥ ८७ ॥

'सच्चिदानन्दैकरसे भक्तियोगे' इत्यत्र भक्तिरूपे यागे सच्चिदानन्दैकरसत्वस्य सामानाधिकरण्येन विशेषणात् भक्तेःसच्चिदानन्दैकरसरू-

पत्वं श्रुत्यैवोक्तं तेन यत्कैश्चिदुच्यते भक्तिर्नामान्तःकरणस्य सत्त्वपरिणामविशेषः, तत्र प्रतिबिम्बितचैतन्यानन्दो वा नतु शुद्धचिदानन्दरूपः। अतः परममुक्तावन्तकरणनिवृत्तौ साऽपि निवर्तत एवेति न तस्याः परममुक्तभोग्यत्वमिति तन्निरस्तम्। स्वयं श्रुत्यैव तस्याः स्वशब्देनैव चिदानन्दैकरसत्वनिरूपणात् एकवद्प्रयोगात् सच्चिदानन्दरसतो विजातीयरससाहित्यप्रतिषेधात्। अणुमात्रमपि तद्भक्तौ प्राकृतसम्पृक्तत्वं प्रतिषिद्धं। तेन नितरामन्तःकरणवृत्तिरूपत्वं तत्प्रतिफलितचैतन्यानन्दरूपत्वं च प्रतिषिद्धं भवतीत्यपि बोध्यम्। नच सच्चिदानन्द एव एकोरसः रसनीयो यत्र तथाविधो भक्तियोग इत्येवं तदर्थः। तथाच भक्तियोगालम्बनभूतस्य भगवत एव सच्चिदानन्दत्वमुक्तं भवति नतु भक्तेरितिवाच्यम्। बहुव्रीहिसमासापेक्षया लाघवेन कर्मधारयस्यैव सुवचत्वात्। बहुव्रीहिसमासे लक्षणाया अवश्यकर्तव्यत्वापत्त्या गौरवात्। अत एव 'निषादस्थपतिंयाजेत' इत्यत्र कर्मधारय एव स्वीकृतो नतु बहुव्रीहिः। इति पूर्वमीमांसाया सिद्धान्तः। तस्मात् सच्चिदानन्द एव एको रसः सच्चिदानन्दैकरसः। सच्चिदानन्दैकरसो यो भक्तियोगः' तस्मिन् इत्येवं कर्म्मधारयसमासगर्भित एवार्थः। भक्तियोगः इत्यत्राऽपि भक्तेर्योग इति न समासः अपितु भक्तिरूपो योगः भक्तियोगः इत्येवार्थो बोध्यः। तथाच फलभक्तेः सच्चिदानन्दरूपत्व सिद्धिर्निष्प्रत्यूहा इतिदिक्। ( १८ ) अष्टादशः खण्डः

मू० ओं ठां प्राणात्मने ओंठांसत्सतभूर्भुवः स्वस्तस्मै प्राणात्मने नमो नमः॥८९॥ ओं ठां कृष्णाय गोविन्दाय गोपीजनवल्लभाय ओं ठां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः।९०॥ ओं ठां अपानात्मने ओं ठां तत्सद्भूर्भुवः स्वस्तस्मै वै अपानात्मने नमो नमः॥ ९१ ॥

ओंठांकृष्णाय प्रद्युम्नायानिरुद्धाय ओंठां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ९२ ॥ ओं ठां समानात्मने ओं ठां तत्सद्भूर्भुवः स्वस्तस्मै वै समानात्मने नमो नमः ॥ ९३ ॥ ओंठां कृष्णाय रामाय ओंठां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ९४ ॥ ओंठां उदात्मने ओंठां तत्सद्भूर्भुवः स्वस्तस्मै वै उदातात्मने नमो नमः॥ ९५ ॥ओंठांकृष्णाय देवकीनन्दनाय ओंठांतत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ९६ ॥ ओंठां व्यानात्मने ओंठां तत्सद्भूर्भुवः स्वस्तस्मै वै व्यानात्मने नमो नमः ॥ ९७ ॥ ओं गोपालाय निजस्वरूपाय ओंठां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥ ९८ ॥ ओंठांयोऽसौ प्रधानात्मा गोपाल ओंठांतत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः॥ ९९ ॥ ओंठांयोऽसाविन्द्रियात्मा गोपाल ओंठांतत्सद्सूर्भुवः स्वस्तस्मै वै नमो नमः ॥१००॥ ओंठां योऽसौ भूतात्मा गोपाल ओंठां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥१०१॥ ओंठांयोऽसावुत्तमःपुरुषो गोपाल ओंठां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥१०२॥

वृत्तं निरूपणीयम्। अथ निरूपितान्येवार्थतत्त्वानि संगृह्य निर्शनीयानि सुबोधायः । उपसंहारश्च कर्तव्यः । अतस्तापिनीब्रह्मविद्यायाः शरणागत्येकसाधनकतया तत्प्रधानस्तुतिमुखेनैव सर्वान्निरूपितानर्थान् संप्र-

ह्लाति। 'ओं ठां प्राणात्मने' इत्यादि–ओं क्लीमित्यनर्थान्तरम् 'क्लीमोंकारयोरेकत्वं पठ्यते ब्रह्मवादिभिः।' इत्युक्तश्रुतेः। 'तस्मादोंकारसंभूतो गोपालो विश्वसंस्थितः।' इत्युक्तरीत्या समग्रोंकारस्य सखण्डाखण्डवृत्तिवाच्यायेत्यर्थः। 'प्राणात्मने' प्राणानां मुख्यप्राणानां आत्मने तात्पर्य्यपर्य्यवसानस्वरूपाय तदन्तर्य्यामिणे च। ओं तत्सद्भूर्भुवःस्वस्तस्मै प्राणात्मने प्राणदेवतात्मने नमोनम इति। 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधःस्मृत' इतिस्मृतेः। ओंतत्सच्छब्दानामखण्डवृत्तिवेद्याय भूर्भुवः स्वरादिपंचव्याहृतिमयनिखिलजगदात्मने नमोनमः। अत्र प्रथमप्राणशब्देन आध्यात्मिकवायुरूपस्य द्वितीयप्राणशब्देन देवतायाश्च ग्रहणं तेनोमयात्मत्वंबोधितं भवति। एवमग्रे अपानादावपि बोध्यम्। पुनः पुन आत्मात्मीयं सर्वं समर्पयामि इत्यर्थः। नम इत्यत्र म शब्दस्यात्मात्मीयार्थकत्वस्य न शब्दस्य तन्निषेधपरत्वस्य च निरूपणात्। नमः शब्दस्य नमोनारायणेतिमंत्रव्याख्याने पंचरात्रे बृहद्ब्रह्मसंहितायां बृद्धहारीस्मृतौच तथैव व्यवस्थापितत्वात्। ननु प्रणववाच्याय–प्राणात्मने कस्मै आत्मात्मीयं समर्पयामि इति विशेष्याकांक्षायामाह–'ओंश्रीकृष्णाय गोविन्दाये'त्यादि। ओंक्लीमित्यनर्थान्तरमित्युक्तम्। श्रीपदवाच्यं भगवत्स्वरूपान्तरभूतं 'स इममेवात्मानं द्वेधाऽपातयत्पतिश्च पत्नीचाभवताम्।।' 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ' 'ईश्वरीं सर्वभूतानां तामिहोपह्वयेश्रियाम्' 'विष्णोरनपगामिनीम्।' इत्यादिश्रुतिसहस्रप्रतिपाद्यमनादिसिद्धं भगवत्पत्नीभूतं सर्वस्त्रीबीजरूपं परमलक्ष्मीतत्त्वमेवेत्युपपादितं पूर्वतापिन्यां 'श्रीकृष्णं ध्यायन्तः' इति श्रुतिव्याख्याने उत्तरतापिन्यां च तत्र तत्रे तिबोध्यम्। तया सहितः नित्यसम्बन्धयुतः कृष्णः तस्मा इत्यर्थः कृष्णगोविन्दगोपीजनवल्लभेतिपदत्रयंपूर्व्वतापिन्यामेव व्याख्यातम्। एतद्वाक्येन पूर्वतापिन्युक्तपंचपदीविद्यैवोपस्थापिता। केवलं पंचपदीवाक्यार्थस्फोरणाय क्लींमित्यस्यस्थाने ओमितिनमश्च स्वाहास्थाने व्याहृतिः। कृष्णपदपूर्वभागेश्रीपदं च निवेशितानि। तत्र प्रथमप्रयोगेन 'क्लीमो-

कारयोरेकार्थत्वं श्रीपदेन मंत्रघटककृष्णपदार्थे श्रियो नित्यसाहित्यं व्याहृतिप्रयोगेण व्याहृतिवाच्यभूरादिलोकोपलक्षितसमग्रप्रपंचस्य स्वाहापदार्थभगवदिच्छाशक्तिभूतमायाधीनत्वं चार्थतः सूचितमित्यपि बोध्यम्। एवंच पंचपदीविद्या समग्रतापिन्या महावाक्यभूता। अत्रैव मग्रवेदार्थानामन्तर्भाव इतितापिनीव्यख्यानेनातिरोहितमेव। एवंच इह पंचपदीद्वारैव विशेष्योपस्थापनम्। तथाच सखण्डाखण्डवृत्तिभ्यां समग्रप्रणववाच्याय प्राणात्मने भूरादिसर्वजगदात्मने पंचपदीविद्याप्रतिपाद्याय श्रीकृष्णायात्मात्मीयं तदात्मकं तदीयं सर्वमहं समर्पयामीति वाक्यार्थः।

अथं मुख्यप्राणे अपानादिप्राणवृत्तिवत् पञ्चपदीविद्याप्रतिपाद्ये मूलरूपपुरुषोत्तमेऽनिरुद्धादिव्यूहानन्तर्भावयन्ती तस्मै स्वात्मात्मीयं समर्पयति श्रुतिः। तथाच मध्ये मध्ये तत्तत्प्राणवृत्त्यात्मकत्वप्रतिपादनं तेषां भगवदात्मकत्वबोधनाय, व्यूहानां मूलरूपेऽन्तर्भावे दृष्टान्तभावायचेति बोध्यम्। "ओम् अपानात्मने इत्यादिपूर्ववत्— 'ओंश्रीकृष्णाय प्रद्युम्नायानुरुद्धाये' ति। अत्र "ओंश्रीकृष्णाय गोविन्दाय गोपीजनवल्लभायेत्यनुपदोक्तमंत्रस्यैकदेशश्रीकृष्णायेत्यंशस्य पठनं शेषाणामनुक्तानामंशानामुपलक्षकम्'। तेन समग्रपंचपदीविद्याप्रतिपाद्यो यः श्रीकृष्णः तस्मै प्रद्युम्नायानिरुद्धाय" प्रद्युम्नानिरुद्धव्यूहयोरात्मनेऽआत्मभूताय नमो नमः इत्यर्थः। ओंतत्सद्भूर्भुवः स्वरित्येतेषामर्थस्तु पूर्ववत्॥ एवमेव 'श्रीकृष्णाय रामाय' 'श्रीकृष्णाय देवकीनन्दनाय" इतित्रिष्वपि वाक्येषु बोध्यम्। अत्र रामपदेन संकर्षणव्यूहो गृह्यते। देवकीनन्दनपदेन वासुदेवाख्यस्तुर्यो व्यूहो गृह्यते। तेन चतुर्णामपि व्यूहानां पंचपदीविद्यागम्यसर्ववेदान्तवेद्यपरमकाष्ठापन्नसर्वमूलरूपसत्पुण्डरीकनयनेत्याद्युक्तस्वरूपकृष्णात्मकत्वं तादृशमूलरूपस्यैवच अनुरुद्धादिचतुर्व्यूहात्मत्वमंशित्वादिकं चोक्तं भवति।

इदमत्र बोध्यम्। अंशेषु प्रदीपादिषु अंशिनस्तेजस्तत्त्वादेर्नियतान्वयः

सर्वानुभवसिद्धः, नतु-अंशिनस्तेजस्तत्त्वसामान्ये अंशस्य प्रत्येकस्य प्रदीपादेः। तेनेदं निश्चीयते यत्सर्वानुगतो भवति स एवांशी सर्वेषामंशानामात्मभूतश्च। यथा प्रदीपादीनां विशेषाणां तेजस्तत्त्वं। यश्च प्रतिनियतः स चांशविशेषादिपदवाच्यो यथा प्रदीपादिवस्तु तेजस्तत्त्वस्य। एवंचा अत्र व्यूहचतुष्टयेषु पञ्चपदीप्रतिपाद्यस्य श्रीकृष्णस्यानुगतत्वेन प्रतिपादनात् स एवांशी, अनिरुद्धादयो वासुदेवान्तास्तस्यैवांशविशेषा इति प्रतिपादितं भवति। अनयैव प्रक्रियया गीतायां विभूत्यध्याये "रुद्राणां शंकरश्चास्मि" इत्यादौ सर्वत्राहं पदार्थस्यानुगमात्, अहमर्थः श्रीकृष्णः अंशी विभूतिमान् शङ्करादिश्चांशविशेषो विभूतिरिति निश्चितं भवति। सेऽयंप्रक्रियांऽशांशिभावबोधकतया सर्वशास्त्रप्रसिद्धैवेति बोध्यम्।

बृहदारण्यकेहि शाकल्यप्रश्ने एक एव देव इति याज्ञवल्क्येन निर्धारितम्। स क इत्याकांक्षया 'कतम एकोदेव' 'इति प्राण इति' स ब्रह्म-इत्याचक्षते," इतिप्राणस्यैव तादृशैकदेवत्वमुक्तं स च न मुख्यामुख्यप्राणरूपः। किन्तु ब्रह्मैव परमप्रियत्वात्प्राणपदवाच्यम्—इति 'स ब्रह्म' इत्यनेन सूचितम्। अग्रे च "कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौस्थ इति प्राण इति कस्मिन्नु प्राणःप्रतिष्ठित इत्यपान इति कस्मिन्नपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यान प्रतिष्ठितः इत्युदान इति कस्मिन्नुदान प्रतिष्ठितः समान इति" इति समाने पर्य्यवसानमुक्त्वा तस्य समानस्य मुख्यप्राणरूपत्वमाशङ्क्य तन्निवारणायाह 'स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यते' इत्यादिनाऽग्राह्यत्वादिस्वासाधारणधर्मकथनमुखेन सर्वविलक्षणतत्स्वरूपमुक्त्वा देवान्तरस्य तन्महिमत्वं पूर्वोक्तं निगमयति 'एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषा स यस्तान्पुरुषान्निरूह्य प्रत्युह्यात्क्रामत' इत्यादिनेति अतोऽत्रापि। सर्वेषां व्यूहानां क्रमशः समानाख्ये परे ब्रह्मणि गोपाले प्रतिष्ठाबोधनार्थं तेन तेन शब्देन प्राणादिपंचपदार्था न वृत्तिरूपाः किन्तु प्राणपर्य्याय समानाख्यब्रह्मण एव प्रकाशविशेषः इत्यपि बोध्यम्।

"ओंश्रीगोपालाय निजस्वरूपाये" ति—अत्रापि श्रीकृष्णायेत्यनुवर्तते निज

स्वरूपायेत्यस्य निजम् आत्मभूतंयत्स्वरूपं तत् निजस्वरूपं तस्मै इत्यर्थः। तथाच पंचपदीविद्यागम्याय श्रीकृष्णाय श्रीगोपालाय स्वसाक्षात्स्वरूपाय 'ओंतत्सद्भूर्भुवःस्वस्तस्मै वै नमोनम इत्यर्थः। यद्वा श्रीकृष्णायेतिपदं नानुवर्तते निजपदेनैव तथात्वसिद्धेः। तस्यैव मूलरूपत्वेन पुनः कृष्णात्मकत्वबोधने प्रयोजनाभावाच्चेति। इदमत्र विशेषतोऽवधेयम्—वासुदेवान्तर्व्यूहचतुष्टयेषु क्वापि निजत्वघटितस्वरूपत्वस्याविशेषणात् गोपालमूर्तौच विशेषणाच्छ्रीगोपालमूर्तिरेव समग्रतापिनीप्रतिपाद्यस्य परमकाष्ठापन्नस्य देवस्य निजसाक्षात्स्वरूपमन्यानिच सर्वाणि रूपाणि तस्यैवप्रकाशविशेषभूतानीति। एतेनाऽपि वासुदेवव्यूह एव परमकाष्ठापन्नः तापिनीमुख्यप्रतिपाद्यः स एव गोपालपदवाच्यश्च इत्यपि निरस्तम्। देवकीनन्दनायेत्यनेन प्रतिपाद्ये वासुदेवव्यूहे नजस्वरूपत्वाविशेषणात्।' 'देवकीनन्दनाये'त्यनेनानिरुद्धादिव्यूहवत्–विभूतिकोटौ पाठात्। 'देवकीनन्दनाये'त्यनेन प्रतिपादिताद्वासुदेवव्यूहात् भिन्नत्वेन निजस्वरूपत्व कथनात्तद्वैलक्षण्येन पृथङ्निरूपणाच्चेत्यपि बोध्यम्॥

ननु गाः पातीति गोपाल इति व्युत्पत्तेर्गोचारणरूपलीलाव्यापृतौ 'गोपालो भगवद्रूपविशेष इति निश्चीयते तथाच निश्शेषलीलामयरसरूपं सर्वातशायि परंब्रह्म कथं तेन बोध्यव्य मितिचेन्न। गोपालशब्दस्य गोपाज्जीवानात्मत्वेनासृष्टिपर्य्यन्तमालाति 'ओंतत्सद्गोपालोभवति' इति श्रुत्यैव परममूलरूपपर्य्यवसाय्यर्थकरणात्। अत एव च गोपालशब्देन नात्र गोचारणलीलामात्रव्यापृतं स्वरूपं गृह्यतेऽपितु 'सत्पुण्डरीकनयनंमेघाभं वैद्युताम्बरम्। द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरं गोपगोपीगवावीतमिति' निरुक्तं सर्वलीलामयरसरूपमेव बोध्यम्। इति न काप्यनुपपत्ति। नचैवं ओं श्रीकृष्णाय गोविन्दायेतिसर्वानुगतमंत्रेणैव मूलरूपस्योक्तत्वात्पुनर्गोपालाय निजस्वरूपायेतिनिरूपणस्य किंप्रयोजनमितिवाच्यम्; द्वापरान्ते कल्पविशेषे प्रकटीभूतस्य वृन्दावनगोचरस्यापि रूपस्य सर्वथा मूलरूपत्वबोधनायेतिबोध्यम्। एतदभिप्रा-

येणैव ब्रह्मसंहितायामुक्तम् 'रामादिमूर्तिषु कलानियमेन तिष्ठन्नानावतारमकरोद्भुवनेषु किन्तुकृष्णः स्वयं समभवत् परमः पुमान् यो गोविन्दमादिपुरुषं तमहं भजामि॥इति। अत्र 'ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः। 'अनादिरादिर्गोविन्दः सर्वकारणमि'त्यनेनोपक्रान्तम् 'वेणुं क्वणन्तमरविन्ददलायताक्षम्।' 'बर्हावतंसमि' त्यादिना निरूपितमेव रूपमुक्तं तदेव रूपं द्वापरान्ते प्रकटीभूतमिति सूचितम्। "एते-चांशकला पुंसः कृष्णस्तु भगवान्स्वयमि' तिभागवतमहावाक्येऽपि तथैवाशय इति बोध्यम्।

यद्वा तुरीयरूपवासुदेवव्यूहस्वरूपपर्य्यन्तं मूलरूपस्य परमदेवस्य श्रीकृष्णस्यांशरूपमेव नतु साक्षान्निजरूपं तर्हि तस्य परमदेवस्य साक्षान्निजरूपं किम् इति जिज्ञासायाम्—'ओं गोपालाय निजस्वरूपाये'ति। तथा च 'सत्पुण्डरीकनयनम्' तमेकं गोविन्दं सच्चिदानन्दविग्रहमि'त्याद्युक्तगोपालस्वरूपमेव परमदेवस्य साक्षान्निजरूपमन्यानि तु रूपाणि तस्यैव प्रकाशविशेषा इतिभावः। एवं गोपालाख्यस्य सत्पुण्डरीकेत्युक्तरूपस्यैव परमदेवस्य श्रीकृष्णस्य सर्वव्यूहात्मत्वं सर्वमूलरूपत्वं प्रतिपादयंती श्रुतिः स्तुत्या तस्यैव प्रधानात्मत्वं निरूपयति। तेन स एव प्रधानादीनामपि सर्वेषां जड़ानामात्मा प्रधानादयस्तु 'एकमेवाद्वयं ब्रह्मासीत् तस्मादव्यक्तमव्यक्तमेवाक्षरमि' त्युक्तदिशा तदधीनस्थितिप्रवृत्तिलयकत्वात्तदात्मकमेव नतु ततोऽव्यतिरिक्तं स्वतंत्रसत्ताकं चेति सूचयन्ती स्तौति। 'ओंठां योऽसौ प्रधानात्से'ति। योऽसौ सर्ववेदप्रसिद्धः प्रकृततापिनीविद्यानिरूपितः परमदेवः कृष्णाख्यो गोपालः स एव प्रधानात्मा प्रधानस्य तमोऽव्यक्ताद्यपरपर्य्यायस्य त्रिगुणमयस्य आत्मा 'ततः परेदेवे एकीभवति' इति श्रुत्यन्तरात् पर्य्यवसानभूतो गोपालः तस्मै इत्यर्थः। ओं तत्सदेत्यादेर्व्याख्यानं पूर्ववत्। ओंठां योऽसौ इन्द्रियात्मेति। 'इन्द्रियाणां चक्षुरादीनां तन्नियामकसूर्य्यादिदेवानां च आत्मा 'गताः कलाः पंचदश प्रतिष्ठादेवाश्च सर्वे प्रतिदेवतासु। कर्म्माणि विज्ञान-

मयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति" इतिश्रुतेश्चरमपर्य्यवसानरूप इत्यर्थः। 'ओं ठां योऽसौ भूतात्मे' ति भूतानि पंचतन्मात्रारूपाणि पंचमहाभूतरूपाणिच। तेषामात्मा परमपर्य्यवसानभूत इत्यर्थः। एतानि प्रधानेन्द्रियभूतपदानि महदहंकारयोरप्युपलक्षकानि, भूतपदंच स्वकार्य्याणां सर्वेषां पर्वतनद्यादीनां ब्रह्मादिस्तम्बपर्य्यन्तविग्रहाणां चोपलक्षकम्। तेन तमोऽक्षराव्यक्तमहदादिनिखिलकार्य्याणां श्रीकृष्णात्मकत्वमुक्तं भवति। यद्वा 'योसौ प्रधानात्मा' निरुक्तप्रधाननियामकः "यस्यैकनिश्वसितकालमथावलंब्य जीवन्ति रोमविलजा जगदण्डनाथाः। विष्णुर्महान्स इह यस्य कलाविशेषो गोविन्दमादिपुरुषं तमहं भजामि॥ इतिनारदपंचरात्रब्रह्मसंहिताद्युक्तलक्षणः प्रथमः पुरुषावतारः तद्रूपो गोपालः 'तस्मै इत्यन्वयः। अत्र प्रधानपदं महत्तत्त्वस्याप्युपलक्षकम्। एवं "ओं य इन्द्रियात्मा' समष्टीन्द्रियतत्त्वनियामकः 'यः कारणार्णवजलेभजति स्म योगनिद्रामनन्तजगदण्डसरोमकूपः। आधारशक्तिमवलंब्य परां स्वमूर्तिंगोविन्दमादिपुरुषं तमहं भजामि॥' इत्युक्तलक्षणो द्वितीयः पुरुषावतारः तद्रूपाय गोपालायेत्यर्थः। अत्र' इन्द्रियपदं अहंकारस्याप्युपलक्षकं पूर्ववत्। भूतात्मा सूक्ष्मस्थूलपंचमहाभूतनियामको यः–तृतीयः पुरुषावतारः तद्रूपो यो गोपालस्तस्मै इत्यर्थः। "प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसस्थितम्। तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते।' इतिवाक्यात्। एवं च त्रयाणामपि पुरुषावताराणां गोपालस्यैव रूपान्तरत्वसूचनात् पुरुषावताराणामपि गोपाल एवांशी तस्यैवांशविशेषास्त्रयः पुरुषा इत्युक्तं भवति। एतदभिप्रायेणैव ब्रह्मसंहितायां "यस्यैकनिःश्वसितामि" त्यादिना तेषांगोविन्दकलात्वमुक्तमिति। अथ "स उत्तमः पुरुष" पुरुषान्न "परं किंचित् सा काष्ठा सा परा गतिः" इत्यादिश्रुतिनिरूपितः "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोकेवेदेच प्रथितः पुरुषोत्तमः।' इतिस्मृतेश्च लोकवेद प्रथितः पुरुषोत्तमः स एवेत्याह। योऽसावुत्तमः पुरुषः" इति॥

मू० ओं ठां योऽसौ परंब्रह्म गोपाल ओं ठां तत्सद्भूर्भुवः

स्वस्तस्मै वै नमो नमः ॥१०३॥ ओं ठां योऽसौ सर्व-भूतात्मा गोपाल ओं ठां तत्सद्भूर्भुवः स्वस्तस्मै वै नमो नमः ॥१०४॥ ओं ठां योऽसौ जाग्रत्स्वप्नसुषुप्ति-मतीत्य तुर्य्यातीतो गोपाल ओं ठां तत्सद्भूर्भुवः स्व-स्तस्मै वै नमो नमः ॥ १०५ ॥

"ब्रह्म पुच्छं प्रतिष्ठा-यो ह वै तत्परमंब्रह्म वेद इत्यादिश्रुतिनिरूपितमक्षरं ब्रह्म परंब्रह्म च तदुभयमप्ययमेव इत्याह । 'ओं योऽसौ ब्रह्म परंब्रह्म गोपालः इति । "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' । 'सकलंपरंब्रह्मैव तत्'' इतिपूर्वं प्रतिज्ञातं चोपसंहृतम् ॥ "एष त आत्माऽन्तर्य्याम्यमृतः' वृ० ३। ७। २३। "स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्योदेव एको नारायणः''सुबा० खं० ८। इत्यादिश्रुत्युक्तः सर्वभूतान्तरात्मा 'सएवेत्याह "योऽसौ सर्वभूतात्मा गोपालः' इति भूतानां स्थावराणां जंगमानां च आत्मा अन्तर्य्यामिरूपः। यद्वा भूतानां जीवानां "ब्रह्मणोंऽशभूतः" इत्युक्तश्रुतेः, अंशभूतानां आत्मा अंशीभूतः गोपालः । तस्मै इत्यर्थः । एतावता परमतत्त्वप्रतिपादकानां सर्वेषामेव श्रुतिवाक्यानांपुनः श्रीकृष्णे समन्वयो दर्शितः परमोपसंहारश्चावतारितः । 'योऽसौ' इत्यस्यश्रुतिषु प्रसिद्धइति सर्वत्रार्थः॥ 'योऽसौ जाग्रत्स्वप्ने'' त्यादिजाग्रत्स्वप्नसुषुप्तितुरीयतुरीयातीतोऽन्तर्य्यामी तत्स्वरूपो यो गोपालः'ओं तत्सद्भूर्भुवः स्वरात्मने तस्मै नमोनमः इत्यर्थः। तत्र जाग्रदभिमानी विश्वः। स्वप्नाभिमानी तैजसः। सुषुप्त्यभिमानी प्राज्ञः जाग्रदादिसर्वप्राकृतावस्थात्रितयातीतः तुरीय इत्युच्यते, तदुक्तं माण्डूक्योपनिषदि 'जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः। स्वप्नस्थानोऽन्तःप्रज्ञ एकोनविंशतिमुखः प्रविविक्तभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः। नान्तः प्रज्ञं नोभयतः प्रज्ञं न

प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृष्टमव्यवहार्य्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपंचोपसमं शान्तं शिवं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः' इति। वैश्वानर एव विश्व इत्यप्युच्यते–तदुक्तं नृसिंहोत्तरतापिनीये प्रथमखण्डे 'जागरितस्थानः स्थूलप्रज्ञः सप्तांग एकोनविंशतिमुखः स्थूलभूक् चतुरात्मा विश्वो वैश्वानरःप्रथमः पादः'इति। एवं–चतुर्थ एव तुरीय उच्यते 'चतुर्थं मन्यन्ते स आत्मा स विज्ञेय ईश्वरग्रासः' इत्यादि समानप्रकरणे नृसिंहोत्तरतापिन्यां 'ईश्वरग्रासस्तुरीय स्तुरीयः' 'तुरीयमानन्दामृतरूपम्' इत्युक्तेः॥

तुरीयातीतस्तु–जाग्रदादिसर्वावस्थातीतः तुरियादप्युत्कृष्टः। यथा गीतायां 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।' इत्यत्र क्षरमतीतः क्षरातीत इति द्वितोयासमासस्तथाऽत्रापि तुरीयमतीतस्तुरीयातीत इति द्वितीयासमासात्। तुरीयातीते तुरीयात्कृष्टत्वस्य' तत्कैमुतिकन्यायेनैव जाग्रदादिसर्वप्राकृतावस्थातीतत्वस्य च सिद्धेः। एतद भिप्रायेणैव जितंते स्तोत्रे पंचरात्रे 'स्वमहिम्नि स्थितं देवं निर्विकारं निरंजनम्। अप्रमेयमजं विष्णुं शरणं त्वां गताऽस्म्यहम्। गुणातीतं परं शान्त मब्जनाभं सुरेश्वरम्। तुरायाद्यतिरिक्तं त्वां कौस्तुभोद्भासिवक्षसम्। विश्वरूपं विशालाक्षं कदा द्रक्ष्यामि चक्षुषा' इत्यत्र तुरीयाद्यतिरिक्तत्वं भगवति विशेषितम्। अत्रादिपदेन जाग्रदाद्यवस्थात्रयपरिग्रहः। नच जाग्रदाद्यतिरिक्तमित्येव वक्तव्यम्। तथा सति तुरीयातिरिक्तत्वे सन्देहः स्यादिति। एतदभिप्रायेणैव च–'सौभाग्यलक्ष्म्युपनिषदि 'तुरीयरूपां तुरीयातीतां सर्वमंत्रासनगतां पीठोपपीठदेवतापरिवृतां चतुर्भुजां श्रियं हिरण्यवर्णामिति पंचदशर्भिध्यायेत्' इत्यत्र तुरीयातीतपुरुषोत्तमांगभूतायां श्रीमहालक्ष्म्यां तुरीयातीतत्वं विशेषितम्। एतदभिप्रायेणैवच–नारदोयपुराणे श्रीराधाकृष्णसहस्रनाम्नि तस्याः 'त्रिवेदज्ञा त्रिलोकज्ञा-तुरीयान्तनिवासिनी। दुर्गाराध्यारमाराध्या विश्वाराध्या चिदात्मिका' इत्यत्र तुरोयान्तनिवासिनीत्वमुक्तम्। पाद्मेऽपि वृन्दावनमाहात्म्ये

परंधाम्निगतं श्रीनारदंप्रति श्रीदेव्या 'वृन्दानाम्नी पुरीचेयं कृष्णचन्द्रप्रिया सती। अहं च ललितादेवी तुर्य्यातीता च निष्कला। अहंच ललितादेवीराधिका याच गीयते ॥' इति स्वस्याः तुरीयातीतत्वं निरूपितम्। तस्मात्तुरियातीतत्वं नाप्रसिद्धमिति बोध्यम् ॥

ननु—"एकात्मप्रत्ययसारं प्रपंचापसमं शान्तं शिवं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" इति माण्डूक्यश्रुतौ तुरीय एव सर्वान्तिमतत्त्वतयोपदिष्ट इति निश्चायते 'स आत्मा स विज्ञेयः' इति तस्यैवात्मत्वस्य विज्ञेत्वस्यचोपदेशात्। यश्च सर्वात्मा मुमुक्षुविज्ञेयः स परमार्थ इति स्थितिः। तथाचऽताऽप्यधिकं तुरीयातीतं किमपि' इत्यलीकमिव प्रतीयते तस्मादर्थान्तरं कल्पनीयमितिचेन्न। तुरीयादुत्कृष्टस्य तुरीयातीतस्य स्वीकारेऽपि माण्डूक्यादौ तुरीयत्वेन तुरीयस्योक्तसर्वान्तिमतत्त्वता नविरुद्ध्यते। तुरीयातीतस्यापि तुरीयविशेषत्वात्। प्राकृतसर्वावस्थातीतं स्वतः प्रकाशानन्दामृतं तुरीयशब्देनोच्यते, तदेव च घनीभूतं पुरुषाकारं तुरीयातीतशब्देनोच्यते। तथाच जाग्रदादिसर्वप्राकृतावस्थातीतत्व लक्षणं तुरीयत्वं तत्रापि निर्बाधमेव। यथा तमोविरुद्धस्वभावो भावः प्रकाशशब्देनोच्यते स एव च घनीभूतपुरुषाकारः, अग्निसूर्य्यादिशब्देन प्रकाशशब्देनचोच्यते। नैतावता अग्नौ सूर्य्येवा तमोविरुद्धस्वभावप्रकाशत्वं विरुद्ध्यते तद्वत्। एतदभिप्रायेणैव च तुरीयातीतस्यान्तर्य्यामित्वमप्युक्तम्। मूर्तप्रकाशः सूर्य्याग्न्यादिः। अमूर्तप्रकाशस्य नियामको भवति। तथा तुरीयातीतो मूर्तानन्द इतरेषां सर्वेषाममूर्तानन्दानां तुरीयपर्य्यन्तानां नियामक इति तदर्थः। तदुक्तं हयशीर्षपंचरात्रे 'द्वे ब्रह्मणी तु विज्ञेये मूर्तंचामूर्तमेव च। अमूर्तस्याश्रयोमूर्तो मूर्तानन्दोऽच्युतो मतः। अमूर्तःपरमात्मा च ज्ञानरूपश्च निर्गुणः। स्वस्वरूपश्चकुटस्थो ब्रह्मचेति त्रयंमतम्' इति। पाद्मेपि पातालखण्डे वृन्दावनमहात्म्ये 'नित्यानन्दतनुः शौरिर्य्योऽशरीरोति भाष्यते। वाय्वग्निनाकभूमीनामंगाधिष्ठातृदेवता। निरूप्यते ब्रह्मणोऽपि

तथा गोविन्दविग्रहः ॥' इति । ब्रह्मवैवर्तपुराणादावपि बहुधा प्रपंचितं, तत्सर्वं संग्रहीतं मया युग्मतत्त्वसमीक्षायाम्। तुरीयतुरीयातीयोरुभयोर्मूर्तमूर्तानन्दरूपयोः "प्रकाशाश्रयवद्वा तेजस्त्वात्" इतिन्यायेन-अभेदः। तदुक्तं कपिलपंचरात्रे । "अमूर्तमूर्तयोर्भेदोनास्तितत्त्वविचारतः । भेदस्तु कल्पितोवेदैर्मणितत्तेजसोरिव ॥" इति। त्रिपाद्विभूतिनारायणोपनिषदि "यथा सर्वगतस्य निराकारस्य महावायोश्च तदात्मकस्य त्वक्‌पतित्वेन प्रसिद्धस्य साकारस्य महावायुदेवस्य चाभेद एव श्रूयते सर्वत्र । यथा पृथिव्यादीनां व्यापकशरीराणां देवविशेषाणां च तद्विलक्षणतदभिन्नव्यापकापरिछिन्ना निजमूर्त्याकारदेवताः श्रूयन्ते सर्वत्र तद्वत्परब्रह्मणः सर्वात्मकस्य साकारनिराकारभेदविरोधो नास्त्येव विविधविचित्रानान्तशक्तेःपरब्रह्मणः स्वरूपज्ञानेन विरोधो न विद्यते । तदभावे सत्यनन्तविरोधोविभाति" इति । अत्र मूर्तत्वं न परिछिन्नपरिमाणवत्त्वमपितु पुरुषाकारत्वम् । यथाच पुरुषाकारत्वेऽपि' अपरिच्छिन्नत्वमलौकिकत्वात्तथोपपादितं युग्मतत्त्वसमीक्षायामि ततो बोध्यम् ।

ननु यदि निखिलप्राकृतावस्थातीतः सच्चिदानन्द एव तुरीयः स एव च धर्मीभूतानन्दस्वरूपः तुरीयातीत इत्युच्यते । तदा तस्य तुरीयातीतत्वं कथं युज्यते तुरीयमतिक्रम्य इतः गतः तुरीयातीत इतिव्युत्पत्तेः, तुरीयातीतशब्दस्य तुरीयविश्लेषगर्भितत्वादिति चेन्न। तुरीयातीतशब्दस्य प्राकृतसर्वावस्थातीतत्वसच्चिदानन्दरूपत्वरूपतुरीयसामान्यधर्मतः स्वरूपतश्चातिक्रान्तत्वबोधने तात्पर्य्याभावात् । अपितु पुरुषाकारत्वनिरतिशयसौन्दर्य्यमाधुर्य्यदयावात्सल्यलीलापरोकरादिधर्मत एवामूर्ततुरीयादतिक्रान्तत्वबोधने तात्पर्य्यात् । एतदभिप्रायेणैव च सौभाग्यलक्ष्म्युपनिषदि । "तुरीयरूपां तुरीयातीताम्" इतिवाक्येन एकस्मिन्नेव श्रीमहालक्ष्मीरूपे तुरीयत्वं तुरीयातीतत्वं च निरूपितमिति । "जाग्रत्स्वप्नसुषुप्तिमतीत्य तुर्य्यातीतो गोपालः" इत्येवं पाठेऽपि न प्रकृतार्थहानिः । जाग्रदाद्यभिमानिविश्वादिकमतीत्य तुरीयमप्यतीतो गोपाल इति तदर्थात्

तुरीयात् तत्त्वस्यार्थतः सिद्धेरिति ।

वस्तुतस्तु—माण्डूक्येऽपि न तुरीय एव सर्वातिशायिब्रह्मरूपत्वेन निरूप्यते, तस्यापि जाग्रदादिवदवस्थाविशेषमात्रत्वात् । अतएव जाग्रदादितुरीयपर्य्यन्तानाम्, उपक्रमे 'सोयमात्मा चतुष्पात्, इत्यनेन पादत्व मुक्तम् । अंशत्वमेव पादत्वं "पादोऽस्य विश्वा भूतानि" इतिश्रुतौ पादशब्दस्य, अंशार्थकत्वेनैव द्वितीयस्य तृतीयपादे "मंत्रवर्णाच्च" इतिसूत्रे व्याख्यानात् । लोकेऽप्यंशविशेषे एव पादशब्दः प्रयुज्यते गवादीनां पादा रूप्यकादीनां पादाश्चचरण कार्षापणादयो गोरूप्यकयोरंशा एव भवन्ति । यत्त विश्वादौ पादशब्दस्य पद्यते अनेन इतिपादः, इति कारणव्युत्पन्नार्थकः । तुरीये तु 'पद्यते प्राप्यते' इत्यर्थकः कर्मव्युत्पन्नः पाद शब्दः प्रयुज्यते इति तदसमीचीनमाभाति सोऽयमात्मा चतुःपात्' इत्युपक्रमे, अविशेषेणैव पादत्वकथनात् । अंशरूपार्थपरित्यागे बीजाभावात् । एवंच यस्य ता चतस्रोऽवस्था तुरीयान्ता अंशभूताः स अंशी चतुष्पात्, एव स एवात्र परमात्मा "स आत्मा स विज्ञेयः" इत्येताभ्यां विशेष्यते । तयोरर्थस्तु 'सः' इमे निरूपिताः—चत्वारस्तुरीयान्ता पादा अंशभूता यस्य तथाविधश्चतुपात् 'आत्मा' सर्वेषामात्मा । सर्वांशित्वात् सर्वाभिस्तुरीयान्ताभिरवस्थाभिस्तत्रैव सर्वेषां वर्तमानत्वात्, इति ।

एतेन "ओमित्येतदक्षरमिदं ँ सर्वम्, 'सोयमात्माचतुःपात्, इत्यन्तेन प्रतिज्ञातं सोपपत्तिकं निगमितम् । शास्त्रमुखेनैव तादृशविचारस्य प्रयोजनमाह "स विज्ञेय" इति । अतः स सर्वेषामात्माऽतो मुमुक्षुभिरात्मकामैः, "स विज्ञेयः, श्रद्धाभक्तिध्यानादिभिर्विज्ञेयो विशेषतो ज्ञेयः साक्षात्कर्तव्य इति यावत् । श्रद्धाभक्त्यादिभिः कुत्र वा कथंवा 'ध्येयो येन साक्षात्कृतो भवति इत्याकांक्षायां संराधनप्रकारमाह 'सोऽयमात्मे' त्यादि । स चतुः पात्, 'अयमि' ति इदानीमेव निरूपितः 'आत्मा' परमात्म। 'अध्यक्षरमिति' 'अक्षरे इति अध्यक्षरम् ।' अक्षरं भगवतः परमंधाम "दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मा प्रतिष्ठितः' अव्यक्तोक्षर इत्युक्तस्तमाहुःपरमांगतिम् । यं प्राप्य न

निवर्तन्ते तद्धाम परमं मम' इत्यादिश्रुतिस्मृतिप्रसिद्धम्। एतेन ध्यान-स्थानमुक्तम्। तदाह श्रुत्यन्तरे 'सत्यं ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता॥' 'ऋचो क्षरे परमेव्योमन्' 'यस्मिन्देवा अधिविश्वे निषेदुः। यस्तं न वेद किमृचा करिष्यति य एतद्विदुस्त इमे समासते' इत्यादि। इहापि 'एको वशी सर्वगः कृष्णईड्यः। एकोऽपि सन् वहुधा यो विभाति। तं पीठगं येऽनुभजन्ति धारास्तेषां सुखं शाश्वतंनेतरेषामि'त्यादि। 'अक्षरे परमे व्योमन्' 'अव्य-क्तोक्षर इत्युक्तः' इति श्रुतिस्मृतिभ्यामेत्र परमधाम्नोऽक्षरपदवाच्यत्व-मप्युक्तमिति नास्माकमत्राक्षरपदेन धामग्रहणमयुक्तमिति॥ अक्षरपदेन जीवात्मग्रहणमपि युक्तं स्वस्वात्मनि परमात्मनो नित्यं वर्तमानत्वेन तत्र भावनया संराधनस्य युक्ततमत्वात्। तदुक्तं बृहदारण्यके 'योविज्ञानेतिष्ठन् बिज्ञानमन्तरो यमयति' 'यआत्मानि तिष्ठन्नात्मानमन्तरो यमयति' 'समाहितो भूत्वा आत्मन्यये वात्मानं पश्यति' इत्यादि। एवं संराधनस्था-नमुक्त्वा नामधेयकथनमुखेन तत्संराधनमाह। ओंकार इति॥ ओमित्यनेनाक्रियते आहुयते इत्योंकारः परमात्मा। तथाच प्रणवेनैवोपासनीय इति। 'ओमित्येवं ध्यायथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' (मु० उ०) यः पुनस्त्रिमात्रेणोंकारेण परमपुरुषमभिध्यायीत स तेजसि सुर्य्ये सम्पन्नः सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परा-त्परं पुरिशयं पुरुषमीक्षते' 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति यदिच्छन्तो ब्रह्मचर्य्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमि-त्येतत्' एतद्ध्येवाक्षरं ब्रह्म एतदेवाक्षरं परं एतद्ध्येवाक्षरं ज्ञात्वा योयदि-च्छति तस्य तत्। एतदाम्वनं श्रेष्ठमेतदालम्बनं परम्। एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते' इत्यादिश्रुत्यन्तरेभ्यः। एवं चतुष्पदमूलरूपो-पासनमखण्डप्रणवेनोक्त्वांगभूतानामुपासनमपि तस्यैव' तेष्वपि तस्यैव विद्यमानत्वादित्याहअधिमात्रमि'ति। मात्रासु इति अधिमात्रम् इत्यादि। तेषां फलमुक्त्वा चतुर्थपादभूतस्योपासनेन कैवल्यफलमाह 'आत्मैव

संविशत्यात्मनात्मानं य एवं वेद' इति। इत्येवं माण्डूक्यश्रुतिर्व्याख्येया। इति न कश्चिद्विरोधः। तदेवं गीतायामपि तुरीयातीत एव पुरुषोत्तम-शब्देनोच्यते तुरीयंत्वक्षरशब्देन ? 'ब्रह्मणोहि प्रतिष्ठाहमित्यत्र चतुर्दशे ब्रह्मशब्देनोच्यते' इत्यपि बोध्यम्। एवंच यो विश्वादिपादानां तुरीयान्तानामंशी चतुष्पात् परमात्माऽखण्डप्रणववेद्यः, स एव तात्पर्य्येण तुरीयत्वेन माण्डूक्ये उपदिष्टः स एवात्र शब्दतोपि तुरीयातीततयोपदिष्ट इति न विरोधः।

एवंच विश्वादय एव क्रमशो रामादिशब्दैरप्युच्यंते 'रोहिणी तनयो विश्व अकाराक्षरसंभवः' इत्यादिपूर्वोक्तैरित्युपपादितं तत्रैव। निर्विकल्पकसमाध्यवस्था कैवल्यावस्था च तुरीयावस्थाशब्देनोच्येते तत्प्रवर्तको वासुदेवव्यूहोऽपि तुरीयशब्देनोच्यते। ननु वासुदेवस्य मूर्तसच्चिदानन्दघनत्वात्तुरीयातीतत्वमपि स्यात्।' पूर्वं सकलप्राकृतावस्थातीतमूर्तसच्चिदानन्दत्वस्यैव तुरीयातीतत्वे प्रयोजकत्वस्य व्युत्पादनादितिवाच्यम्। तथात्वेऽपि तस्यांशरूपत्वेन सातिशयत्वात्, तत्र मूलरूपवन्निरतिशयाशेषगुणशक्त्यादिस्फूरणाभावात्। अमूर्तानन्दरूपतुरीयवत् मूलरूपशेषभूतत्वाच्च व्यूहात्मना तुरीयत्वमेव नतु तुरीयातीतत्वं पुरुषोत्तमात्मना तु तुरियातीतत्वमपीष्टमेवेति।

तुरीयातीतस्तु द्विभुजचतुर्भुजात्मको मूलरूपः श्रीसहितः कृष्ण एव। तत्रापि द्विभुजो मुख्यः। चतुर्भुजस्तु तत्समधर्म्मा तस्यैव प्रथमोऽवतारः। इतरेषां सर्वावताराणामवतारी च। स एव 'वासुदेवः संकर्षणः प्रद्युम्नश्चानिरुद्धकः। नारायण इति ख्यातः पदपंचात्मकः परः' इति गौतमीयतंत्रे पंचपदीविद्यावयवदेवत्वेनोक्त इति। तत्रैव व्युत्पादितम्॥ अन्तर्य्यामी'ति निरुक्तदिशा तुरीयस्य तुरीयावस्थापन्नानां कैवल्यमुक्तानां जीवानां' तुरीयातीतावस्थापन्नानां नित्यमुक्तानां बद्धमुक्तानां च भगवत्परमसाम्यं भजतांच, अन्तर्य्यामीत्यर्थ;। भगवत्परमसाम्यंभजतां परमधाम्नि गतानां भक्तानामन्तर्य्यामित्वं तुरीयातीतश्री-

पुरुषोत्तमस्यैव, प्राज्ञस्य तु प्रापंचिकान्तर्य्यामित्वमित्यपि बोध्यम्।

एवं भगवत्परमसाम्यं प्राप्तानामत एव जाग्रदाद्यवस्थाचतुष्टयातीतानां शक्तीनां नित्यमुक्तानां बद्धमुक्तानामपि च तुरीयातीतत्वमेव बोध्यम्। अतएव, 'त्रिपुरा परिसेविता, इतिराधासहस्रनाम्नि "त्रिपुरादिचतुःशक्तिः सगणा तत्र पूज्यते" इति पुरुषार्थबोधिन्युपनिषदि गोपालपीठावरणे पूज्यत्वेनोक्ताया पीठाधिष्ठातृदेव्यास्त्रिपुरसुन्दर्य्या अपि तुरीयातीतत्वं त्रिपुरातापिन्यामुपदिश्यते इति। नचैवं व्यूहानामपि परमधामगतानां श्री योगपीठस्यावरणे सेव्यमानानां तुरीयातीतत्वं स्यात्। तथाच पूर्वं तेषां जाग्रदाद्यभिमानिविश्वादिकथनं विरुद्ध्यते इतिवाच्यं परमधामगतां तेषां स्वरूपतस्तुरीयातीतत्वेऽपिकार्य्यतो जाग्रदाद्यभिमानित्वाद् विश्वादिरूपत्वं प्रपंचान्तर्गतानां तु सुतरां विश्वादिरूपत्वमिति।

यत्तु तत्त्वप्रदीपिकाकृता 'योऽसौ जाग्रदाद्यवस्थात्रयमतीत्य अतिक्रम्य तुरीयो वासुदेवस्तं, अतिशयेनेतः प्राप्तस्तद्रूपीत्यर्थः 'युगानुवर्त्तिनो लोका यजन्ती ह सुमेधसः। गोपालं सानुजं रामरुक्मिण्या सहतत्परम्। गोपालोहमजो नित्यः प्रद्युम्नोऽहं सनातनः। रामोऽहमनिरुद्धोऽहमात्मानं चार्चयेद्बुधः" इत्यादिना पूर्वं वासुदेवस्यैव गोपालत्वेनोक्तेः। "चतुर्विभक्तः पुरुषः स क्रीडति यथेच्छति;" "व्यूह्यात्मानं चतुर्धा वै वासुदेवादिमूर्तिभिः। सृष्ट्यादीनि करोत्येष विश्रुतात्मा जनार्दनः।' इत्यादिवचनैर्भगवतः पुरुषोत्तमस्य श्रीवासुदेवस्य चतुर्व्यूहात्मत्वात्' इति तदनवधानविजृंभितमेव स्वसम्प्रदायविरुद्धंच। अतिशयेनेतः प्राप्तः, अतीतः। एतादृशार्थेऽतीतशब्दप्रयोगादर्शनात्। लोकवेदातीतो क्षराक्षरातीतो वागतीत इत्यादौ सर्वत्र अतिक्रम्य गतस्ततोर्ध्वं स्थितः; एतादृशार्थस्यैव 'यस्मात्क्षरमतीतोऽहम्' इत्यादिगीतादिवाक्ये दर्शनात् व्युत्पत्तिबलेनाप्रसिद्धार्थकल्पने प्रसिद्धार्थपरित्यागे, प्रयोजनबीजाभावात्। 'तुरीयाद्यतिरिक्तं त्वामि' त्यादिजितंतेस्तोत्रादिवाक्यस्य मदुक्तार्थ एव स्वारस्याच्च। तुरीयातिरिक्तपदस्य कदाचिदपि तुरीयप्राप्तार्थकत्वासंभवाच्च।

किंच—योगपीठप्रस्तावे-'अंगवासुदेवादिरुक्मिण्यादि' इत्यंशेन वासुदेवव्यूहस्य मूलरूपांगत्वमेवोक्तम् । अंगत्वमंशत्वम् 'हस्तादीनि शरीरस्यांगानि' इत्यादौ तथा दर्शनात् । अतएव वासुदेवव्यूहस्यापि संकर्षणादिव्यूहवत् द्वितीयावरण एव तत्र पूजा विहिता नतु कर्णिकायाम् । भवतापि तद्व्याख्यायाम् 'द्वितीयं-वासुदेवादि इत्यत्र पूर्वादिदलेषु यथाक्रमं वासुदेवसंकर्षणप्रद्युम्नानिरुद्धान् पूजयेत्—इत्येवमेव व्याख्यातत्वाच्च । अतएव च "इहापि ओं श्रीकृष्णाय देवकीनन्दनाय" इत्यनेन देवकीनन्दनपदवाच्यस्य वासुदेवस्य कृष्णांशत्वमुक्त्वा "ओंश्रीगोपालाय निजस्वरूपाय' इत्यनेन गोपालस्य ततोऽधिकत्वाय । स्वसाक्षात्स्वरूपत्वेन चोपदिशति । तेन मूलरूपस्य श्रीगोपालस्य व्यूहवासुदेवभिन्नत्वमेव निश्चीयते व्यूहान्तरभिन्नत्ववत् । यदि भवदुक्तदिशा तयोरैक्येतात्पर्य्यं स्यात्तर्हि "श्रीकृष्णाय देवकीनन्दनाय" "गोपालायनिजस्वरूपाय" इति द्वयं न वदेत् । एकेनैव चारितार्थ्यात् । देवकीनन्दने निजस्वरूपत्वमि विशेषयेत्' गोपाल एव तन्न विशेषयेच्च । यदुक्तं 'युगानुवर्त्तिनो लोका' इत्यादि । तदपि तत्रैव समाहितम् । इति नेह तन्यते । यदप्युक्तम् "चतुर्विभक्तः पुरुषः' इत्यादि तदपि न भवदनुकुलम् । तत्र वासुदेवपदस्य प्राधान्याभावेन मूलरूपसमर्पकत्वाभावात् पुरुषजनार्दनपदयोरेव मूलरूपसमर्पकत्वाच्च । एवंच पुरुषो जनार्दनः आत्मानं निजस्वरूपं वासुदेवादिमूर्तिभिः चतुर्धा विभज्य यथेच्छति तथा क्रीडति इति तदर्थः । तेन वासुदेवाद्याश्चत्वारो व्यूहास्तस्यैव परमपुरुषस्य जनार्दनस्य इत्येव प्रतिपाद्यते नतु व्यूहातीता मूलरूपः प्रतिषिद्ध्यते येन भवदुक्तं सिद्ध्येत् । सर्वसिद्धान्तविरोधश्च । वेदान्तरत्नमंजूषायां व्यूहांगिनर्मिति व्याख्याने श्रीपुरुषोत्तमाचार्य्यै र्वासुदेव व्यूहस्यापि व्यूहान्तरवत्, मूलरूपांगत्वेनैव निरूपणात् । यच्च 'वासुदेवो वा इदमग्र आसीत्' इत्यादौ मूलरूपे प्रयुज्यते वासुदेवशब्दः स न व्यूहाभिप्रायेणापितु व्यूहातीतमूलरूपाभिप्रायेणैव । यथा वैभवप्रसंगे केशवादिशब्दोवैभववाचकोऽपि न सर्वत्र वैभववाचकः । अत एव मूल-

रूपेऽपि प्रयुज्यते। तथा वासुदेवशब्दोऽपि बोध्यः। तेन कचिद्गोपालरूपे वासुदेवशब्दप्रयोगेऽपि न क्षतिः । अधिकं तु 'यत्राऽसौसंस्थितः कृष्णः स्त्रीभिः स शक्त्या समन्वितः, इत्येतस्य व्याख्याने द्रष्टव्यमिति । कल्पविशेषेत्रिव्यूहादिपक्षे सामान्यतो वासुदेवस्य मूलरूपत्वाभिधानेऽपि न क्षतिः । तदानीमनिरुद्धप्रद्युम्नसंकर्षणानामेव व्यूहरूपत्वात् । त्रिव्यूहादिपक्षस्तु कल्पभेदमाश्रित्य व्याख्यातो महाभारते नारायणीये-"एकव्यूहविभागो वा कचिद्द्विव्यूहसम्मतः । त्रिव्यूहश्चापि कथितश्चतुर्व्यूहश्च दृश्यते" इत्यादिनेति । तापिन्यां तु चतुर्व्यूहपक्ष एव सम्मतः इति वासुदेवोपि व्यूह एवात एवांशात्, अंशो तु तदतिरिक्तः श्रीपुरुषोत्तमो गोपालाख्य एवेति बोध्यम् ।

मू० एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥१०६॥ रुद्राय नमः, आदित्याय नमः, विनायकाय नमः, सूर्य्याय नमः, विद्यायै नमः, इन्द्राय नमः, अग्नये नमः यमाय नमः, निर्ऋतये नमः, वरुणाय नमः, मरुते नमः, कुबेराय नमः समेशानाय नमः, ब्रह्मणे नमः, सर्वेभ्यो देवेभ्यो नमः ॥१०७॥ दत्त्वा स्तुतिं पुण्यतमां ब्रह्मणे स्वस्वरूपिणे । कर्तृत्वं सर्वभूतानामन्तर्धाने वभूव सः ॥१०८॥ ब्रह्मणो ब्रह्मपुत्रेभ्यो नारदाच्च श्रुतं तथा । तथा प्रोक्तं हि गान्धर्विं ? गच्छ स्वालयांतिकम् ॥१०६॥ ओं भद्रं कर्णेभिरिति शान्तिः ।

॥ इत्यथर्ववेदीय गोपालतापिन्युपनिषद् समाप्ता ॥

अथोभयतापिन्यर्थमुपसंहरति । 'एको देव' इत्यादि । एको देवः गोपालाख्यकृष्ण एव । सर्वभूतेषु गूढः स एव । कर्माध्यक्षः स एव । सर्वभूताधिवासः स एव । साक्षी स एव । चेता स एव । केवलः स एव । निर्गुणः स एव । न ततो व्यतिरिक्तः कश्चिदित्यक्षरार्थः । चकारोऽनुक्तसकलब्रह्मधर्मसमुच्चायकः । एककालावच्छेदेनैव एकस्वरूपेणैव तादृशसकलधर्मसमुच्चायको वा । धर्मान्तराणामुपलक्षणमिदन्तथाच एतेषां धर्माणां, धर्मान्तराणामप्युपलक्षकत्वान्न काचिन्न्यूनतेति । एतेन 'चक्षुः श्रोत्रं क उ देवो युनक्ति ॥' केनं ख० १ ॥ कस्तं मदामदं देवंमदन्यो ज्ञातुमर्हति । कठ० अ० १-१-२ भ० २१ ॥ 'ज्ञात्वा देवं मुच्यते सर्वपाशैः 'तंदुर्दशं गूढमनुप्रविष्टं गुहाहितम् । ( क० ३० ) महान्तं विभुमात्मानम्' ॥ क० ॥ स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्योदेवएकोनारायणः' सुबा० ८ 'एष एव साधु कर्मकारयति यमूर्ध्वमुन्निनीषति एष ह्येवासाधु कर्मकारयति यमधो निनीषति' । 'योऽस्याध्यक्षः परमेव्योमन्' 'प्राणस्य प्राणमुतचक्षुषः चक्षुः' सलिल एकोद्रष्टा 'अस्थूलमनणु' ॥ इत्याद्युपक्रमोदाहृतश्रुतिवाक्यानां विषय एष स्वसमानाभ्यधिकशून्यो देवः श्रीकृष्ण एव । 'तं दुर्दशं गूढमनुप्रविष्ट'' गुहाहितं गह्वरेष्ठंपुराणम् । इत्यदिश्रुतिवाक्यानां विषयः—सर्वभूतेषु गूढतया वर्तमानः । ''महान्तं विभुमात्मानम्'' इत्यादिश्रुतिवाक्यायां विषय –'विभुः' सर्वव्यापी–'स एष सर्वभूतान्तरात्मा दिव्योदेव एको नारायणः' 'स एष आत्माऽन्तर्यास्यमृतः इत्यादिश्रतिवाक्यानां विषयः सर्वान्तर्यामी। एष ह्येव साधु कर्म कारयति तं यमेभ्योलोकेभ्य उन्निनीषति, एष उ एवासाधु कर्म कारयति यमधो निनीषति' इत्यादि श्रुत्युक्तसर्वकर्मकारयिता फलदश्च । 'यो अस्या ऽध्यक्षः परमे व्योमन् इत्यादिश्रुतिविषयः सर्वाध्यक्षः 'सलिल एको द्रष्टाऽद्वैतः' अस्थूलमनणु इत्यादि श्रुतिप्रतिपाद्यः 'केवलो-निर्गुणश्च श्रीकृष्ण एव नान्य' इति परमार्थः । एतेन सर्वाण्येव श्रुतिवाक्यानि परमतत्त्वप्रतिपादकानि श्रीकृष्णपराण्येव नान्यपराणीत्युपसं

हृतानि । तस्मात् "कृष्णो वै परमं दैवतम्" इति उपक्रमे प्रतिपादितार्थः सोपपत्तिकमुपसंहृतः । "गोविन्दान्मृत्युर्बिभेति" । इत्यादिप्रतिज्ञात्रयंतु परमदेवत्वप्रतिज्ञाया एव शेषभूतत्वादत्रैवान्तर्भूतत्वाच्च न स्वशब्देन न पृथगुपसंहृतमिति बोध्यम् ।

अथ—ये नित्यमुक्ताः साधनमुक्ताश्च परेधाम्नि श्रीभगवन्तं परिचरन्ति तेऽपि श्रेयःकामैर्नमस्करणीया इत्यभिप्रायेण कांश्चिद्भगवद्धामस्थितान्नित्यमुक्तान्, श्रुतिः स्वयं नमस्करोति परेषां शिक्षणाय "रुद्राय नमः" इत्यादि पंचदशभिर्मन्त्रैः 'रुद्राय' एकादशव्यूहात्मने। आदित्याय, द्वादशव्यूहात्मने सूर्याय, व्यूहिने । 'समेशानाय' व्यूहिने रुद्राय, इत्यर्थः। शेषंस्पष्टम् । रुद्रेभ्य इत्याद्यनुक्त्वा एकवचनान्तप्रयोगात् सर्वत्र विशेष्यतया श्रीकृष्णान्वयः सूच्यते । तेन एकादशव्यूहरुद्रात्मनेश्रीकृष्णायनमः इत्येवमर्थः सूचितो भवति । तथाच तेऽपि भगवद्भावेनैव नमस्कार्य्या भगवत्प्रपन्नैर्नतु स्वातंत्र्येणेत्युक्तं भवतीति बोध्यम् ।। अथ विद्यापरम्परामाह 'ब्रह्मणे ब्रह्मपुत्रेभ्य' इत्यादि । श्रीभगवान् ब्रह्मणे हिरण्यगर्भाय प्रोवाच । ब्रह्मा स्वपुत्रेभ्यः श्रीसनकादिभ्यः । सनकादयो नारदाय । नारदो दुर्वाससे । दुर्वासा गोपीभ्य इति विद्यापरंपरा बोध्येति ।

इदन्तिवहावधेयम् । अस्याः समग्रतापिनीब्रह्मविद्याया महावाक्यंक्लीं कृष्णायेत्यादिपञ्चपदीमन्त्र एव । अतो गोपालतापिन्यर्विधेय तुरीयातीतश्रीपुरुषोत्तमपरमदेवपरमानुभूत्यर्थं तन्मन्त्रद्वारैव स भगवाच्छरणीकरणीयः, यथाविधिगुरोःसकाशान्मत्रं प्राप्य ऋष्यादिस्मरणपूर्वकं मन्त्रार्थानुसंधानपूर्वकं जपनीयश्चेति । तावतापि क्रमेण भगवत्कृपया भगवद्भावप्राप्तिः स्यादिति । तदुक्तं तत्प्रकरण एव पूर्वतापिन्यां "पञ्चांगं जपन् ब्रह्म सम्पद्यते" सकृदावर्तयेद्योऽसौ मंक्षु नान्या गतिः स्यादिति" इत्यादि । तत्र द्विजातिभिः स्वशाखोक्तप्रकारेण मूलमंत्रकल्पोक्तप्रकारेणच स्नानं विधाय, स्वशाखोक्तसन्ध्यां विधाय मंत्रकल्पोक्तं संध्यां तर्पणं च विधाय भूतशुद्धिं प्राणप्रतिष्ठां मातृकान्यासं केशवादिन्यासं तत्त्व-

